तद्विकाराणां तु महदादीनां तान्यपि न सन्ति। न च भूतेन्द्रियादिवन्महदादयो लोकसिद्धाः। तस्मादात्यन्तिकात् प्रमाणान्तरासंवादात् प्रमाणमूलत्वाच्च स्मृतेर्मूलाभावादभावो वन्ध्याया इव दौहित्रस्मृतेः। न चार्थज्ञानमत्र मूलमुपपद्यत इति युक्तम्। तस्मान्न कापिलस्मृतेः प्रधानोपादानत्वं जगत इति सिद्धम् ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहङ्कारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते। न चैतावतैषामप्रामाण्यं भवितुमर्हति। यत्पराणि हि तानि तत्राप्रामाण्येऽप्रामाण्यमश्नुवीरन्। न चैतानि प्रधानादिसद्भावपराणि। किन्तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि। तच्च किञ्चिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतं पुराणेष्विव सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितं तत्प्रतिपादनपरेषु, न तु तद्विवक्षितम्। अन्यपरादपि चान्यन्निमित्ततः प्रतीयमानमभ्युपेयेत, यदि न मानान्तरेण विरुध्येत। अस्ति तु वेदान्तश्रुतिभिरस्य विरोध इत्युक्तम्। तस्मात् प्रमाणभूतादपि योगशास्त्रान्न प्रधानादिसिद्धिः। अत एव योगशास्त्रं व्युत्पादयिताऽऽह स्म भगवान् वार्षगण्यः।

'गुणानां परमं रूपं न दृष्टिपथमृच्छति।

यत्तु दृष्टिपथप्राप्तं तन्मायेव सुतुच्छकम्' ॥ इति ॥

योगं व्युत्पिपादयिषता निमित्तमात्रमिह गुणा उक्ता, न तु भावतः, तेषामतात्त्विकत्वादित्यर्थः। अलीकाभिधाना-

मपि प्रधानादीनामनादिपूर्वपक्षन्यायाभासोपक्षिप्तानामनुवाद्यत्वमुपपन्नम्। तदनेनाभिसन्धिनाह। "एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि" प्रधानादिविषयतया "प्रत्याख्याता द्रष्टव्या" इति। अधिकरणान्तरारम्भमाक्षिपति। "नन्वेवं सति समानन्यायत्वात्" इति। समाधत्ते। "अस्त्यत्राभ्यधिका शङ्का"। मा नाम सांख्यशास्त्रात् प्रधानसत्ता विज्ञायि। योगशास्त्रात्तु प्रधानादिसत्ता विज्ञापयिष्यते। बहुलं हि योगशास्त्राणां वेदेन सह संवादो दृश्यते। उपनिषदुपायस्य च तत्त्वज्ञानस्य योगोपेक्षास्ति। न जातु योगशास्त्रविहितं यमनियमादिबहिरङ्गमुपायमपहायान्तरङ्गं च धारणादिकमन्तरेणौपनिषदात्मतत्त्वसाक्षात्कार उदेतुमर्हति। तस्मादौपनिषदेन तत्त्वज्ञानेनापेक्षणात् संवादबाहुल्याच्च वेदेनाष्टकादिस्मृतिवद्योगस्मृतिः प्रमाणम्। ततश्च प्रमाणात् प्रधानादिप्रतीतेर्निरागस्त्वम्। न च तदप्रमाणं प्रधानादौ, प्रमाणञ्च यमादाविति युक्तम्। तदप्रामाण्येऽन्यत्राप्यनाश्वासात्। यथाहुः।

'प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरम्'॥ इति।

सेयं लब्धप्रसरा प्रधानादौ योगाप्रमाणतापिशाची सर्वत्रैव दुर्वारा भवेदित्यस्याः प्रसरं निषेधता प्रधानाद्यभ्युपेयमिति सांख्यं प्रधानमिति शङ्कार्थः। सा "इयमभ्यधिकाशङ्कातिदेशेन निवर्त्यते"। निहन्तुमाह। "अर्थैकदेशसम्प्रतिपत्तावपि" इति। यदि प्रधानादिसत्तापरं योगशास्त्रं भवेत्, भवेत् प्रत्यक्षवेदान्तश्रुतिविरोधेनाप्रमाणम्। तथा च सहैव तेन यमादिष्वप्यनाश्वासः स्यात्। तस्माच्च प्रधानादिपरं तत्, किन्तु तदभिसन्धीकृतस्य योगस्योपादानपर-

मित्युक्तम्। न चाविषयेऽप्रामाण्यं विषयेऽपि प्रामाण्यमुपहन्ति। नहि चक्षूरसादावप्रमाणं रूपेऽप्यप्रमाणं भवितुमर्हति। तस्माद्वेदान्तश्रुतिविरोधात् प्रधानादिरस्याविषयो न त्वप्रामाण्यमिति परमार्थः। स्यादेतत्। यथाऽस्याविषयाः सन्ति सहस्रं स्मृतयो बौद्धार्हतकापालिकादीनां, ता यतिकस्मान्न निराक्रियन्त इत्यत आह। "सतीष्वपि" इति तासु खलु बहुलं वेदार्थविसंवादिनीषु शिष्टानादृतासु कैश्चिदेव तु पुरुषापसदैः पशुप्रायैर्म्लेच्छादिभिः परिगृहीतासु वेदमूलत्वाशङ्कैव नास्तीति न निराकृताः, तद्विपरीतास्तु सांख्ययोगस्मृतय इति ताः प्रधानादिपरतया व्युदस्यन्त इत्यर्थः। "न सांख्यज्ञानेन वेदनिरपेक्षेण" इति। प्रधानादिविषयेणेत्यर्थः। "इतिनो हि ते सांख्या योगाश्च" ये प्रधानादिपरतया तच्छास्त्रं व्याचक्षत इत्यर्थः। संख्या सम्यग्बुद्धिर्वैदिकी तया वर्त्तन्त इति सांख्याः। एवं योगो ध्यानमुपायोपेययोरभेदविवक्षया, चित्तवृत्तिनिरोधो हि योगस्तस्योपायो ध्यानं प्रत्ययैकताननता। एतच्चोपलक्षणम्। यमोऽपि यमनियमादयो बाह्या आन्तराश्च धारणादयो योगोपाया द्रष्टव्याः। एतेनाभ्युपगतवेदप्रामाण्यानां कणभक्षाक्षचरणादीनां सर्वाणि तर्कस्मरणानीति योजना। सुगममन्यत्।

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

अवान्तरसङ्गतिमाह। "ब्रह्मास्य जगतो निमित्तकारणं प्रकृतिश्चेत्यस्य पक्षस्य" इति। चोदयति। "कुतः पुनः" इति समानविषयत्वे हि विरोधो भवेत्। न चेहास्ति समानविषयता, धर्मवद् ब्रह्मणोऽपि मानान्तराविषयतयाऽतर्क्यत्वेन तर्कानवगम्यत्वाच्चाम्नायैकगोचरत्वादित्यर्थः। समाधत्ते। "भवेदयं" इति।

मानान्तरस्याविषयः सिद्धवस्त्ववगाहिनः।
धर्मोऽस्तु कार्य्यरूपत्वाद् ब्रह्म सिद्धं तु गोचरः॥

तस्मात्समानविषयत्वादस्त्यत्र तर्कस्यावकाशः। नन्वस्तु विरोधः, तथापि तर्कादरे को हेतुरित्यत आह। "यथा च श्रुतीनाम्" इति। सावकाशा बह्व्योऽपि श्रुतयोऽनवकाशैकश्रुतिविरोधे तदनुगुणतया यथा नीयन्ते एवमनवकाशैकतर्कविरोधे तदनुगुणतया बह्व्योऽपि श्रुतयो गुणकल्पनादिभिर्व्याख्यानमर्हन्तीत्यर्थः। अपि च ब्रह्मसाक्षात्कारो विरोधितयाऽनादिमविद्यां निवर्त्तयन् दृष्टेनैव रूपेण मोक्षसाधनमिष्यते, तत्र ब्रह्मसाक्षात्कारस्य मोक्षसाधनतया प्रधानस्यानुमानं दृष्टसाधर्म्येणादृष्टविषयं विषयतोऽन्तरङ्गं, बहिरङ्गं त्वत्यन्तपरोक्षगोचरं शाब्दं ज्ञानं तेन प्रधानप्रत्यासत्त्याप्यनुमानमेव बलीय इत्याह। "दृष्टसाधर्म्येण च" इति। अपि च श्रुत्यापि ब्रह्मणि तर्क आदृत इत्याह। "श्रुतिरपि" इति। सोऽयं ब्रह्मणो जगदुपादानत्वाक्षेपः पुनस्तर्केण प्रस्तूयते।

प्रकृत्या सह सारूप्यं विकाराणामवस्थितम्।
जगद्ब्रह्मसरूपञ्च नेति नो तस्य विक्रिया॥
विशुद्धं चेतनं ब्रह्म जगज्जडमशुद्धिभाक्।
तेन प्रधानसारूप्यात् प्रधानस्यैव विक्रिया॥

तथाहि। एक एव स्त्रीकायः सुखदुःखमोहात्मकतया त्सुख सपत्नीनाञ्च चैत्रस्य च चैत्रस्य तामविन्दतोऽपध्यायतः दुःखविषादावादधत्ते। अनया च सर्वे भावा व्याख्याताः। तस्मात् सुखदुःखमोहात्मतया च स्वर्गनरकोच्चावचप्रपञ्चतया च जगदशुद्धमचेतनञ्च, ब्रह्म तु चेतनं विशुद्धं च, निरतिशयत्वात्। तस्मात् प्रधानस्याशुद्धस्याचेतनस्य विकारो जगन्न तु ब्रह्मण इति युक्तम्। ये तु चेतनब्रह्मविकारतया जगच्चैतन्य-

माहुस्तान् प्रत्याह। "अचेतनं चेदं जगत्" इति। व्यभिचारं चोदयति। "ननु चेतनमपि" इति। परिहरति। "न स्वामिभृत्ययोरपि" इति। ननु मा नाम साक्षाच्चेतनश्चेतनान्तरस्योपकार्षीत्, तत्कार्यंकरबुद्ध्यादिनियोगद्वारेण तूपकरिष्यतीत्यत आह। "निरतिशया ह्यकर्त्तारश्चेतनाः" इति। उपजनापायवद्धर्मयोगोऽतिशयः, तदभावो निरतिशयत्वम्। अत एव निर्व्यापारत्वादकर्त्तारस्तस्मान्नैषां बुद्ध्यादिप्रयोक्तृत्वमपि नास्तीत्यर्थः। चोदकोऽनुशयबीजमुद्घाटयति। "योऽपि" इति। अभ्युपेत्यापाततः समाधानमाह। "तेनापि कथञ्चित्" इति। परमसमाधानं तु सूत्रावयवेन वक्ष्यन् तमवतारयति। "न चैतदपि विलक्षणत्वम्" इति। सूत्रावयवाभिसन्धिमाह। "अनवगम्यमानमेव हीदम्" इति। शब्दार्थात् खलु चेतनप्रकृतित्वाच्चैतन्यं पृथिव्यादीनामवगम्यमानमुपोद्बलितं मानान्तरेण साक्षात्क्रियमाणमप्यचैतन्यमन्यथयेत्। मानान्तराभावे त्वार्थोऽयः मुख्यर्थनापबाधनीयः न तु तद्बलेन मुख्यार्थोऽन्यथयितव्य इत्यर्थः॥ सूत्रान्तरम् .र-यितुं चोदयति। "ननु चेतनत्वमपि क्वचित्" इति। न पृथिव्यादीनां चैतन्यमार्थमेव, किन्तु भूयसीनां श्रुतीनां साक्षादेवार्थ इत्यर्थः। सूत्रमवतारयति। "अत उत्तरं पठति"॥

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥

विभजते। "तुशब्दः" इति। नैताः श्रुतयः साक्षान्मृदादीनां वागादीनाञ्च चैतन्यमाहुः, अपि तु तदधिष्ठात्रीणां देवतानां चिदात्मनां, तेनैतच्छ्रुतिबलेन न मृदादीनां वागादीनाञ्च चैतन्यमाशङ्कनीयमिति। कस्मात् पुनरेतदेवमित्यत आह। "विशेषानुगतिभ्याम्"। तत्र विशेषं व्याचष्टे। "विशेषो हि" इति। भोक्तृणामुपकार्यत्वाद् भूतेन्द्रियाणां

चोपकारकत्वात् साम्ये च तदनुपपत्तेः सर्वजनप्रसिद्धेव 'विज्ञानं चाभवत्' इति श्रुतेश्च विशेषचेतनाचेतनलक्षणः प्रागुक्तः स नोपपद्यते । देवताशब्दकृतो वात्र विशेषो विशेषशब्देनो-च्यत इत्याह । "अपि च कौषीतकिनः प्राणसंवादः" इति । अनुगतिं व्याचष्टे । "अनुगताश्च" इति । सर्वत्र भूतेन्द्रिया-दिष्वनुगता देवता अभिमानिन्योऽग्न्यादिशब्दाः मन्त्रादयः । अपि च 'भूयस्थः श्रुतयोऽग्निर्वाग् भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादय इन्द्रियविशेषगता देवता दर्शयन्ति । देवताश्च स्वव्यक्तिभेदाश्चेतनाः । तस्मादिन्द्रियादीनां चैतन्यं रूपत इति । अपि च प्राणसंवादवाक्यशेषे प्राणानामस्मदादिश-रीराणामिव स्वव्यक्ताधिष्ठितानां व्यवहारं दर्शयन् प्राणानां स्वव्यक्ताधिष्ठानेन चैतन्यं द्रढयतीत्याह । "प्राणसंवादवाक्य-शेषे च" इति । "तत्तेज ऐक्षतेत्यपि" इति । यद्यपि प्रथमे-ऽध्याये भाक्तत्वं न वर्णितं तथापि मुख्यतयापि कथञ्चिन्नेतुं शक्यमिति द्रष्टव्यम् । पूर्वपक्षमुपसंहरति । "तस्मात्" इति । सिद्धान्तसूत्रम् ।

## दृश्यते तु ॥ ६ ॥

प्रकृतिविकारभावे हेतुं सारूप्यं विकल्प्य दूषयति । "अत्यन्तसारूप्ये च" इति । प्रकृतिविकारभावाभावहेतुं वैल-क्षण्यं विकल्प्य दूषयति । "विलक्षणत्वेन च कारणेन" इति । सर्वस्वभावाननुवर्तनं प्रकृतिविकारभावाविरोधि । तदनु-वर्तने नादात्मत्व प्रकृतिविकारभावाभावात् । मध्यमस्त्व-सिद्धः । तृतीयस्तु निदर्शनाभावादसाधारण इत्यर्थः । अथ जगद्योनितयाऽऽगमाद्ब्रह्मणोऽवगमादागमबाधितविषयत्वमनु-

मानस्य प्रमाणोत्पाद्यत इत्यत आह। "आगमविरोधस्तु" इति। न खल्वयमागमैकसमधिगमनीये ब्रह्मणि प्रमाणान्तरस्यावकाशोऽस्ति येन तदुपादायागम आक्षिप्येतेत्यभिप्रायवानाह। "यत्तूक्तं परिनिष्पन्नत्वाद्ब्रह्मणि" इति। यथा हि कार्य्यत्वाविशेषेऽप्यारोग्यकामः पथ्यमश्नीयात् स्वर्गकामः सिकतां भक्षयेदित्यादीनां मानान्तरापेक्षता, न तु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादीनां, तत्कस्य हेतोः, अस्य कार्य्यभेदस्य प्रमाणान्तरागोचरत्वात्। एवं भूतत्वाविशेषेऽपि पृथिव्यादीनां मानान्तरगोचरत्वं, न तु भूतस्यापि ब्रह्मणः, तस्याम्नायैकगोचरस्यातिपतितसमस्तमानान्तरसीमतया श्रुत्यागमसिद्धत्वादित्यर्थः। यदि श्रुत्यागमसिद्धं ब्रह्मणस्तर्काविषयत्वं, कथं तर्हि श्रवणातिरिक्तमननविधानमित्यत आह। "यदपि श्रवणव्यतिरेकेण" इति। तर्को हि प्रमाणविषयविवेचकतया तदितिकर्तव्यताभूतस्तदाश्रयोऽसति प्रमाणेऽनुपादानस्याश्रयस्याभावात् शुष्कतया नाद्रियते। यस्त्वागमप्रमाणाश्रयस्तद्विषयविवेचकस्तदविरोधी स मन्तव्य इति विधीयते। "श्रुत्यनुगृहीत" इति। श्रुत्या श्रवणस्य पश्चादितिकर्तव्यतात्वेन गृहीतः "अनुभवाङ्गत्वेन" इति। मतो हि भाव्यमानो भावनाया विषयतयाऽनुभूतो भवतीति मननमनुभवाङ्गम्। "आत्मनोऽनन्वागतत्वम्" इति। स्वप्नाद्यवस्थाभिरसंपृक्तत्वमुदासीनत्वमित्यर्थः। अपि च चेतनकारणवादिभिः कारणमात्रलक्षणेऽपि कार्य्यस्य कथञ्चिच्चैतन्याविर्भावानाविर्भावाभ्यां विज्ञानं चाविज्ञानं चाभवदिति जगत्कारणे योजयितुं शक्यम्। अचेतनप्रधानकारणवादिना तु दुर्योजमेतत्। नह्यचेतनस्य जगत्कारणस्य विज्ञानरूपता सम्भविनी, चेतनस्य जगत्कारणस्य सुषुप्ताद्यवस्थास्विव सतोऽपि चैतन्यस्यानाविर्भावतया शक्यमेव कथञ्चिदविज्ञा-

नासत्त्वं योजयितुमित्याह । "योऽपि चेतनकारणश्रवणबलेन" इति । परस्यैव त्वचेतनप्रधानकारणवादिनः सांख्यस्य न युज्येत । "प्रत्युक्तत्वात्तु वैलक्षण्यस्य" इति । वैलक्षण्ये कार्य्यकारणभावो नास्तीत्यभ्युपेत्येदमुक्तम् । परमार्थतस्तु नास्माभिरेतदभ्युपेयत इत्यर्थः ।

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

न कारणात्कार्य्यमभिन्नमभेदे कार्य्यत्वानुपपत्तेः । कारणवत्स्वात्मनि वृत्तिविरोधात् शुद्धाशुद्धादिविरुद्धधर्मसंसर्गाच्च । यथ चिदात्मनः कारणस्य जगतः कार्य्याद्भेदः, तथा चेदं जगत्कार्य्यं सत्त्वेऽपि चिदात्मनः कारणस्य प्रागुत्पत्तेर्नास्ति, नास्ति चेदसदुत्पद्यतइति सत्कार्य्यवादव्याकोप इत्याह । "यदि चेतनं शुद्धम्" इति । परिहरति । "नैष दोषः" इति । कुतः, "प्रतिषेधमात्रत्वात्" । विभजते । "प्रतिषेधमात्रं हीदम्" इति । प्रतिपादयिष्यति हि तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र । यथा कार्य्यं स्वरूपेण सदसत्त्वाभ्यां न निर्वचनीयम् अपि तु कारणरूपेण शक्यं सत्त्वेन निर्वक्तुमिति । एवं च कारणसत्तैव कार्य्यस्य सत्ता न ततोऽन्येति कथं तदुत्पत्तेः प्राक् सति कारणे भवत्यसत् । स्वरूपेण तूत्पत्तेः प्रागुत्पन्नस्य ध्वस्तस्य वा सदसत्त्वाभ्यामनिर्वाच्यस्य न सतोऽसतो वोत्पत्तिरिति निर्विषयः सत्कार्य्यवादप्रतिषेध इत्यर्थः ।

## अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ॥ ८ ॥

असामञ्जस्यं विभजते । "अत्राह" चोदकः, "यदि स्थौल्य" इति । यथा हि यूषादिषु हिङ्गुसैन्धवादीनामविभागलक्षणो लयः स्वगतरसादिभिर्यूषं रूषयत्येवं ब्रह्मापि विशुद्धादिधर्माणि जगल्लीयमानमविभागं गच्छद्ब्रह्म स्वधर्मेण

दृष्टान्ताभावं परिहरमाह। "यत् पुनरेतदुक्तम्" इति। भोक्त्राद्यात्मनो नियतत्वाद्व्यवस्थाविनियम इत्यर्थः। "यथैव" इति। मिथ्याज्ञानविभागशक्तिप्रतिनियमेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः, कारणाभावे कार्याभावस्य प्रतिनियमात्, तत्त्वज्ञानेन च सशक्तिनो मिथ्याज्ञानस्य समूलघातं निहतत्वादिति॥

स्वपक्षदोषाच्च॥ १०॥

कार्यकारणयोर्विलक्षणत्वं तावत्समानमेवोभयोः पक्षयोः, प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गोऽपीतौ तद्वत्प्रसङ्गश्च प्रधानोपादानपक्ष एव नास्मत्पक्ष इति यद्यप्युपरिष्टान्निपातयिष्यामस्तथापि गुडजिह्विकया समानत्वापादनमिदानीमिति मन्तव्यमिदमस्य पुरुषस्य सुखदुःखोपादानं कर्मशक्तिमाशयादीदमस्येति। सुगममन्यत्॥

तर्काप्रतिष्ठानादपि॥ ११॥

केवलागमगम्येऽर्थे स्वतन्त्रतर्काविषये। न सांख्यादिवत् साधर्म्यवैधर्म्यमात्रेण तर्कः प्रवर्तनीयो येन प्रधानादिसिद्धिर्भवेत्। शुष्कतर्को हि न भवत्यप्रतिष्ठानात्। तदुक्तम्।

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।

अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥ इति।

न च महापुरुषपरिगृहीतत्वेन कस्यचित्तर्कस्य प्रतिष्ठा, महापुरुषाणामेव तार्किकाणां मिथो विप्रतिपत्तेरिति। सूत्रं शङ्कते। "अन्यथानुमेयमिति चेत्"। तद्विभजते। "अन्यथा वयमनुमास्यामहे" इति। नानुमानाभासव्यभिचारेणानुमानव्यभिचारः शङ्कनीयः प्रत्यक्षादिष्वपि तदाभासव्यभिचारेण तत्प्रसङ्गात्। तस्मात् स्वाभाविकप्रतिबन्धवल्लिङ्गानुसरणनिपुणेनानुमात्रा भवितव्यं, ततश्चाप्रत्यूहं प्रधान सेत्स्यतीति

भाव:। अपि च येन तर्केण तर्काणामप्रतिष्ठामाह स एव तर्कः प्रतिष्ठितोऽभ्युपेयस्तदप्रतिष्ठायामितराप्रतिष्ठानाभावादित्याह। "नहि प्रतिष्ठितस्तर्क एव" इति। अपि च तर्काप्रतिष्ठायां सकललोकयात्रोच्छेदप्रसङ्गः। न च श्रुत्यर्थाभासनिराकरणेन तदर्थतत्त्वविनिश्चय इत्याह। "सर्वतर्काप्रतिष्ठायां च" इति। अपि च विचारात्मकस्तर्कस्तर्कितपूर्वपक्षपरित्यागेन तर्कितं राद्धान्तमनुजानाति। सति चैष पूर्वपक्षविषये तर्के प्रतिष्ठारहिते प्रवर्तते, तदभावे विचाराप्रवृत्तेः। तदिदमाह। "अयमेव च तर्कस्यालङ्कारः" इति। तामिमामाशङ्कां सूत्रेण परिहरति। "एवमप्यविमोक्षप्रसङ्गः"। न वयमन्यत्र तर्कमप्रमाणयामः, किन्तु जगत्कारणत्वे स्वाभाविकप्रतिबन्धवत् लिङ्गमस्ति। यत्तु साधर्म्यवैधर्म्यमात्रं, तदप्रतिष्ठादोषान्न मुच्यत इति। कस्मात्तर्काणामिदमपदार्थमाह। "अपि च सम्यग्ज्ञानान्मोक्षः" इति। भूतार्थगोचरस्य हि सम्यग्ज्ञानस्य व्यवस्थितवस्तुगोचरतया व्यवस्थानं लोके दृष्टं, यथा प्रत्यक्षस्य। वैदिकं चेदं चेतनजगदुपादानविषयं विज्ञानं वेदोत्थतर्केतिकर्तव्यताकं वेदजनितं व्यवस्थितं वेदानपेक्षेण तु तर्केण जगत्कारणभेदमवस्थापयतां तार्किकाणामन्योन्यं विप्रतिपत्तेस्तत्त्वनिर्धारणकारणाभावान्न ततस्तत्त्वव्यवस्थेति न ततः सम्यग्ज्ञानम् असम्यग्ज्ञानाच्च न संसाराद्विमोक्ष इत्यर्थः॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः॥ १२॥

न कार्यं कारणादभिन्नमभेदे कारणरूपवत् कार्यत्वानुपपत्तेः, कारणत्वानुपपत्तेश्च। अभूतप्रादुर्भावनं हि तदर्थः। न चास्य कारणात्मत्वे किञ्चिदभूतमस्ति यदस्मयं पुरुषो

यतेत। अभिव्यक्त्यर्थमिति चेत्, न। तस्या अपि कारणात्मत्वेन सत्त्वात्, असत्त्वे वाऽभिव्यक्त्यस्यापि तद्वत् प्रसङ्गेन कारणात्मत्वव्याघातात्। नहि तदेव तदानीमेवास्ति नास्ति चेति युज्यते। किं चेदं मणिमन्त्रौषधमिन्द्रजालं कार्य्यं च शिक्षितं यदिदमत्यन्तानिरुद्धातिशयमव्यवधानमविदूरस्थानं च तस्यैव तदवस्थेन्द्रियस्य पुंसः कदाचित्प्रत्यक्षं परोक्षं च येनास्य कदाचित्प्रत्यक्षमुपलम्भनं कदाचिदनुमानं कदाचिदागमः। कार्य्यान्तरव्यवधानस्य पारोक्ष्यहेतुरिति चेत्, न। कार्य्यजातस्य सदातनत्वात्। अथापि स्यात्कार्य्यान्तराणि पिण्डकपालशर्कराचूर्णकणप्रभृतीनि कुम्भं व्यवदधते, ततः कुम्भस्य पारोक्ष्यं कदाचिदिति। तन्न। तस्य कार्य्यजातस्य कारणात्मनः सदातनत्वेन सर्वदा व्यवधानेन कुम्भस्यात्यन्तानुपलब्धिप्रसङ्गात्। कादाचित्कत्वे वा कार्य्यजातस्य न कारणात्मत्वं, नित्यत्वानित्यत्वलक्षणविरुद्धधर्मसंसर्गस्य भेदकत्वात्। भेदाभेदयोश्च परस्परविरोधेनैकत्र सहासम्भव इत्युक्तम्। तस्मात् कारणात् कार्य्यमेकान्तत एव भिन्नम्। न च भेदे गवाश्ववत् कार्य्यकारणभावानुपपत्तिरिति साम्प्रतम्। अभेदेऽपि कारणरूपवत्तदनुपपत्तेरुक्तत्वात्। अत्यन्तभेदे च कुम्भकुम्भकारयोर्निमित्तकभावस्य दर्शनात्। तस्माद्द्रव्यत्वाविशेषेऽपि समवायभेद एवोपादानोपादेयभावनियमहेतुः। यस्याभूत्वा भवतः समवायस्तदुपादेयं, यत्र च समवायस्तदुपादानम्। उपादानत्वं च कारणस्य कार्य्यादल्पपरिमाणस्य दृष्टं यथा तन्त्वादीनां पटाद्युपादानानां पटादिभ्यो न्यूनपरिमाणत्वम्। चिदात्मनस्तु परममहत उपादानात्स्वस्मादल्पपरिमाणमुपादेयं भवितुमर्हति। तस्माद्य-
वेदमल्पतारतम्यं विश्राम्यति यतो न चाल्पीयः सम्भवति

तस्य जगतो मूलकारणं परमाणुः। क्षोदीयोऽन्तरानन्त्ये तु मेरुराजसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गोऽनन्तावयवत्वादुभयोः। तस्मात् परममहतो ब्रह्मण उपादानादभिन्नमुत्पाद्यं जगत्कार्य्यमभिदधती श्रुतिः प्रतिष्ठितप्रामाण्यतर्कविरोधात् सहस्रसंवत्सरसत्रगतसंवत्सरश्रुतिवत् कथञ्चिदन्यथयित्वा व्याख्येयेत्यधिकं शङ्कमानं प्रति सांख्यदूषणमतिदिशति "एतेन" इति सूत्रेण। अस्यार्थः। कारणात् कार्य्यस्य भेदे तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र निषेत्स्यामः। अविद्यासमारोपणेन च कार्य्यस्य न्यूनाधिकभावमप्यप्रयोजकत्वाद्दूषयिष्यामहे। तेन वैशेषिकाद्यभिमतस्य तर्कस्य शुष्कत्वेनाव्यवस्थितेः। सूत्रमिदं सांख्यदूषणमतिदिशति। यत्र कथञ्चिद्वेदानुसारिभिर्मन्वादिभिः शिष्टैः परिगृहीतस्य सांख्यतर्कस्यैषा गतिस्तत्र परमाण्वादिवादस्यात्यन्तवेदबाह्यस्य मन्वाद्यपरिगृहीतस्य तु कैव कथेति। "केनचिदंशेन" इति। अणुत्वादयो हि व्युत्पाद्यास्ते च किञ्चिद्भेदमद्धा पूर्वपक्षन्यायोपन्यासे चिन्त्यमप्युदाहृत्य व्युत्पाद्यन्त इति केनचिदंशेनेत्युक्तम्। सुगममन्यत्॥

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्॥ १३॥

स्यादेतत्। अतिगम्भीरे जगत्कारणविषये तर्कस्य नास्ति केवलागमगम्यमेतदित्युक्तं, तत् कथं पुनस्तर्कनिमित्त आक्षेप इत्यत आह। "यद्यपि श्रुतिः प्रमाणम्" इति। प्रवृत्ता हि श्रुतिरनपेक्षतया स्वतः प्रमाणत्वेन न प्रमाणान्तरमपेक्षते। प्रवर्तमाना पुनः स्फुटतरप्रतिष्ठितप्रामाण्यतर्कविरोधेन मुख्यार्थात् प्रच्याव्य जघन्यवृत्तितां नीयते, यथा मन्त्रार्थवादा इत्यर्थः। अतिरोहितार्थं भाष्यम्। "यथा त्वद्यत्वे" इति।

यद्यतीतानागतयोः सर्गयोरेव विभागो न भवेत् ततस्तदेवायतनस्य विभागस्य बाधकं स्यात्, स्वप्नदर्शनस्येव जाग्रद्दर्शनं, न त्वेतदस्ति। अबाधितायतनदर्शनेन तयोरपि तथात्वानुमानादित्यर्थः। इमां शङ्कामापाततोऽविचारितलोकसिद्धदृष्टान्तोपदर्शनमात्रेण निराकरोति सूत्रकारः "स्याल्लोकवत्" ॥

परिहाररहस्यमाह ।

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

पूर्वस्मादविरोधादस्य विशेषाभिधानोपक्रमस्य विभागमाह। "अभ्युपगम्य चेमम्" इति। स्यादेतत्। यदि कारणात् परमार्थभूतादनन्यत्वमाकाशादेः प्रपञ्चस्य कार्यस्य कुतस्तर्हि न वैशेषिकाद्युक्तदोषप्रसङ्गावतार इत्यत आह। "व्यतिरेकेणाभावः कार्यस्यावगम्यते" इति। न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु भेदं व्यासेधामः, ततश्च नाभेदाश्रयदोषप्रसङ्गः। किन्त्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति। भेदनिषेधकहेतुं व्याचष्टे। "आरम्भणशब्दस्तावत्" इति। एवं हि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत यदि ब्रह्मैव तत्त्वं जगतो भवेत्। यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति। सा हि तस्य तत्त्वम्। तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव। अत्रैव वैदिको दृष्टान्तः "यथा सौम्यैकेन मृत्पिण्डेन" इति। स्यादेतत्। मृदि ज्ञातायां कथं मृन्मयं घटादि ज्ञातं भवति, नहि तन्मृदात्मकमित्युपपादितमधस्तात्। तस्मात्तत्त्वतो भिन्नं न चान्यस्मिन् विज्ञातेऽन्यद्विज्ञातं भवतीत्यत आह श्रुतिः "वाचारम्भणं विकारो नामधेयम्" वाचया केवलमारभ्यते विकारजातं, न तु तत्त्वतोऽस्ति, यतो नामधेयमात्र-

मेतद्, यथा पुरुषस्य चैतन्यमिति राहोः शिर इति विकल्पमात्रम्। यथाहुर्विकल्पविदः। 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति। तथा चावस्तुतयाऽनृतं विकारजातं मृत्तिकेत्येव सत्यम्। तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदि ज्ञातायां तेषां सर्वेषामेव तत्त्वं ज्ञातं भवति। तदिदमुक्तं "न चान्यथैकविज्ञानेन सर्वविज्ञानं सम्पद्यते" इति। निदर्शनान्तरद्वयं दर्शयन्नुपसंहरति। "तस्माद्यथा घटकरकाद्याकाशानाम्" इति। ये हि दृष्टनष्टस्वरूपा न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः, तथा च सर्वं विकारजातं, तस्मादवस्तु सत्। तथा हि यदस्ति तदस्त्येव, यथा चिदात्मा, नह्यसौ कदाचित् क्वचित् कथञ्चिद्वाऽस्ति, किन्तु सर्वदा सर्वत्र सर्वथास्त्येव, न नास्ति। न नास्ति। न चैवं विकारजातं, तस्य कदाचित् कथञ्चित् क्वचिदवस्थानात्। तथा हि सत्स्वभावं चेद्विकारजातं कथं कदाचिदसत्, असत्स्वभावं चेत् कथं कदाचित् सत्, सदसतोरेकत्वविरोधात्। नहि रूपं कदाचित् क्वचित् कथञ्चिद्वा गन्धो भवति। अथ तस्य सदसत्त्वे धर्मौ, ते च स्वकारणाधीनजन्मतया कदाचिदेव भवतः, तर्हि विकारजातं दृश्यमानं सदसदिति न विकारः कस्यचित्। अथासत्त्वसमये तदास्ति, कस्य तर्हि धर्मोऽसत्त्वम्। नहि धर्मिण्यप्रत्युत्पन्ने तद्धर्मोऽसत्त्वं प्रत्युत्पन्नमुपपद्यते। अथास्य न धर्मः किन्त्वर्थान्तरमसत्त्वं, किमायातं भावस्य। नहि घटे जाते पटस्य किञ्चिद्भवति। असत्त्वं भावविरोधीति चेद्, न। अकिञ्चित्करस्य तस्यानुपपत्तेः किञ्चित्करत्वे वा तत्राप्यसत्त्वेन तदनुयोगप्रसङ्गात्। अथास्यासत्त्वं नाम किञ्चिन्न जायते किन्तु स एव न भवति। यथाहुः।

'न तस्य किञ्चिद्भवति न भवत्येव केवलम्' । इति ।

अथैष प्रसज्यप्रतिषेधो निरूप्यतां किं तत्स्वभावो भाव उत भावस्वभावः स इति । तत्र पूर्वस्मिन् कल्पे भावानां तत्स्वभावतया तुच्छतया जगच्छून्यं प्रसज्येत तथा च भावानुभवाभावः । उत्तरस्मिंस्तु सर्वभावनित्यतया नाभावव्यवहारः स्यात् । कल्पनामात्रनिमित्तत्वेऽपि निषेधस्य भावनित्यतापत्तिस्तदवस्थैव । तस्माद्विवमस्ति कारणादिकारजातं न वस्तु सत्, अतो विकारजातमनिर्वचनीयमनृतम् । तदनेन प्रमाणेन सिद्धमनृतत्वं विकारजातस्य कारणस्य निर्बाध्यतया सत्त्वं, मृत्तिकेत्येव सत्यमित्यादिना प्रबन्धेन दृष्टान्ततयाऽनुवदति श्रुतिः । 'यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्तः' इति चाक्षपादसूत्रं प्रमाणसिद्धो दृष्टान्त इत्येतत्परं, न पुनर्लोकसिद्धत्वमत्र विवक्षितम्, अन्यथा तेषां परमाण्वादिर्न दृष्टान्तः स्यात् । नहि परमाण्वादिर्नैसर्गिकवैनयिकबुद्ध्यतिशयरहितानां लौकिकानां सिद्ध इति । सम्प्रत्यनेकान्तवादिनमुत्थापयति । "नन्वनेकात्मकम्" इति । अनेकाभिः शक्तिभिर्याः प्रवृत्तयो नानाकार्यसृष्टयस्तद्युक्तं ब्रह्मैकं नाना चेति । किमतो यद्येवमित्यत आह । "तत्रैकत्वांशेन" इति । यदि पुनरेकत्वमेव वस्तु सद्भवेत् ततो नानात्वाभावाद्वैदिकः कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः समस्त एवोच्छिद्येत । ब्रह्मगोचराश्च श्रवणमननादयः सर्वे दत्तजलाञ्जलयः प्रसज्येरन् । एवं चानेकात्मकत्वे ब्रह्मणो मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति । तमिममनेकान्तवादं दूषयति । "नैवं स्यात्" इति । इदं तावदत्र वक्तव्यं, मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वमिति वदतः कार्यकारणयोः परस्परं किमभे-

दोऽभिमतः, आहो भेदः, उत भेदाभेदाविति। तत्राभेद ऐकान्तिके मृदात्मनेति च घटशरावाद्यात्मनेति चोक्तं द्वयं नियमश्च नोपपद्यते। भेदे चोक्तद्वयनियमानुपपत्तौ, आत्मनेति त्वसमञ्जसम्। नह्यन्यस्यान्य आत्मा भवति। न चानैकान्तवादः। भेदाभेदात्मत्वे तूक्तद्वयं भवेदपि। नियमस्त्वयुक्तो नहि धर्मिणोः कार्य्यकारणयोः सङ्करे तद्धर्मयोरेकत्वनानात्वे न सङ्कीर्य्येते इति सम्भवति। ततश्च मृदात्मनैकत्वं यावद्भवति तावद्घटशरावाद्यात्मनापि स्यात्, एवं घटशरावाद्यात्मना नानात्वं यावद्भवति तावन्मृदात्मना नानात्वं भवेत्। सोऽयं नियमः कार्य्यकारणयोरैकान्तिकं भेदमुपकल्पयति, अनिर्वचनीयतां वा कार्य्यस्य। पराक्रान्तं चास्माभिः प्रथमाध्याये तदास्तां तावत्। तदेतद्युक्तिनिराकृतमनुवदन्तीं श्रुतिमुदाहरति। "मृत्तिकेत्येव सत्यम्" इति। स्यादेतत्। न ब्रह्मणो जीवभावः काल्पनिकः, किन्तु भाविकः, अंशो हि सः, तस्य कर्मसहितेन ज्ञानेन ब्रह्मभाव आपाद्यत इत्यत आह। "स्वयं प्रसिद्धं हि" इति। स्वाभाविकस्याना[illegible]र्त यदुक्तं नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यतीति तत्राह। "बाधिते च" इति। यावद्बाधं हि सर्वोऽयं व्यवहारः स्वप्नदशायामिव तदुपदर्शितपदार्थजातव्यवहारः। स च यथा जाग्रदवस्थायां बाधकान्निवर्त्तते एवं तत्त्वमस्यादिवाक्यार्थश्रवणमननध्यानपरिपाकप्रभुवा शारीरस्य ब्रह्मात्मभावसाक्षात्कारेण बाधकेन निवर्त्तते। स्यादेतत्। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्' इत्यादिना मिथ्याज्ञानाधीनो व्यवहारः क्रियाकारकादिलक्षणः सम्यग्ज्ञानेनापनीयत इति न ब्रूमः, किन्त्ववस्थाभेदाश्रयो व्यवहारोऽवस्थान्तरप्राप्तौ निवर्त्तते, यथा बालकस्य कामचारवादभक्षतोपम-

वनप्राप्तौ निवर्तते, न च तावतासौ मिथ्याज्ञाननिबन्धनो भवत्येवमत्रापीत्यत आह । "न चायं व्यवहाराभावः" इति । कुतः, "तत्त्वमसीति ब्रह्मात्मभावस्य" इति । न खल्वेतद्वाक्यमवस्थाविशेषविनियतं ब्रह्मात्मभावमाह जीवस्य, अपि तु न भुजङ्गो रज्जुरियमितिवत् सदातनं तमभिवदति । अपि च सत्यानृताभिधाननाप्येतदेव युक्तमित्याह । "तस्करदृष्टान्तेन च" इति । "न चास्मिन् दर्शने" इति । नहि जातु कटकस्य दण्डकमण्डलुकुण्डलगामिन कुण्डलित्वान दण्डवत्तां कमण्डलुमत्तां बाधते, तत् कस्य हेतोः तेषां कुण्डलादीनां तस्मिन् भाविकत्वात्, तद्वदिहापि भाविकगोचरत्वेनैकात्मज्ञानेन न नानात्वं भाविकमपवदनीयम् । नहि ज्ञानेन वस्त्वपनीयते, अपि तु मिथ्याज्ञानेनारोपितमित्यर्थः । चोदयति । "नन्वेकत्वैकान्ताभ्युपगमः" इति । अबाधितानधिगतासन्दिग्धविज्ञानसाधनं प्रमाणमिति प्रमाणसामान्यलक्षणोपपन्ना प्रत्यक्षादीनि प्रमाणतामश्नुवते । एकत्वैकान्ताभ्युपगमे तु तेषां सर्वेषां भेदविषयाणां बाधितत्वादप्रामाण्यं प्रसज्यते । तथा विधिप्रतिषेधशास्त्रमपि भावनाभाव्यभावककरणेतिकर्तव्यताभेदापेक्षत्वाद्वाध्येत । तथा च नास्तिक्यमेकदेशक्षेपेण च सर्ववेदाक्षेपाद्दान्तानामप्यप्रामाण्यमित्यभेदैकान्ताभ्युपगमहानिः । न केवलं विधिनिषेधाक्षेपेणास्य मोक्षशास्त्रस्याक्षेपः स्वरूपेणाप्यपि भेदापेक्षत्वादित्याह । "मोक्षशास्त्रस्यापि" इति । अपि चास्मिन् दर्शने वर्णपदवाक्यप्रकरणादीनामसत्यत्वात्तत्प्रभवमद्वैतज्ञानमसमीचीनं भवेत्, न खल्वलीकाद्धूमकेतनज्ञानं समीचीनमित्याह । "कथं चानृतेन मोक्षशास्त्रेण" इति । परिहरति । "अत्रोच्यते" इति । यद्यपि प्रत्यक्षादीनां तात्त्विकमबाधितत्वं नास्ति, युक्त्याग-

साध्यां बाधनात्, तथापि व्यवहारे बाधनाभावात्सांव्यव-
हारिकमबाधनम्। नहि प्रत्यक्षादिभिरर्थं परिच्छिद्य प्रव-
र्तमानो व्यवहारे विसंवाद्यते सांसारिकः कश्चित्। तस्मा-
दबाधनाच्च प्रमाणलक्षणमस्तीति प्रत्यक्षादय इति।
"सत्यत्वोपपत्तेः" इति। सत्यत्वाभिमानोपपत्तेरिति। एत-
देवाख्यानमनद्विभजते। "यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः"
इति। विकारानेव तु शरीरादीनहमित्यात्मत्वेन पुत्र-
पश्वादीन्मम तथात्मीयभावेनेति योजना। "वैदिकम्" इति।
कर्मकाण्डमोक्षशास्त्रव्यवहारसमर्थना। "स्वप्नव्यवहारस्येव"
इति विभजते। "यथा सुप्तस्य प्राकृतस्य" इति। कथं चानृ-
तेन मोक्षशास्त्रेणेति यदुक्तं तदनुभाष्य दूषयति। "कथं
त्वसत्येन" इति। शक्यमेव वक्तुं श्रवणाद्युपायसाध्यसाक्षा-
त्कारपर्यन्तो वेदान्तसमुत्थोऽपि ज्ञाननिश्चयोऽसत्यः सोऽपि
हि वृत्तिरूपः कार्यतया निरोधधर्मा, यस्तु ब्रह्मभाव-
साक्षात्कारोऽसौ न कार्यस्तत्स्वभावत्वात्, तस्मादसत्यमेतत्
'कथमसत्यात्सत्योत्पादः' इति। यत् खलु सत्यं न तदुत्पद्यत
इति कुतस्तस्यासत्यादुत्पादो यत्रोत्पद्यते तत्सर्वमसत्यमेव।
सांव्यवहारिकं तु सत्यत्वं वृत्तिरूपस्य ब्रह्मसाक्षात्कारस्येव
श्रवणादीनामप्यस्त्येव, तस्मादभ्युपेत्य वृत्तिस्वरूपस्य ब्रह्म-
साक्षात्कारस्य परमार्थसत्यतां व्यभिचारोद्भावनमिति मन्त-
व्यम्। यद्यपि सांव्यवहारिकस्य सत्यादेव भयात्सत्य-
मरणमुत्पद्यते तथापि भयहेतुरहिस्तज्ज्ञानं वाऽसत्यं ततो
भयं सत्यं जायत इत्यसत्यात्सत्यस्योत्पत्तिरुक्ता। यद्यपि
चाहिज्ञानमपि स्वरूपेण सत्यमपि न तज्ज्ञानत्वेन भयहे-
तुरपि त्वनिर्वाच्याहिरूपितत्वेन। अन्यथा रज्जुज्ञानादपि
भयप्रसङ्गाज्ज्ञानत्वेनाविशेषात्। तस्मादनिर्वाच्याहिरूपित

ज्ञानमप्यनिर्वाच्यमिति सिद्धमसत्यादपि सत्यस्योपजन इति। न ब्रूमः सर्वस्मादसत्यात्सत्यस्योपजनो यतः समारोपित-धूमभावाया धूमसहिष्या वह्निज्ञानं सत्यं स्यात्। नहि चक्षुषो रूपज्ञानं सत्यमुपजायत इति रसादिज्ञानेनापि ततः सत्येन भवितव्यम्। यतो नियमो हि स तादृशः सत्यानां यतः कुतश्चित् किञ्चिदेव जायत इत्यं यमसत्यानामपि नियमो यतः कुतश्चिदसत्यात्सत्यं कुतश्चिदसत्यं यथा दीर्घत्वादि-वर्णेषु समारोपितत्वविशेषेऽप्यज्ञानमित्यतो ज्ञानिविरहमव-गच्छन्ति सत्यमज्ञानमित्यतस्तु समारोपितदीर्घभावाज्ज्ञानि-विरहमवगच्छन्तो भवन्ति भ्रान्ताः। न चोभयत्र दीर्घ-समारोपं प्रति कश्चिदस्ति भेदस्तस्मादपपन्नमसत्यादपि सत्य-स्योदय इति। निदर्शनान्तरमाह। "स्वप्नदर्शनावस्थस्य" इति। यथा सांसारिको जायद्भुजङ्गं दृष्ट्वा पलायते ततश्च न दंशवेदनामाप्नोति, पिपासुः सलिलमालोक्य पातुं प्रव-र्तते ततस्तदासाद्य पायस्यायमाप्यायितः सुखमनुभवति, एवं स्वप्नान्तिकेऽपि तदवस्थं सर्वमित्यसत्यात् कार्य्यसिद्धिः। शङ्कते। "तत्कार्य्यमप्यनृतमेव" इति। एवमपि नासत्यात् सत्यस्य सिद्धिरुक्ता त्वया। परिहरति। "तत्र ब्रूमः, यद्यपि स्वप्नदर्शनावस्थस्य" इति। लौकिको हि सुप्तोत्थितोऽवगत्यं बाधितं मन्यते न तदवगतिं, तत्र यद्यपि परीक्षका चानि-र्वाच्यरूपितामवगतिमप्यनिर्वाच्यां निश्चिन्वन्ति तथापि लौकि-काभिप्रायेणैतदुक्तम्। प्रसङ्गान्तरे लौकायतिकानां मतमपा-करोति। "एतेन स्वप्नदृशोऽवगत्यबाधनेन" इति। यदा खल्वयं वस्तारचनी व्यात्तविकटदंष्ट्राकरालवदनामुग्रस्थ-वपुमस्तकायचुम्बिताङ्गनामतिरौद्राकृताक्षविशालनेत्रलो-चनां रोमाञ्चसञ्चयोत्फुल्लभीषणां स्फटिकाचलभित्तिप्रति-

रिञ्चिनामभ्यमितीणां तत्समाख्याय स्वप्ने प्रतिबुद्धो मानुषी-मात्मनस्तनुं पश्यति तदोभयदेशानुगतमात्मानं प्रतिसन्दधानो देशातिरिक्तमात्मानं निश्चिनोति, न तु देहमात्रम्, तस्मात्त्वं देहव्यतिसन्धानाभावप्रसङ्गात्। कथं चैतदुपपद्येत यदि स्वप्नदृगोऽवगमस्य बाधिता स्यात्तद्बाधे तु प्रतिसन्धानाभाव इति। समस्तस्य सत्यप्रत्ययस्य श्रुतिसिद्धा-ऽन्वयव्यतिरेकसिद्धा चेत्याह। "तथाच श्रुतिः" इति। "तथाकारादि" इति। यद्यपि रेखास्वरूपं सत्यं तथापि तद्यथासङ्केतमसत्यं, नहि सङ्केतयितारः सङ्केतयन्तीदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्यः अपि त्वीदृशो रेखाभेदोऽकार इदृशश्च ककार इति, तथा चासमीचीनात् सङ्केतात्समीचीनवर्णावगतिरिति सिद्धम्। यथोक्तमेकत्वांशेन ज्ञानमोक्ष-व्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यतीति तत्राह। "अपि चान्त्यमिदं प्रमाणम्" इति। यदि स्वल्वेकत्वानेकत्वनिबन्धने व्यवहारावेकस्य पुंसः पर्य्यायेण सम्भवतस्ततस्तदर्थं भयसद्भावः कल्प्येत, न त्वेतदस्ति, नह्येकत्वावगतिनिबन्धनः कश्चिदस्ति व्यवहारस्तदवगतेः सर्वोत्तरत्वात्। तथाहि, तस्यामेकत्वं कात्मावगतिः समस्तप्रमाणतत्फलतद्व्यवहारानपबाधमानैवोदीयते, नैतस्याः परस्तात् किञ्चिदनुकूलं प्रतिकूलं चास्ति यदपेक्षेत येन चेयं प्रतीक्ष्येत, तत्रानुकूलप्रतिकूलनिवारणाभावात्ः परं किञ्चिदाकाङ्क्ष्यमिति। न चेयमगतिरुन्मि-षितप्रायेत्याह। "न चेयम्" इति। स्यादेतत्। यद्यस्या चेदियमवगतिनिष्प्रयोजना तर्हि तथा च न प्रेक्षावद्भिरुपादीयेत, प्रयोजनवत्त्वे वा नान्त्या स्यादित्यत आह। "न चेयमवगतिरनर्थिका" कुतः, "अविद्यानिवृत्तिफलदर्शनात्"।

नह्ययमुत्पन्नः सन् पश्चादविद्यां निवर्त्तयति येन नाश्यः स्यात्, किन्त्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते। अविद्यानिवृत्तिश्च न तत्कार्य्यतया फलमपि त्विष्टतयेष्टलक्षणत्वात् फलस्येति। प्रतिकूलं पराचीनं निराकर्त्तुमाह। "भ्रान्तिर्वा" इति। कुतः, "बाधक" इति। स्यादेतत्। मा भूदेकत्वनिबन्धनो व्यवहारोऽनेकत्वनिबन्धनस्त्वस्ति तदेव हि सकलामुद्वहति लोकयात्रामतस्तन्निर्वाहायानेकत्वस्य कल्पनीयं तात्त्विकत्वमित्यत आह। "प्राक् च" इति। व्यवहारो हि बुद्धिपूर्वकारिणां बुद्धिमुपपद्यते, न त्वस्यास्तात्त्विकत्वेन, भ्रान्त्यापि तदुपपत्तेरित्यावेदितम्। सत्यञ्च तदविसंवादादनृतञ्च विचारासहतयाऽनिर्वाच्यत्वात्। अनन्यस्यैकात्मज्ञानस्यानपेक्षतया बाधकत्वमनेकत्वज्ञानस्य च प्रतियोगिग्रहापेक्षया दुर्बलत्वेन बाध्यत्वं वदन् प्रकृतमुपसंहरति। "तस्मादन्येन प्रमाणेन" इति। स्यादेतत्। न वयमनेकत्वव्यवहारसिद्ध्यर्थमनेकत्वस्य तात्त्विकत्वं कल्पयामः, किन्तु श्रौतमेवास्य तात्त्विकत्वमिति चोदयति। "ननु मृदादि" इति। परिहरति। "नेत्युच्यते" इति। मृदादिदृष्टान्तेन हि कथञ्चित्परिणाम उक्तो यः, न च शक्य उवेतुमपि, मृत्तिकेत्येव सत्यमिति कारणमात्रसत्यत्वावधारणेन कार्य्यस्यानृतत्वप्रतिपादनात्, साक्षात् कूटस्थनित्यत्वप्रतिपादिकास्तु सन्ति सहस्रशः श्रुतय इति न परिणामधर्मता ब्रह्मणः। अथ कूटस्थस्यापि परिणामः कस्मान्न भवतीत्यत आह। "नह्येकस्य" इति। शङ्कते। "स्थितिगतिवत्" इति। यथैकवाणाश्रये गतिनिवृत्ती एवमेकस्मिन् ब्रह्मणि परिणामश्च तदभावश्च कौटस्थ्यं भविष्यत इति। निराकरोति। "न, कूटस्थस्येति विशेषणात्" इति। कूटस्थनित्यता हि

सदातनी स्वभावादप्रच्युतिः, सा कथं प्रच्युत्या न विरुध्यते। न च धर्मिणो व्यतिरिच्यन्ते धर्मा येन तदुपजनापायेऽपि धर्मी कूटस्थः स्यात्। भेदे ऐकान्तिके गवाश्ववद्धर्मधर्मिभावाभावात्। वाचादयस्तु परिणामिनः स्थित्या सत्या च परिणमन्त इति। अपि च स्वाध्यायाध्ययनविध्यापादितार्थवत्त्वस्य वेदराशेरेकेनापि वर्णेनानर्थकेन न भवितव्यं किं पुनरियता जगतो ब्रह्मयोनित्वप्रतिपादकेन वाक्यसन्दर्भेण, तत्र फलवद्ब्रह्मदर्शनसमाम्नानसंनिधावफलं जगद्योनित्वं समाम्नायमानं तदर्थं सत्तदुपायतयाऽवतिष्ठते नार्थान्तरार्थमित्याह। "न च यथा ब्रह्मणः" इति। अतो न परिणामपरत्वमस्येत्यर्थः। तदनन्यत्वमित्यस्य सूत्रस्य प्रतिज्ञाविरोधं श्रुतिविरोधञ्च चोदयति। "कूटस्थब्रह्मवादिनः" इति। परिहरति। "नाविद्यात्मक" इति। नाम च रूपञ्च ते एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य। एतदुक्तं भवति। तात्त्विकमैश्वर्यं सर्वज्ञत्वञ्च ब्रह्मणः किन्त्वविद्योपाधिकमिति तदाश्रयं प्रतिज्ञासूत्रं, तत्त्वाश्रयं तु तदनन्यत्वसूत्रं, तेनाविरोधः। सुगममन्यत्॥

## भावे चोपलब्धेः ॥ १५ ॥

कारणस्य भावः सत्ता चोपलम्भश्च तस्मिन् कार्यस्योपलब्धेर्भावाच्च। एतदुक्तं भवति। विषयपदं विषयविषयिपरं, विषयिपदमपि विषयिविषयपरं, तेन कारणोपलम्भभावयो रूपादेरुपलम्भभावादिति सूत्रार्थः सम्पद्यते। तथा च प्रभारूपानुविद्धबुद्धिबोध्येन चाक्षुषेण न व्यभिचारः, नापि वह्निभावाभावानुविधायिभावाभावेन धूमभेदेनेति सिद्धं भवति। तत्र यथाक्रमं हेतोरेकदेशाभिधानेनोपक्रमते भाष्यकारः। "इतश्च

"कारणादनन्यत्वं" भेदाभावः "कार्यस्य, यत्कारणं" यस्मात् कारणात् "भाव एव कारणस्य" इति। अस्य व्यतिरेकमुखेन गमकत्वमाह। "न च नियमेन" इति। काकतालीयन्यायेनान्यभावेऽन्यदुपलभ्यते, न तु नियमेनेत्यर्थः। हेतुविशेषणाय व्यभिचारं चोदयति। "नन्वन्यभावेऽपि" इति। एकदेशिमतेन परिहरति। "नेत्युच्यते" इति। शङ्क्यैकदेशिपरिहारं दूषयित्वा परमार्थपरिहारमाह। "अथ" इति। तदनेन हेतुविशेषणमुक्तम्। पाठान्तरेणैतदेव सूत्रं व्याचष्टे। "न केवलं शब्दादेव" इति। पट इति हि प्रत्ययवृत्त्या तन्तव एवातानवितानावस्था आलम्ब्यन्ते, न तु तदतिरिक्तः पटः प्रत्यक्षमुपलभ्यते। एकत्वं तु तन्तूनामेकप्रावरणलक्षणार्थक्रियावच्छेदाद्बहूनामपि। यथैकदेशकालावच्छिन्ना धवखदिरपलाशादयो बहवोऽपि वनमिति। अर्थक्रियाश्च प्रत्येकमसमर्था अप्यनारभ्यैवार्थान्तरं किंचिन्मिलिताः कुर्वन्तो दृश्यन्ते, यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवार्थान्तरं तन्तवो मिलिताः प्रावरणमेकं करिष्यन्ति। न च समवायाद्भिन्नयोरपि भेदानवभासः अनवभास इति साम्प्रतम्। अन्योन्याश्रयत्वात्, भेदे हि सिद्धे समवायः समवायाच्च भेदः। न च भेदसाधनान्तरमस्ति, अर्थक्रियाव्यपदेशभेदानामभेदेऽप्युपपत्तेरित्युपपादितम्। तस्माद्यत्किंचिदेतत्। अनया च दिशा मूलकारणं ब्रह्मैव परमार्थसदवान्तरकारणानि च तन्त्वादयः सर्वेऽनिर्वाच्या एवेत्याह। "तथा च तन्तुषु" इति॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

विभजते। "इतश्च" इति। न केवलं श्रुतिः, उपपत्तिश्चात्र भवति। "यच्च यदात्मना" इति। नहि तैलं सिकता-

त्मना सिकतायामस्ति, यथा घटोऽस्ति मृदि मृदात्मना। प्रत्युत्पन्नो हि घटो मृदात्मनोपलभ्यते, नैवं प्रत्युत्पन्नं तैलं सिकतात्मना। तेन यथा सिकतायां तैलं न जायत एव- मात्मनोऽपि जगन्न जायते, जायते च तस्मादात्मात्मनाऽऽसी- दिति गम्यते। उपपत्त्यन्तरमाह। "यथा च कारणं ब्रह्म" इति। यथा हि घटः सर्वदा सर्वत्र घट एव न जात्वपि क्वचित् पटो भवत्येवं सदपि सर्वत्र सर्वदा सदेव न तु क्वचित् कदाचिदनङ्गवितुमर्हतीत्युपपादितमधस्तात्। तस्मात् कार्य- स्त्रिष्वपि कालेषु सदेव। सत्त्वं चेत् भिन्नं यथैव भिद्यत आह। "एकत्वं पुनः" इति। सत्त्वं चैकं कार्य- कारणयोः, नहि प्रतिव्यक्ति सत्त्वं भिद्यते, तत्त्वाभिधान- ज्ञानत्वादेरपि भिन्नं न भिद्यत इति। न च ताभ्या- मनन्यत्वात् सत्त्वस्यैव भेद इति युक्तम्। तथा सति हि सत्त्वस्य समारोपितत्वप्रसङ्गः। तत्र भेदाभेदयोरन्यतरस- मारोपकल्पनायां किं तात्त्विकाभेदोपादानाद्भेदकल्पना- स्त्वाहो तात्त्विकभेदोपादानाभेदकल्पनेति। अत्र तु पश्यामो भेदग्रहस्य प्रतियोगिग्रहापेक्षत्वाद्भेदग्रहमन्तरेण च प्रतियोगिग्रहासम्भवादन्योन्यसंश्रयापत्तेरभेदग्रहस्य च निरपेक्षतया तदनुपपत्तेः, एकैकाश्रयत्वाच्च भेदस्यैका- भावे तदनुपपत्तेः, अभेदग्रहोपादानैव भेदकल्पनेति सर्व- मवदातम्॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्॥ १७॥

व्याकृतत्वाव्याकृतत्वे च धर्मावनिर्वचनीयौ। सूत्रमित- रद्व्याख्यातेन भाष्येण च व्याख्यातम्॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

"अतिशयवत्त्वात्प्रागवस्थायाः" इति। अतिशयो हि धर्मो नासत्यतिशयवति कार्ये भवितुमर्हतीति। ननु न कार्यस्यातिशयो नियमहेतुरपि तु कारणस्य शक्तिभेदः, स चासत्यपि कार्ये कारणस्य सत्त्वात्सम्भवतीत्यत आह। "शक्तिश्च" इति। नान्या कार्यकारणाभ्यां, नाप्यसती कार्यात्मनेति। योजना। "अपि च कार्यकारणयोः" इति। यद्यपि भावाभावोपलब्धिरित्यत्रायमर्थ उक्तस्तथापि समवायदूषणाय पुनरवतारितः। अनभ्युपगम्यमाने च समवायस्य समवायिभ्यां सम्बन्धे विच्छेदप्रसङ्गोऽवयवावयविद्रव्यगुणादीनां मिथः। नन्वसम्बद्धः समवायिभ्यां समवायः समवायिनौ सम्बन्धयेदिति। शङ्कते। "अथ समवायः स्वयम्" इति। यथा हि सत्त्वयोगाद् द्रव्यगुणकर्माणि सन्ति सत्त्वं तु स्वभावत एव सदिति न सत्त्वान्तरयोगमपेक्षते, तथा समवायः समवायिभ्यां सम्बन्धं न सम्बन्धान्तरयोगमपेक्षते, स्वयं सम्बन्धरूपत्वादिति, तदेतत्सिद्धान्तान्तरविरोधापादनेन निराकरोति। "संयोगोऽपि तर्हि" इति। न च संयोगस्य कार्यत्वात् कार्यस्य च समवायिकारणाधीनजन्मत्वात् असमवाये च तदनुपपत्तेः समवायकल्पना संयोग इति वाच्यम्। अजसंयोगे तदभावप्रसङ्गात्। अपि च। सम्बन्ध्यधीननिरूपणः समवायो यथा सम्बन्धिद्वयभेदे न भिद्यते तन्नाशे च न नश्यत्यपि तु नित्य एक एवं संयोगोऽपि भवेत् ततः को दोषः। अथैतत्प्रसङ्गभिया संयोगवत्समवायोऽपि प्रतिसम्बन्धिमिथुनं भिद्यते चानित्यश्चेत्यभ्युपेयते, तथा सति यथैकस्मान्निमित्तकारणादेव जायत एवं संयोगोऽपि निमित्तका-

रणादेव अभिव्यज्यत इति समानम्। "तादात्म्यप्रतीतेश्च" इति। सम्बन्धावगमो हि सम्बन्धव्यवहारबीजं न तादात्म्यावगम-स्तस्य नानात्वैकाश्रयसम्बन्धविरोधादिति। वृत्तिविकल्पेना-वयवातिरिक्तमवयविनं दूषयति। "कथञ्च कार्य्यम्" इति। "समस्त" इति। मध्यपरभागयोरर्वाग्भागव्यवहितत्वात्। अथ समस्तावयवव्यासक्तोऽपि कतिपयावयवस्थानो प्रतीयेत इत्यत आह। "नहि बहुत्वम्" इति। "यथावयवशः" इति। बहुत्वसंख्या हि स्वरूपेणैव व्यासज्य संख्येयेषु वर्त्तत इत्येक-समस्तसंख्येयापवर्गेऽपि न वर्त्तते, समस्तव्यासङ्गित्वात्तद्रूपस्य। अवयवी तु न स्वरूपेणावयवान् व्याप्नोति, अपि त्ववयवशः, तेन यथा सूत्रमवयवैः कुसुमानि व्याप्नुवत् समस्तकुसुमग्र-हणमपेक्षते कतिपयकुसुमव्यासक्तस्यापि तस्योपलम्भः, एवमवय-व्यपीति भावः। निराकरोति। "तदापि" इति। शङ्कते। "गोत्वादिवत्" इति। निराकरोति। "न" इति। यद्यपि गोत्वस्य सामान्यस्य विशेषा अनिर्वाच्या न परमार्थसन्तस्तथा च क्वास्य प्रत्येकपरिसमाप्तिरिति, तथाप्यभ्युपेत्य दृष्टान्तमिति मन्तव्यम्। अकर्तृका यतोऽतो निरात्मिका स्यात्, कारणा-भावे हि कार्य्यमनुत्पन्नं किंनाम भवेत्, अतो निरात्मकत्व-मित्यर्थः। यद्युच्येत घटशब्दस्तदवयवेषु व्यापाराविष्टतया पूर्वापरीभावमापन्नेषु घटोपजननाभिमुखेषु तादर्थ्यनिमित्ताद्-उपचारात् प्रयुज्यते, तथाच सिद्धत्वेन कर्तृत्वमस्तीत्युपपद्यते घटो भवतीति प्रयोग इत्यत आह। "घटस्य चोत्पत्तिरुच्य-माना" इति। उत्पादना हि सिद्धानां कपालकुलालादीनां व्यापारो नोत्पत्तिः। न चोत्पादनैवोत्पत्तिः, प्रयोज्यप्रयो-जकव्यापारयोर्भेदादभेदे वा घटमुत्पादयतीतिवद् घटमुत्पद्यत इत्यपि प्रसङ्गात्। तस्मात् करोतिकारयत्योरिव घटगोचरयो-

भृत्यस्वामिसमवेतयोरुत्पत्त्युत्पादनयोरधिष्ठानभेदोऽभ्युपेतव्यः, तत्र कपालकुलालादीनां सिद्धानामुत्पादनाधिष्ठानानां नोत्पत्त्यधिष्ठानत्वमस्तीति पारिशेष्याद् घट एव साध्य उत्पत्तेरधिष्ठानमेषितव्यः। न चासावसन्नधिष्ठानं भवितुमर्हतीति सत्त्वमस्याभ्युपेयम्। एवञ्च घटो भवतीति घटव्यापारस्य धात्वर्थत्वात् तत्रास्य कर्त्तृत्वमुपपद्यते तण्डुलानामिव सतां विक्लित्तौ विक्लिद्यन्ति तण्डुला इति। शङ्कते। "अथ स्वकारणसत्तासम्बन्ध एवोत्पत्तिः" इति। एतदुक्तं भवति। नोत्पत्तिर्नाम कश्चिद् व्यापारो येनासिद्धस्य कथमत्र कर्त्तृत्वमित्यनुयुज्येत, किन्तु स्वकारणसमवायः स्वसत्तासमवायो वा, स चासतोऽप्यविरुद्ध इति। सोऽप्यसतोऽनुपपन्न इत्याह। "कथमलब्धात्मकम्" इति। अपि च प्रागुत्पत्तेरसत्त्वं कार्य्यस्येति कार्य्याभावस्य भावेन मर्य्यादाकरणमनुपपन्नमित्याह। "अभावस्य च" इति। स्यादेतत्। अत्यन्ताभावस्य वन्ध्यासुतस्य मा भून्मर्य्यादानुपाख्यो हि सः, घटप्रागभावस्य तु भविष्यता घटेनोपाख्यं यस्यास्ति मर्य्यादेत्यत आह। "यदि वन्ध्यापुत्रः कारकव्यापारात्" इति। उक्तमेतदधस्ताद्यथा न जातु घटः पटो भवत्येवमसदपि सन्न भवतीति। तस्मान्मृत्पिण्डे घटस्यासत्त्वेऽत्यन्तासत्त्वमेवेति। असत्कार्य्यवादी चोदयति। "नन्वेवं सति" इति। प्राक् प्रसिद्धमपि कार्य्यं कदाचित् कारणेन योजयितुं व्यापारोऽर्थवान् भवेदित्यत आह। "तदनन्यत्वाच्च" इति। परिहरति। "नैष दोषः" इति। उक्तमेतद्यथा भुजङ्गतत्त्वं न रज्जोर्भिद्यते, रज्जुरेव हि तत्, काल्पनिकस्तु भेदः, एवं वस्तुतः कार्य्यतत्त्वं न कारणाद्भिद्यते, कारणस्वरूपमेव हि तत्, अनिर्वाच्यं तु कार्य्यरूपं भिन्नमिवाभिन्नमिव चावभासत

इति। तदिदमुक्तं "वस्त्वन्यत्वम्" इति। वस्तुतः परमार्थतोऽन्यत्वं न विशेषदर्शनमात्राद्भवति, सांव्यवहारिकं तु कथञ्चित्तस्यान्यत्वं भवत एवेत्यर्थः। अनयैव हि दिशैष सन्दर्भो योज्यः। असत्कार्य्यवादिनं प्रति दूषणान्तरमाह। "यस्य पुनः" इति। कार्य्यस्य कारणादभेदे सविषयत्वं कारकव्यापारस्य स्यान्नान्यथेत्यर्थः। "मूलकारणं" ब्रह्म। शब्दान्तराच्चेति। सूत्रावयवमवतार्य्य व्याचष्टे। "एवं युक्तेः कार्य्यस्य" इति। अतिरोहितार्थम्॥

पटवच्च ॥ १९ ॥

यथा च प्राणादि ॥ २० ॥

इति च सूत्रं निगदव्याख्यातेन भाष्येण व्याख्यातं।

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२१॥

यद्यपि शारीरात् परमात्मनो भेदमाहुः श्रुतयस्तथाऽभेदमपि दर्शयन्ति श्रुतयो बह्व्यः। न च भेदाभेदावेकत्र समवेतौ, विरोधात्। न च भेदस्तात्त्विक इत्युक्तम्। तस्मात् परमात्मनः सर्वज्ञाच्छारीरस्तत्त्वतो भिद्यते। स एव त्वविद्योपधानभेदादहङ्कारकार्य्यकारणसङ्घातेन प्रथते। उपहितं चास्य रूपं शारीरस्तेन मा नाम जीवाः परमात्मतामात्मनोऽनुभूवन्, परमात्मा तु तानात्मनोऽभिन्नाननुभवत्यननुभवे सार्वज्ञ्यव्याघातः। तथा चायं जीवान् बध्नन्नात्मानमेव बध्नीयात्। तदिदमुक्तं "नहि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वाऽनुप्रविशति" इत्यादि। तस्मान्न चेतनकारणं जगदिति पूर्वः पक्षः॥

अधिकन्तु भेदनिर्देशात् ॥ २२ ॥

सत्यमयं परमात्मा सर्वज्ञत्वाद्यथा जीवान् वस्तुत आत्मनोऽभिन्नान् पश्यति पश्यत्येवं न भावत एषां सुख-दुःखादिवेदनामज्ञोऽस्ति. अविद्यावशास्तेषां तद्वदभिमान इति। तथा च तेषां सुखदुःखादिवेदनायामप्यहमुदासीन इति न तेषां बन्धनागारनिवेशोऽप्यस्ति क्षतिः काचिदस्मेति न हिताकरणादिदोषापत्तिरिति तदाह तस्मादिदमुक्तम् । "अपि च यदा तत् त्वमसि" इति। अपि चेति च: पूर्वोपपत्तिसाहित्यं द्योतयति, नोपपत्त्यन्तरताम् ॥

स्यादेतत् । यदि ब्रह्मविवर्त्तो जगत्, हन्त सर्वस्यैव जीव-[illegible] इत्यत आह ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अतिरोहितार्थेन भाष्येण व्याख्यातम् ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥

ब्रह्म खल्वेकमद्वितीयतया परानपेक्षं क्रमेणोत्पद्यमानस्य जगतो विविधविचित्ररूपस्योपादानमुपेयते, तदनुपपन्नम्। न ह्येकरूपात्कार्यभेदो भवितुमर्हति तस्याकस्मिकत्वप्रसङ्गात्। कारणभेदो हि कार्यभेदहेतुः। क्षीरबीजादिभेदाद्दध्यङ्कुरादिकार्यभेददर्शनात्। न चाक्रमात् कारणात्कार्यक्रमो युज्यते। समर्थस्य क्षेपायोगाद् द्वितीयतया च क्रमवत्सहकारिसमवधानानुपपत्तेः। तदिदमुक्तम् "इह हि लोके" इति। एकैकं मृदादि कारकं, तेषां तु सामग्री साधनम्, ततो हि कार्यं भवत्येव, तस्मान्नाद्वितीयं ब्रह्म जगदुपादानमिति प्राप्ते, उच्यते। क्षीरवद्धि। इदं तावद्भवान् पृष्टो व्याचष्टां, किं तात्त्विकमस्य रूपमपेक्ष्येदमुच्यते उताविद्यादिनामरूपबीजसहितं काल्पनिकं सार्वज्ञ्यं सर्वशक्तित्वं,

तत्र पूर्वस्मिन् कल्पे किं नाम ततो द्वितीयादसहायादुपजायते, नहि तस्य शुद्धबुद्धमुक्तस्वभावस्य वस्तु सत्कार्यमस्ति, तथा च श्रुतिः "न तस्य कार्यं करणञ्च विद्यते" इति। उत्तरस्मिंस्तु कल्पे यदि कुलालादिवदत्यन्तव्यतिरिक्तसहकारिकारणाभावादनुपादानत्वं साध्यते, ततः क्षीरादिभिर्व्यभिचारः, तेऽपि हि बाह्यचेतनादिकारणानपेक्षा एव कालपरिणामवशेन स्वत एव परिणामान्तरमासादयन्ति। अथान्तरकारणानपेक्षत्वं हेतुः क्रियते, तदसिद्धमनिर्वाच्यनामरूपबीजसहायत्वात्। तथा च श्रुतिः।

'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्'। इति। कार्यक्रमेण तत्परिपाकोऽपि क्रमवानुन्नेयः। एकस्मादपि च विचित्रशक्तेः कारणादनेककार्योत्पादो दृश्यते। यथैकस्मादङ्गुल्यादेरेकस्मात् कर्मणः संयोगविभागसंस्काराः। यदि तु चेतनत्वे सतीति विशेषणान्न क्षीरादिभिर्व्यभिचारः, दृष्टा हि कुलालादयो बाह्यमृदाद्यपेक्षाश्चेतनाश्च ब्रह्मापि, तत्रेदमुपतिष्ठते॥

## देवादिवदपि लोके ॥ २५ ॥

लोक्यतेऽनेनेति लोकः शब्द एव तस्मिन्॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२६॥

ननु न ब्रह्मणस्तत्त्वतः परिणामो येन कार्त्स्न्यभागविकल्पेनाक्षिप्येत अविद्याकल्पितेन तु नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वान्यत्वाभ्यामनिर्वचनीयेन परिणामादिव्यवहारास्पदत्वं ब्रह्म प्रतिपद्यते, न च कल्पितं रूपं वस्तु स्पृशति, नहि चन्द्रमसि तैमिरिकस्य द्वित्वकल्पना चन्द्रमसो द्वित्वमावहति, तदनुपपत्त्या वा चन्द्रमसोऽनुपपत्तिः,

तस्मादवास्तवी परिणामकल्पनानुपपद्यमानापि न परमार्थसतो ब्रह्मणोऽनुपपत्तिमावहति, तस्मात्पूर्वपक्षाभावादनारभ्यमिदमधिकरणमित्यत आह। "चेतनमेकम्"। यद्यपि श्रुतिगतादैकान्तिकाद्वैतप्रतिपादनपरात् परिणामो वस्तुतो निषिद्धस्तथापि क्षीरादिदेवतादिदृष्टान्तैर्न पुनस्तद्वास्तवत्वप्रसङ्गे पूर्वपक्षोपपत्त्या मन्दधियां पक्षो न घटयितुं शक्यत इत्यपवाद्य श्रुतेस्तु शब्दमूलत्वात् आत्मनि चैवं विचित्राश्च हि इति सूत्राभ्यां विवर्त्तदृष्टान्तकरणेनैकान्तिकाद्वयलक्षणः श्रुत्यर्थः परिशोध्यत इत्यर्थः। "तस्मादस्त्यविकृतं ब्रह्म" तत्त्वतः। "ननु शब्देनापि" इति चोद्यमविद्याकल्पितत्वोद्घाटनाय। नहि निरवयवत्वसावयवत्वाभ्यां विधान्तरमस्त्येकनिषेधस्येतरविधाननान्तरीयकत्वात्। तेन प्रकारान्तराभावान्निरवयवत्वसावयवत्वयोश्च प्रकारयोरनुपपत्तेर्ग्रावप्लवनाद्यर्थवादवदप्रमाणं शब्दः स्यादिति चोद्यार्थः। परिहारः सुगमः॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अनेन स्फुटितो मायावादः। स्वप्नदृगात्मा हि मनसैव स्वरूपानुपमर्देन रथादीन् सृजति॥

## स्वपक्षदोषाच्च ॥ २९ ॥

चोदयति। "ननु नैव" इति। परिहरति। "नैवस्मानीयकेनैव" इति। यद्यपि समुदायः सावयवस्तथापि प्रत्येकं सत्त्वादयो निरवयवाः। नह्यस्ति सम्भवः सत्त्वमात्रं परिणमते न रजस्तमसी इति। सर्वेषां सम्भूयपरिणामाभ्युपगमात्। प्रत्येकं चानवयवानां कृत्स्नपरिणामे मूलोच्छेदप्रसङ्गः, एकदेशपरिणामे वा सावयवत्वमनिष्टं प्रसज्येत। "तथाणुवादिनोऽपि" इति। वैशेषिकाणां ह्यणुभ्यां संयुज्य

द्व्यणुकमेकमारभ्यते, तैस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमेकमारभ्यत इति प्रक्रिया। तत्र द्वयोः परमाण्वोरनवयवयोः संयोगस्तावन्न व्याप्य, यद्व्याप्य वर्त्तेत तत्र न वर्त्तेत। न ह्यस्ति सम्भवः स एव तदानीं तत्र वर्त्तते न वर्त्तते चेति। तथा चोपचयः पार्श्वस्थाः षडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेरणुमात्रः पिण्डः प्रसज्येत। अव्याप्तौ वा षडवयवः परमाणुः स्यादित्यनवयवत्वव्याकोपः। अशक्यञ्च सावयवत्वमुपेतुं, तथा सत्यनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्गः तस्मात् समानो दोषः। आपातमात्रेण सांख्यानां परमार्थिकं परिणामं वा कार्यकारणभावं वक्तॄणामेव दुर्वारो दोषो न पुनरस्माकं मायावादिनामित्याह। "परिहृतस्तु" इति।

विचित्रशक्तित्वमुक्तं ब्रह्मणस्तत्र श्रुत्युपन्यासपरं सूत्रम्।

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

एतदाक्षेपसमाधानपरं सूत्रम्।

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

कुलालादिभ्यस्तावद्बाह्यकरणापेक्षेभ्यो देवादीनां बाह्यानपेक्षाणामान्तरकरणापेक्षसृष्टीनां प्रमाणेन दृष्टो यथा विशेषो नापह्नोतुं शक्यः। यथा तु जाग्रत्सृष्टेर्बाह्यकरणापेक्षायास्तदनपेक्षान्तरकरणमात्रसाध्या दृष्टा स्वप्ने रथादिसृष्टिरशक्यापह्नोतुमेवं सर्वशक्तेः परस्या देवताया अन्तःकरणानपेक्षाया जगत्सर्जनं श्रूयमाणं न सामान्यतो दृष्टमात्रेणापह्नवमर्हतीति।

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

न तावदुन्मत्तवदस्य मतिविभ्रमाज्जगत्प्रक्रिया, भ्रान्तस्य

सर्वज्ञत्वानुपपत्तेः। तस्मात् प्रेक्षावतानेन जगत् कर्तव्यम्। प्रेक्षावतश्च प्रवृत्तिः स्वपरहिताहितप्राप्तिपरिहारप्रयोजना सती नाप्रयोजनाल्पव्यापाराऽपि सम्भवति, किं पुनरपरिमितानेकविधोच्चावचप्रपञ्चजगद्विभ्रमविरचना महाप्रयासा। अतएव लीलापि परास्ता। अल्पायाससाध्या हि सा न चेयमप्यप्रयोजना तस्या अपि सुखप्रयोजनवत्त्वात्तादर्थ्येन वा प्रवृत्तौ तदभावे कृतार्थत्वानुपपत्तेः परेषां चोपकार्याणामभावेन तदुपकारायाऽपि प्रवृत्तेरयोगात्। तस्मात् प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता तदभावेऽनुपपन्ना ब्रह्मोपादानतां जगतः प्रतिक्षिपतीति प्राप्तम्। एवं प्राप्तेऽभिधीयते।

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

भवेदेतदेवं यदि प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता भवेत्तत्प्रतिनिवृत्तौ निवर्तेत, शिंशपात्वमिव वृक्षतानिवृत्तौ न त्वेतदस्ति प्रेक्षावतामननुसंहितप्रयोजनानामपि याहृच्छिकीषु क्रियासु प्रवृत्तिदर्शनात्। अन्यथा 'न कुर्वीत वृथा चेष्टाम्' इति धर्मसूत्रकृतां प्रतिषेधो निर्विषयः प्रसज्येत। न चोन्मत्तान् प्रत्येतत् सूत्रमर्थवत्तेषां तदर्थबोधतदनुष्ठानानुपपत्तेः। अपि चादृष्टहेतुकोत्पत्तिकी श्वासप्रश्वासलक्षणा प्रेक्षावतां क्रिया प्रयोजनानुसन्धानमन्तरेण दृष्टा न चास्यां चेतनस्यापि चैतन्यमनुपयोगि सम्प्रसादेऽपि भावादिति युक्तं प्राणस्यापि चैतन्याप्रच्युतेरन्यथा मृतशरीरेऽपि श्वासप्रश्वासप्रवृत्तिप्रसङ्गात्। यथा च स्वार्थपरार्थसम्पदासादितसमस्तकामानां कृतकृत्यतयाऽनाकुलमनसामकामानामपि लीलामात्रादल्प-प्यनभिध्यादिनि प्रयोजने नैव तदुद्देशेन प्रवृत्तिरेवं ब्रह्मणोऽपि जगत्सर्जने प्रवृत्तिर्नानुपपन्ना। इदञ्च यदल्पबलवीर्यबुद्धी-

नाशक्यमतिदुष्करं वा तदन्येषामनल्पबलवीर्यबुद्धीनां सुकरमीषत्करं वा नहि वानरैर्माकन्दप्रभृतिभिर्नगैर्बद्धो नीरनिधिरगाधो महासत्त्वानाम्। न चैष पार्थेन गिरीशमुखेन बद्धो न चायं न पीतः संक्षिप्य चुलुकेन हेलयैव कलशयोनिना महामुनिना। न चाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसापि दुष्कराणि नरेश्वराणाम्। तस्मादुपपन्नं यदृच्छया वा स्वभावाद्वा लीलया वा जगत्सर्जनं भगवतो महेश्वरस्येति। अपि च नेयं पारमार्थिकी सृष्टिर्येनानुयुज्येत प्रयोजनम्, अपि त्वनाद्यविद्यानिबन्धना, अविद्या च स्वभावत एव कार्य्योन्मुखी न प्रयोजनमपेक्षते, नहि द्विचन्द्रालातचक्रगन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति। न च तत्कार्य्या विस्मयभयकम्पादयः स्वोत्पत्तौ प्रयोजनमपेक्षन्ते सा च चैतन्यच्छुरिता जगदुत्पादहेतुरिति चेतनो जगद्योनिराख्यायत इत्याह। "न चेयं परमार्थविषया" इति। अपि च न ब्रह्म जगत्कारणमपि तत्तया विवक्षन्त्यागमा अपि तु जगतो ब्रह्मात्मभावं, तथा च सृष्टेरविवक्षायां तदाश्रयो दोषो निर्विषय एवेत्याशयेनाह। "ब्रह्मात्मभाव" इति।

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

अतिरोहितोऽत्र पूर्वः पक्षः, उत्तरस्तूच्यते। उच्चावचमध्यमसुखदुःखभेदवत्प्राणभृत्प्रपञ्चं च सुखदुःखकारणं सुधाविषादि चानेकविधं विरचयतः प्राणभृद्भेदोपात्तपापपुण्यकर्माशयसहायस्यात्र भवतः परमेश्वरस्य न वैषम्यनैर्घृण्ये प्रसज्येते। नहि सभ्यः सभायां नियुक्तो युक्तवादिनं युक्तवाद्यसीति साधु-

क्तवादिनमयुक्तवादिनमीति ब्रुवाणः सभापतिर्वा युक्तवादिन-
मनुगृह्णन्नयुक्तवादिनञ्च निगृह्णन्ननुरक्तो द्विष्टो वा भवत्यपि तु
मध्यस्थ इति वीतरागद्वेष इति चाख्यायते, तद्वदीश्वरः पुण्य-
कर्माणमनुगृह्णन्नपुण्यकर्माणञ्च निगृह्णन्मध्यस्थ एव नाम-
ध्यस्थः। एवं स्वभावमध्यस्थः स्याद्यदकल्याणकारिणमनुगृह्णी-
यात्कल्याणकारिणञ्च निगृह्णीयान्न त्वेतदस्ति। तस्मान्न वैषम्य-
दोषोऽत एव न नैर्घृण्यमपि संहरतः समस्तान् प्राणभृतः। स
हि प्राणभृत्कर्माशयानां वृत्तिनिरोधसमयस्तमिति तत्क्षयवयम
युक्तकारी स्यात्। न च कर्मापेक्षायामीश्वरस्य स्वातन्त्र्यव्या-
घातः। नहि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति।
"एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते
एष एवासाधु कर्म कारयति तं यमधो निनीषते" इति श्रुते-
रीश्वर एव द्वेषपक्षपाताभ्यां साध्वसाधुनी कर्मणी कार-
यित्वा स्वर्गं नरकं वा लोकं नयति। तस्माद्वैषम्यदोषप्रस-
क्तमीश्वरः कारणमिति वाच्यम्। विरोधात्। 'यस्मात् कर्म
कारयित्वेश्वरः प्राणिनः सुखदुःखिनः सृजति' इति श्रुतेरव-
गम्यते। तस्मान्न सृजतीति विरुद्धमभिधीयते। न च वैष-
म्यमात्रमत्र ब्रूमो न त्वीश्वरकारणत्वं व्यासेधाम इति वक्तव्यं
किमतो यद्येवं, तस्मादीश्वरस्य सवासनक्लेशापरामृष्टमभि-
वदन्तीनां भूयसीनां श्रुतीनामनुग्रहायोन्निनीषतेऽधो निनी-
षत इत्येतदपि तज्जातीयपूर्वकर्माभ्यासवशात् प्राणिन इत्येवं
नेयम्। यथाहुः।

जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः।
तेनैवाभ्यासयोगेन तच्चैवाभ्यसते नरः॥

इत्यभ्युपेत्य च सृष्टेस्तात्त्विकत्वमिदमुक्तमनिर्वाच्या तु
सृष्टिरिति न प्रष्टव्यमत्रापि तथा च मायाकारस्येवाद्-

साकल्यवैकल्यभेदेन विचित्रान् प्राणिनो दर्शयतो न वैषम्यदोषः सहसा संहरतो वा न नैर्घृण्यमेवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः संहरतश्च स्वभावाद्वा लीलया वा न कश्चित् दोष इति सिद्धे शङ्कापरिहारपरं सूत्रम्।

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

शङ्कोत्तरे अतिरोहितार्थेन भाष्यग्रन्थेन व्याख्याते अनादित्वादिति सिद्धवदुक्तं तत्साधनार्थं सूत्रम्।

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

अकृते कर्मणि पुण्ये पापे वा तत्फलं भोक्तारमभ्यागच्छेत् तथा च विधिनिषेधशास्त्रमनर्थकं भवेत् प्रवृत्तिनिवृत्त्यभावादिति मोक्षशास्त्रस्य चोक्तमानर्थक्यम्। न चाविद्या केवलेति त्वयाभिप्रायम्। विक्षेपलक्षणाविद्यासंस्कारस्तु कार्यत्वात् स्वोत्पत्तौ पूर्वं विक्षेपमपेक्षते, विक्षेपश्च मिथ्याप्रत्ययो मोहापरनामा पुण्यापुण्यप्रवृत्तिहेतुभूतरागद्वेषनिदानं स च रागादिभिः सहितः स्वकार्येण शरीरं सुखदुःखभोगायतनमन्तरेण सम्भवति। न च रागद्वेषावन्तरेण कर्म, न च भोगसहितं मोहमन्तरेण रागद्वेषौ, न च पूर्वशरीरमन्तरेण मोहादिरिति पूर्वपूर्वशरीरापेक्षो मोहादिरेवं पूर्वपूर्वमोहाद्यपेक्षं पूर्वपूर्वशरीरमित्यनादित्वेन भगवतो चित्तमनाकुलयति। तदेतदाह। "रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात्" इति। रागद्वेषमोहा रागादयस्त एव हि पुरुषं संसारद्रवमनुभाव्य क्लेशयन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तानि प्रवर्त्तितानि कर्माणि तदपेक्षालयलक्षणा विद्या। स्यादेतत्। भविष्यतोऽपि व्यपदेशो

दृष्टो यथा पुरोडाशकपालेन तुषानुपवपतीत्यत आह। "न च धारयिष्यतीत्यत:" इति। तदेवमनादित्वे सिद्धे सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति प्राक् सृष्टेरविभागावधारणं समुदाचरद्रूपरागादिनिषेधपरं न पुनरेतान् प्रसुप्तानप्यपाकरोतीति सर्वमवदातम्॥

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

अत्र सर्वज्ञमिति दृश्यते। सर्वस्य चेतनाधिष्ठितस्यैव लोके प्रवृत्तिरिति लोकानुसारो दर्शित:। "सर्वशक्ति" इति। सर्वस्य जगत उपादानकारणं निमित्तकारणं चेत्युपपादितम्। "महामायम्" इति। सर्वानुपपत्तिशङ्का परास्ता। तस्माज्जगत्कारणं ब्रह्मेति सिद्धम्।

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरक-
भाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य
प्रथम: पाद:॥

---

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

स्यादेतत्। इह हि पादे स्वतन्त्रा वेदानपेक्षा: प्रधानादिविषया: सांख्यादियुक्तयो निराकरिष्यन्ते, तदयुक्तमशास्त्राङ्गत्वात्। नहीदं शास्त्रमुच्छृङ्खलतर्कशास्त्रवत् प्रवृत्तमपि तु वेदान्तवाक्यानि ब्रह्मपराणीति पूर्वपक्षोत्तरपक्षाभ्यां विनिश्चेतुं, तत्र क: प्रसङ्ग: शुष्कतर्कवत्स्वतन्त्रयुक्तिनिराकरणस्येत्यत आह। "यद्यपीदं वेदान्तवाक्यानाम्" इति। नहि वेदान्तवाक्यानि निर्णेतव्यानीति निर्णीयन्ते, किन्तु मोक्षमाणानां तत्त्वज्ञानोत्पादनाय। यथा च वेदान्तवाक्येभ्यो जगदुपादानं ब्रह्मावगम्यते, एवं सांख्याद्यनुमा-

नेभ्यः प्रधानाद्यचेतनं जगदुपादानमवगम्यते। न चैतदेव चेतनोपादानमचेतनोपादानं चेति समुच्चेतुं शक्यं, विरोधात्। न च व्यवस्थिते वस्तुनि विकल्पो युज्यते। न चागमबाधितविषयतयानुमानमेव नोदीयत इति साम्प्रतम्। सर्वज्ञप्रणीततया सांख्याद्यागमस्य वेदागमतुल्यत्वात् तद्बाधितस्यानुमानस्य प्रतिकृतिसिद्धतुल्यतयाऽबाधितत्वात्। तस्मान्नाद्वैताधास्त्र ब्रह्मणि समन्वयो वेदान्तानां सिध्यतीति न ततस्तत्त्वज्ञानं भवितुमर्हति, न च तत्त्वज्ञानादृते मोक्ष इति स्वतन्त्राणामप्यनुमानानामाभासीकरणमिह शास्त्रेऽसङ्गतमेवेति। यद्येवं ततः परकीयानुमाननिराम एव कस्मात्प्रथमं न कृत इत्यत आह। "वेदान्तार्थनिर्णयस्य च" इति। ननु वीतरागकथायां तत्त्वनिर्णयमात्रमुपयुज्यते न पुनः परपक्षाधिक्षेपः स हि सरागतामावहतीति चोदयति। "ननु मुमुक्षूणाम्" इति। परिहरति। "बाढमेवं तथापि" इति। तत्त्वनिर्णयावसाना वीतरागकथा न च परपक्षदूषणमन्तरेण तत्त्वनिर्णयः शक्यः कर्तुमिति तत्त्वनिर्णयाय वीतरागेणापि परपक्षो दूष्यते न तु परपक्षतयेति न वीतरागकथात्वव्याहतिरित्यर्थः। पुनरुक्ततां परिचोद्य समाधत्ते। "नन्वीक्षतेः" इति। "तत्र सांख्याः" इति। यानि हि येन रूपेणाऽन्वीयन्ते तानि तत्कारणानि दृष्टानि, यथा घटादयः कुचकादयश्चात्मोत्पादा च मोक्षरानन्तसुवर्णान्विता-स्तत्कारणास्तथा चेदं बाह्यमाध्यात्मिकञ्च भावजातं सुखदुःखमोहात्मनान्वितमुपलभ्यते, तस्मात्तदपि सुखदुःखमोहात्मकसामान्यकारणकं भवितुमर्हति। तत्र जगत्कारणस्य येयं सुखात्मता तत्सत्त्वं, या दुःखात्मता तद्रजः, या च मोहात्मता तत्तम इति त्रैगुण्यकारणमिद्धिस्तथा हि प्रत्येकं भावास्त्रै-

गुणत्रयवन्तोऽनुभूयन्ते। यथा मैत्रदारेषु पद्मावत्यां मैत्रस्य सुखं तत्कस्य हेतोस्तं प्रति सत्त्वगुणसमुद्भवात्, तत्सपत्नीनाञ्च दुःखं तत्कस्य हेतोस्ताः प्रत्यस्या रजोगुणसमुद्भवात्, चैत्रस्य तु स्त्रैणस्य तामविन्दतो मोहो विषादस्तत् कस्य हेतोस्तं प्रत्यस्यास्तमोगुणसमुद्भवात्, पद्मावत्या च सर्वे भावा व्याख्याताः। तस्मात्सर्वं सुखदुःखमोहान्वितं जगत्तत्कारणं गम्यते। तच्च त्रिगुणं प्रधानं प्रधीयते क्रियतेऽनेन जगदिति प्रधीयते निधीयतेऽस्मिन् प्रलयसमये जगदिति वा प्रधानं, तच्च मृत्सुवर्णवदचेतनं चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं स्वभावत एव प्रवर्त्तते, न तु केनचित्प्रवर्त्यते। तथा ह्याहुः 'पुरुषार्थ एव हेतुर्न केनचित् कार्य्यते करणम्' इति। परिमाणादिभिरित्यादिग्रहणेन 'शक्तितः प्रवृत्तेः कारणकार्य्यविभागादविभागाद्वैश्वरूप्यस्य' इत्यव्यक्तसिद्धिहेतवो गृह्यन्ते। एतांश्चोपरिष्टाद्व्याख्याय निराकरिष्यत इति। तदेतत्प्रधानानुमानं दूषयति। "तत्र वदामः" इति। यदि तावदचेतनं प्रधानमनधिष्ठितं चेतनेन प्रवर्त्तते स्वभावत एवेति साध्यते, तदयुक्तं, समन्वयादेर्हेतोश्चेतनानधिष्ठितत्वविरुद्धचेतनाधिष्ठितत्वेन मृत्सुवर्णादौ दृष्टान्तधर्मिणि व्याप्तेरुपलब्धेर्विरुद्धत्वान्नहि मृत्सुवर्णदार्वादयः कुलालहेमकाररथकारादिभिरनधिष्ठिताः कुम्भरुचकरथाद्युपाददते, तस्मात् कृतकत्वमिव नित्यत्वसाधनाय प्रयुक्तं साध्यविरुद्धेन व्याप्तं विरुद्धम्। एवं समन्वयादिश्चेतनानधिष्ठितत्वे साध्य इति रचनानुपपत्तेरिति दर्शितम्। यद्युच्येत दृष्टान्तधर्मिण्यचेतनं तावदुपादानं दृष्टं तत्र यद्यपि तच्चेतनप्रयुक्तमपि दृश्यते तथापि तत्प्रयुक्तत्वं हेतोरप्रयोजकं बहिरङ्गत्वादन्तरङ्गं त्वचेतनत्वमात्रमुपादानानुगतं हेतोः प्रयोजकम्। यथाहुः

'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः' इति। तत्राह। "न च मृदादि" इति। स्वभावप्रतिबद्धं हि व्याप्यं व्यापकमवगमयति। स च स्वभावप्रतिबन्धः शङ्कितसमारोपितोपाधिनिरासे सति निर्धार्यते। तन्निश्चयश्चान्वयव्यतिरेकयोरायत्तः। तौ चान्वयव्यतिरेकौ न तथोपादानाचैतन्ये यथा चेतनप्रयुक्तत्वेऽपि परिस्फुटौ तदलमवान्तरङ्गत्वेनेति भावः। एवमपि चेतनप्रयुक्तत्वं नाभ्युपेयेत यदि प्रमाणान्तरविरोधो भवेत्, प्रत्युत श्रुतिरनुगुणतरा चेत्याह। "न चैवं सति" इति। चकारेण सुखदुःखादिसमन्वयलक्षणस्य हेतोरसिद्धत्वं समुच्चिनोतीत्याह। "अन्वयाद्यनुपपत्तेश्च" इति। आन्तराः खल्वमी सुखदुःखमोहविषादा बाह्येभ्यश्चन्दनादिभ्योऽतिविच्छिन्नप्रत्ययवेदनीयेभ्यो व्यतिरिक्ता अध्यक्षमीक्ष्यन्ते। यदि पुनरेत एव सुखदुःखादिस्वभावा भवेयुस्ततः स्वरूपत्वाद्धेमन्तेऽपि चन्दनः सुखः स्यात्। नहि चन्दनः कदाचिदचन्दनस्तथा निदाघेऽपि कुङ्कुमपङ्कः सुखो भवेत्। नह्यसौ कदाचिदकुङ्कुमपङ्क इति। एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात्। नह्यसौ कांश्चित्प्रत्येव कण्टक इति। तस्मादसुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयम्। तस्मात् सुखादिरूपसमन्वयो भावानामसिद्ध इति नानेन तद्रूपं कारणमव्यक्तमुन्नीयत इति। तदिदमुक्तं "शब्दाद्यविशेषेऽपि च भावनाविशेषात्" इति। भावना वासना संस्कारस्तद्विशेषात् क्रमेलकजन्मसंवर्तकं हि कर्म करभोचितामेव भावनामभिव्यनक्ति, यथास्मै कटका एव रोचन्ते। एवमन्यत्रापि द्रष्टव्यम्। परिमाणादिति सांख्यीयं हेतुमुपन्य-

स्यति। "तथा परिमितानां भेदानाम्" इति। संसर्गपूर्वकत्वे हि संसर्गस्य कस्यचिदद्वयेऽसम्भवाज्जानात्वैकार्थसमवेतस्य नानाकारणानि संसृष्टानि कल्पनीयानि, तानि च सत्त्वरजस्तमांस्येवेति भावः। तदेतत्परिमितत्वं सांख्यीयराद्धान्तालोचनेनानैकान्तिकमिति दूषयति। "सत्त्वरजस्तमसाम्" इति। यदि तावत्परिमितत्वमियत्ता, सा नभसोऽपि नास्तीत्यव्यापको हेतुः परिमाणादिति। अथ न योजनादिमितत्वं परिमाणमियत्तां नभसो ब्रूमः, किन्त्वव्यापितामव्यापि च नभस्तन्मात्रादेः, नहि कार्य्यं कारणव्यापि, किन्तु कारणं कार्य्यव्यापीति परिमितं नभस्तन्मात्राद्यव्यापित्वात्। इत्थं सत्त्वरजस्तमांस्यपि न परस्परं व्याप्नुवन्ति न च तत्त्वान्तरपूर्वकत्वमेतेषामिति व्यभिचारः। नहि यथा तैः कार्य्यजातमाविष्टमेव तानि परस्परं विशन्ति, मिथः कार्य्यकारणभावाभावात्। परस्परसंसर्गस्त्वाविशेषचितिशक्तौ नास्ति, नहि चितिशक्तिः कूटस्थनित्या तैः संसृज्यते, ततश्च तदव्यापका गुणा इति परिमिताः। एवं चितिशक्तिरपि गुणैरसंसृष्टेति सापि परिमितेत्यनैकान्तिकत्वं परिमितत्वस्य हेतोरिति। तथा कार्य्यकारणविभागोऽपि समन्वयवद्विरुद्ध इत्याह। "कार्य्यकारणभावस्तु" इति॥

## प्रवृत्तेश्च ॥ २ ॥

न केवलं रचनाभेदा न चेतनाधिष्ठानमन्तरेण भवन्त्यपि तु साम्यावस्थायाः प्रच्युतिर्वैषम्यं, तथा च यदुद्भूतं बलीयस्तदङ्गाभिभूतञ्च तदनुगुणतया स्थितमङ्गमेवं हि गुणप्रधानभावे सत्यस्य महदादौ कार्य्ये प्रवृत्तिः सापि चेतनाधिष्ठानमेव गमयति, नहि चेतनाधिष्ठानमन्तरेण सूत-

पिण्डे प्रधानेऽङ्गभावेन चक्रदण्डसलिलसूत्रादयोऽवतिष्ठन्ते। तस्मात्प्रवृत्तेरपि चेतनाधिष्ठानसिद्धिरिति शङ्कितः प्रवृत्तेश्चेत्ययमपि हेतुः सांख्यीयो विरुद्ध एवेत्युक्तं वक्तोक्त्या। अत्र सांख्यश्चोदयति। "ननु चेतनस्यापि प्रवृत्तिः" इति। अयमभिप्रायः। त्वया किलौपनिषदेनास्मद्धेतून् दूषयित्वा केवलस्य चेतनस्यैवान्यनिरपेक्षस्य जगदुपादानत्वं निमित्तत्वञ्च समर्थनीयम्। तदयुक्तम्। केवलस्य चेतनस्य प्रवृत्तेर्दृष्टान्तधर्मिण्यनुपलब्धेरिति। औपनिषदन्तु चेतनहेतुकां तावदेव सांख्यः प्रवृत्तिमभ्युपगच्छतु पश्चात् स्वपक्षमतएव समाधास्यामीत्यभिसन्धिमानाह। "सत्यमेतत्। न केवलस्य चेतनस्य प्रवृत्तिर्दृष्टा" इति। सांख्य आह। "न त्वचेतनसंयुक्तस्य" इति। तुशब्द औपनिषदपक्षं व्यावर्त्तयति। अचेतनाश्रयैव सर्वा प्रवृत्तिर्दृश्यते न तु चेतनाश्रया काचिदपि। तस्माच्च चेतनस्य जगत्सर्जने प्रवृत्तिरित्यर्थः। अथौपनिषदो गूढाभिसन्धिः प्रश्नपूर्वकं विमृशति। "किं पुनरत्र" इति। अत्रान्तरे सांख्यो ब्रूते। "ननु यस्मिन्" इति। न तावच्चेतनः प्रवृत्त्याश्रयतया तत्प्रयोजकतया वा प्रत्यक्षमीक्ष्यते, केवलं प्रवृत्तिस्तदाश्रयश्चाचेतनो देहरथादिः प्रत्यक्षेण प्रतीयते, तत्राचेतनस्य प्रवृत्तिस्तन्निमित्तैव न तु चेतननिमित्ता। सद्भावमात्रं तु तत्र चेतनस्य गम्यते रथादिवैलक्षण्याज्जीवद्देहस्य। न च सद्भावमात्रेण कारणत्वसिद्धिः। मा भूदाकाश उत्पित्सूनां घटादीनां निमित्तकारणमस्ति हि सर्वत्रेति, तदनेन देहातिरिक्ते सत्यपि चेतने तस्य न प्रवृत्तिं प्रति निमित्तभावोऽस्तीत्युक्तम्। यतश्चास्य न प्रवृत्तिहेतुभावोऽस्ति अतएव प्रत्यक्षे देहे सति प्रवृत्तिदर्शनाद्सति चादर्शनाद्देहस्यैव चैतन्यं लौकायतिकाः प्रतिपन्नाः, तथा च न चिदात्मनिमित्ता प्रवृ-

त्तिरिति सिद्धम्। तस्माच्च रचनायाः प्रवृत्तेर्वा चिदात्मकारणत्वमिति जगत इत्यौपनिषदः परिहरति। "तदभिधीयते। न ब्रूमः" इति। न तावत् प्रत्यक्षानुमानाभ्यामसिद्धः शारीरो वा परमात्मा वाऽस्माभिरिदानीं साधनीयः, केवलमस्य प्रवृत्तिं प्रति कारणत्वं वक्तव्यम्। तत्र मृतशरीरे वा रथादौ वाऽनधिष्ठिते चेतनेन प्रवृत्तेरदर्शनात् तद्विपर्यये च प्रवृत्तिदर्शनादन्वयव्यतिरेकाभ्यां चेतनहेतुकत्वं प्रवृत्तेर्निश्चीयते, न तु चेतनसद्भावमात्रेण, येनातिप्रसङ्गो भवेत्। भूतचैतन्निकानामपि चेतनाधिष्ठानादचेतनानां प्रवृत्तिरित्यविशेषात् इत्याह। "लोकायतिकानामपि" इति। स्यादेतत्। देहः स्वयं चेतनः करचरणादिमान् स्वव्यापारेण प्रवर्त्तयतीति युक्तं, न तु तदतिरिक्तः कूटस्थनित्यश्चेतनो व्यापाररहितो ज्ञानैकस्वभावः प्रवृत्त्यभावात् प्रवर्तको युक्त इति चोदयति। "ननु तव" इति। परिहरति। "नायस्कान्तवद्रूपादिवच्च" इति। "यथा च रूपादयः" इति। सांख्यानां हि स्वदेशस्था रूपादय इन्द्रियं विकुर्वते, तेन तदिन्द्रियमर्थं प्राप्तमर्थाकारेण परिणमत इति स्थितिः। सम्प्रति चोदकः स्वाभिप्रायमाविष्करोति। "एकत्वात्" इति। येषामचेतनं चेतनं चास्ति तेषामेतद्युज्यते वक्तुम् चेतनाधिष्ठितमचेतनं प्रवर्तत इति। यथा योगानामीश्वरवादिनाम्। येषां तु चेतनातिरिक्तं नास्त्यद्वैतवादिनां, तेषां प्रवर्त्याभावे कं प्रति प्रवर्तकत्वं चेतनस्यार्थः। परिहरति। "माविद्या" इति। कारणभूतया लयलक्षणयाऽविद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यत् प्रत्युपस्थापितं नाम रूपं तदेव माया तदावेशेनास्य बोधस्यासक्तप्रत्युक्तत्वात्, एतदुक्तं भवति। नेयं सृष्टिर्वस्तुसती येनाद्वैतिनो वस्तुसतो द्वितीयस्याभावादनुयुज्येत।

काल्पनिक्यां तु सृष्टावस्ति काल्पनिकं द्वितीयं सहायं मायामयम्। यथाहुः।

सहायास्तादृशा एव यादृशी भवितव्यता। इति।

न चैवं ब्रह्मोपादानत्वव्याघातो ब्रह्मण एव मायाविशिनोपादानत्वात्तदधिष्ठानत्वाज्जगद्विभ्रमस्य रजतविभ्रमस्येव शुक्तिकाधिष्ठानस्य शुक्तिकोपादानत्वमिति निरवद्यम्।

## पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

यथा पयोऽम्बुनोश्चेतनानधिष्ठितयोः स्वत एव प्रवृत्तिरेवं प्रधानस्यापीति शङ्कार्थः। तत्रापि चेतनाधिष्ठितत्वं साध्यं, न च साध्येनैव व्यभिचारः, तथा सत्यनुमानमात्रोच्छेदप्रसङ्गात् सर्वत्रास्य सुलभत्वात्। न चासाध्यम्, तत्रापि चेतनाधिष्ठानस्यागमसिद्धत्वात्। न च सपक्षेण व्यभिचार इति शङ्कानिराकारणस्यार्थः। साध्यपक्षत्व्युपलक्षणं सपक्षनिक्षिप्तत्वादित्यपि द्रष्टव्यम्। ननूपसंहारदर्शनादित्यत्रानपेक्षस्य प्रवृत्तिर्दर्शिता। इह तु सर्वस्य चेतनापेक्षाप्रवृत्तिः प्रतिपाद्यत इति कुतो न विरोध इत्यत आह। "उपसंहारदर्शनात्" इति। स्थूलदर्शिलोकाभिप्रायानुरोधेन तदुक्तं न तु परमार्थत इत्यर्थः।

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

यद्यपि सांख्यानामपि विचित्रकर्मवासनावासितं प्रधानं साम्यावस्थायामपि तथापि न कर्मवासनाः सर्गस्य प्रवर्त्तिकाः, किन्तु प्रधानमेव स्वकार्य्यं प्रवर्त्तमानमधर्मप्रतिबद्धं सत् सुखमयीं सृष्टिं कर्त्तुमुत्सहत इति धर्मेणाधर्मप्रतिबन्धोऽपनीयते। एवमधर्मेण धर्मप्रतिबन्धोऽपनीयते। दुःखमय्यां सृष्टौ स्वयमेव च प्रधानमनपेक्ष्य सृष्टौ प्रवर्त्तते। यथाहुः 'निमित्तमप्रयोजकं

प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्' इति। अतश्च प्रतिबन्धकापनयसाधने धर्माधर्मसाधने अपि सन्निहिते इत्यागन्तोरपेक्षणीयस्याभावात् सदैव साम्येन परिणमेत वैषम्येण वा, न त्वयं कादाचित्कः परिणामभेद उपपद्यते। ईश्वरस्य तु महामायस्य चेतनस्य लीलया वा यदृच्छया वा स्वभाववैचित्र्याद्वा कर्मविपाकापेक्षस्य प्रवृत्तिनिवृत्ती उपपद्येते एवेति।

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

धेनूपयुक्तं हि तृणपल्लवादि तथा स्वभावत एव चेतनानपेक्षं क्षीरभावेन परिणमते न तु तत्र धेनुचैतन्यमपेक्ष्यते, उपयोगमात्रे तदपेक्षत्वात्। एवं प्रधानमपि स्वभावत एव परिणंस्यते कृतमत्र चेतनेनेति शङ्कार्थः। धेनूपयुक्तस्य तृणादेः क्षीरभावे किं निमित्तान्तरमात्रं निषिध्यते, उत चेतनं, न तावन्निमित्तान्तरम्। धेनुदेहस्यौदर्य्यस्य वह्न्यादिभेदस्य निमित्तान्तरस्य सम्भवाद् बुद्धिपूर्वकारी तु तत्रापि ईश्वर एव सर्वज्ञः सम्भवतीति शङ्कानिराकरणस्यार्थः। तदिदमुक्तं "किञ्चित् दैवसम्पाद्यम्" इति।

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

पुरुषार्थापेक्षाभावप्रसङ्गात्। तदिदमुक्तम्। "एवं प्रयोजनमपि किञ्चिन्नापेक्ष्यते" इति। अथवा पुरुषार्थाभावादिति योज्यम्। तदिदमुक्तं "तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यम्" इति। न केवलं तात्त्विको भोगोऽनाधेयातिशयस्य कूटस्थनित्यस्य पुरुषस्य न सम्भवति। अनिर्मोक्षप्रसङ्गश्च। येन हि प्रयोजनेन प्रधानं प्रवर्त्तितं तदनेन कर्त्तव्यं, भोगेन चैतत्प्रवर्त्तितमिति तमेव कुर्व्वीत मोक्षं तेनाप्रवर्त्तित-

त्वादित्यर्थः। "अपवर्गश्चेत् प्रागपि" इति। चितेः सदा विशुद्धत्वाच्चैतस्यां जातु कर्मानुभववासनाः सन्ति। प्रधानन्तु तासामनादीनामाधारस्तथा च प्रधानप्रवृत्तेः प्राक् चितिर्मुक्तैवेति नापवर्गार्थमपि तत्प्रवृत्तिरिति। शब्दाद्यनुपलब्धिप्रसङ्गश्च। तदर्थमप्रवृत्तत्वात् प्रधानस्य "उभयार्थताभ्युपगमेऽपि" इति। न तावदपवर्गः साध्यस्तस्य प्रधानाप्रवृत्तिमात्रेण सिद्धत्वात् भोगार्थं तु प्रवर्त्तेत। भोगस्य च सकृच्छब्दाद्युपलब्धिमात्रादेव समाप्तत्वान्न तदर्थं पुनः प्रधानं प्रवर्त्तेतेत्ययत्नसाध्यो मोक्षः स्यात्। निःशेषशब्दाद्युपभोगस्य चानन्त्येन समाप्तेरनुपपत्तेरनिर्मोक्षप्रसङ्गः। कृतभोगमपि प्रधानमासत्त्वपुरुषान्यताख्यातेः क्रियासमभिहारेण भोजयतीति चेत्, अथ पुरुषार्थाय प्रवृत्तं किमर्थं सत्त्वपुरुषान्यताख्यातिं करोति। अपवर्गार्थमिति चेत्, हन्तायं सकृच्छब्दाद्युपभोगेन कृतप्रयोजनस्य प्रधानस्य निवृत्तिमात्रादेव सिध्यतीति कृतं सत्त्वान्यताख्यातिप्रतीक्षणेन। न चास्याः स्वरूपतः पुरुषार्थत्वम्। तस्मादुभयार्थमपि न प्रधानस्य प्रवृत्तिरुपपद्यत इति सिद्धोऽर्थाभावः। सुगममितरत्। शङ्कते। "दृक्शक्ति" इति। पुरुषो हि दृक्शक्तिः सा च दृश्यमन्तरेणानर्थिका स्यात्। न च स्वात्मन्यर्थवती, स्वात्मनि वृत्तिविरोधात्। प्रधानस्य सर्गशक्तिः सा च सर्जनीयमन्तरेणानर्थिका स्यादिति यत् प्रधानेन शब्दादि सृज्यते तदेव दृक्शक्तेर्दृश्यं भवतीति तदुभयार्थवत्त्वाय सर्जनमिति शङ्कार्थः। निराकरोति। "सर्गशक्त्यनुच्छेदवत्" इति। यथा हि प्रधानस्य सर्गशक्तिरेकं पुरुषं प्रति चरितार्थापि पुरुषान्तरं प्रति प्रवर्त्ततेऽनुच्छेदात्। एवं दृक्शक्तिरपि तं पुरुषं प्रत्यर्थवत्त्वायानुच्छेदात् सर्वदा प्रवर्त्तेतेत्यनिर्मोक्षप्रसङ्गः। सकृद्दृश्यदर्शनेन वा चरि-

तार्थत्वे न भूयः प्रवर्त्ततेति सर्वेषामेकपदे निर्मोक्षः प्रसज्येतेति सहसा संसारः समुच्छिद्येतेति ।

## पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

नैव दोषात् प्रच्युतिरिति शेषः । मा भूत् स्वभावस्य सान्निध्यवत्त्वस्य वा प्रवर्त्तकत्वं पुरुष एव दृक्शक्तिसम्पन्नः पङ्गुरिव प्रवृत्तिशक्तिसम्पन्नं प्रधानमन्धमिव प्रवर्त्तयिष्यतीति शङ्का । दोषादनिर्मोक्षमाह । "अभ्युपेतहानं तावत्" इति । न केवलमभ्युपेतहानम्, अयुक्तं चैतद्बहुदर्शनालोचनेनेत्याह । "कथं चोदासीन" इति । निष्क्रियत्वे साधनं, "निर्गुणत्वात्" इति । शेषमतिरोहितार्थम् ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

यदि प्रधानावस्था कूटस्थनित्या, ततो न तस्याः प्रच्युतिरनित्यत्वप्रसङ्गात् । यथाहुः ।

'नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति' इति ।

तदिदमुक्तं "स्वरूपप्रणाशभयात्" इति । अथ परिणामिनित्या । यथाहुः । 'यस्मिन् विक्रियमाणेऽपि यत्तत्त्वं न विहन्यते तदपि नित्यम्' इति । तत्राह । "बाह्यस्य च" इति । यत्साम्यावस्थया सुचिरं परिणमत्कथं तदेवासति विलक्षणप्रत्ययोपनिपाते वैषम्यमुपैति । अनपेक्षस्य स्वतो वाऽपि वैषम्येण कदाचित्साम्यं भवेदित्यर्थः ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

"एवमपि प्रधानस्य" इति । अङ्गित्वानुपपत्तिलक्षणो दोषस्तावन्न भवद्भिः शक्यः परिहर्त्तुमिति वक्ष्यामः । अभ्युपगम्याप्यसाम्यादोषत्वमुच्यत इत्यर्थः । सम्प्रत्यङ्गित्वानुपपत्तिमुपपादयति । "वैषम्योपगमयोग्या अपि" इति ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

"क्वचित्सप्तेन्द्रियाणि" इति। त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकम्, कर्मेन्द्रियाणि पञ्च, सप्तमं च मन इति सप्तेन्द्रियाणि। "क्वचित् त्रीण्यन्तःकरणानि"। बुद्धिरहङ्कारो मन इति। "क्वचिदेकं" बुद्धिरिति। शेषमतिरोहितार्थम्। अत्राह सांख्यः। "नन्वौपनिषदानामपि" इति। तप्यतापकभावस्तावदेकस्मिन्नोपपद्यते, नहि तपिरस्तिरिव कर्त्तृस्थभावकः, किन्तु पचिरिव कर्मस्थभावकः; परसमवेतक्रियाफलशालि च कर्म, तथा च तप्येन कर्मणा तापकसमवेतक्रियाफलशालिना तापकादन्येन भवितव्यम्। अनन्यत्वे चैत्रस्येव गन्तुः स्वसमवेतगमनक्रियाफलनगरप्राप्तिशालिनोऽप्यकर्मत्वप्रसङ्गात्, अन्यत्वे तु तप्यस्य तापकाच्चैत्रसमवेतगमनक्रियाफलभाजो गम्यस्येव नगरस्य तप्यत्वोपपत्तिः। तस्मादभेदे तप्यतापकभावो नोपपद्यत इति। दूषणान्तरमाह। "यदि च" इति। नहि स्वभावाद्भावो वियोजितुं शक्य इति भावः। जलधेरिव वीचितरङ्गफेनादयः स्वभावाः सन्त आविर्भावतिरोभावधर्माणो न तु तैर्जलधिः कदाचिदपि मुच्यते, न केवलं कर्मभावात्तप्यस्य तापकादन्यत्वमपि त्वनुभवसिद्धमेवेत्याह। "प्रसिद्धश्चायम्" इति। तथाहि। अर्थोऽप्युपार्जनरक्षणक्षयरागद्वेषहिंसादोषदर्शनादनर्थः सन्नर्थिनं दुनोति, तदर्थी तप्यस्तापकश्चार्थः, तौ चेमौ लोके प्रतीतभेदौ, अभेदे च दूषणान्युक्तानि, तत्कथमेकस्मिन्नद्वये भवितुमर्हत इत्यर्थः। तदेवमौपनिषदं मतमसमञ्जसमुक्त्वा सांख्यः स्वपक्षे तप्यतापकयोर्भेदे मोक्षमुपपादयति। "आत्यन्तिकभावे तु" इति।

दृग्दर्शनशक्त्योः किल संयोगस्तापनिदानं, तस्य हेतुरविवेकदर्शनसंस्कारोऽविद्या, सा च विवेकख्यात्या विद्यया विरोधित्वाद्विनिवर्त्यते, तन्निवृत्तौ तद्धेतुकः संयोगो निवर्त्तते, तन्निवृत्तौ च तत्कार्यस्तापो निवर्त्तते। तदुक्तं पञ्चशिखाचार्य्येण। 'तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः' इति। अत्र च न साक्षात्पुरुषस्यापरिणामिनो बन्धमोक्षौ, किन्तु बुद्धिसत्त्वस्यैव चितिच्छायापत्त्या लब्धचैतन्यस्य। तथाहीष्टानिष्टगुणस्वरूपावधारणमविभागापन्नमस्य भोगः, भोक्तृस्वरूपावधारणमपवर्गस्तेन हि बुद्धिसत्त्वमेवापवृज्यते, तथापि यथा जयः पराजयो वा योधेषु वर्त्तमानः प्राधान्यात् स्वामिन्यपदिश्यते एवं बन्धमोक्षौ बुद्धिसत्त्वे वर्त्तमानौ कथञ्चित् पुरुषेऽपदिश्येते, स ह्यविभागापत्त्या तत्फलस्य भोक्तेति। तदेतदभिसन्धायाह। "स्यादपि कदाचिन्मोक्षोपपत्तिः" इति। अत्रोच्यते। "नैकत्वादेव तप्यतापकभावानुपपत्तेः"। यत एकत्वे तप्यतापकभावो नोपपद्यते, एकत्वादेव, तस्मात्सांव्यवहारिकभेदाश्रयस्तप्यतापकभावोऽस्माभिरभ्युपेयः, तापो हि सांव्यवहारिक एव न पारमार्थिक इत्यसकृदावेदितम्। भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयातामित्यस्मदभ्युपगम इति शेषः। सांख्योऽपि हि भेदाश्रयं तप्यतापकभावं ब्रुवाणो न पुरुषस्य तत्कर्मतामाख्यातुमर्हति, तस्यापरिणामितया तत्क्रियाजनितफलशालित्वानुपपत्तेः। केवलमनेन सत्त्वं तप्यमभ्युपेयं तापकश्च रजः। दर्शितविषयत्वात्तु बुद्धिसत्त्वे तप्ये तदविभागापत्त्या पुरुषोऽप्यनुतप्यत इव न तु तप्यतेऽपरिणामित्वादित्युक्तं, तदविभागापत्तिश्चाविद्या, तथा चाविद्याकृतस्तप्यता-

पकभावस्त्वयाऽभ्युपेयः, सोऽयमस्माभिरच्यमानः किमिति भवतः परुष इवाभाति। अपि च नित्यत्वाभ्युपगमाच्च तापकस्यानिर्मोक्षप्रसङ्गः। शङ्कते। "तप्यतापकयोर्नित्यत्वेऽपि" इति। सत्त्वादर्शनेन निमित्तेन वर्तत इति अनिमित्तः संयोगस्तदपेक्षत्वादिति। निराकरोति। "नादर्शनस्य तमसः" इति। न तावत् पुरुषस्य तप्तिरित्युक्तम्। केवलमियं बुद्धिसत्त्वस्य तापकरजोजनिता, तस्य च बुद्धिसत्त्वस्य तामसविपर्यासादात्मनः पुरुषाद्भेदमपश्यतः पुरुषस्तप्यत इत्यभिमानः, न तु पुरुषो विपर्यासलेशेनापि युज्यते, तस्य तु बुद्धिसत्त्वस्य सात्त्विक्या विवेकख्यात्या तामसोऽयमविवेकख्यातिर्निवर्तनीया। न च सति तमसि मूले शक्यात्यन्तमुच्छेत्तुम्। तथा विच्छिन्नापि छिन्नबदरीव पुनस्तमसोद्भूतेन सत्त्वमभिभूय विवेकख्यातिमपोह्य शतशाखाऽविद्याविर्भाव्येतेति वर्तेयमपवर्गकथा तपस्विनो दत्तजलाञ्जलिः प्रसज्येत। अस्मत्पक्षे त्वदोष इत्याह। "औपनिषदस्य तु" इति। यथा हि मुखमवदातमपि मलिनादर्शतलोपकल्पितप्रतिबिम्बभेदं मलिनतामुपैति, न च तद्वस्तुतो मलिनं, न च बिम्बात् प्रतिबिम्बं वस्तुतो भिद्यते। अथ तस्मिन् प्रतिबिम्बे मलिनादर्शोपधानान्मलिनता पदं लभते। तथा चात्मनो मलिनं मुखं पश्यन् देवदत्तस्तप्यते। यदा तूपाध्यपनयाबिम्बमेव कल्पनावशात् प्रतिबिम्बं तच्चावदातमिति तत्त्वमवगच्छति तदास्य तापः प्रशाम्यति न च मलिनं मे मुखमिति। एवमविद्योपधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्पः कल्पितैरेव शब्दादिभिः सम्पर्कात्तप्यते न तु तत्त्वतः परमात्मनोऽस्ति तापः। यदा तु तत्त्वमसीति वाक्यश्रवणमननध्यानाभ्यासपरिपाकप्रकर्षपर्यन्तजोऽस्य साक्षात्कार

उपजायते तदा जीवः शुद्धबुद्धस्वस्वभावमात्मनोऽनुभवन् निरस्तनिखिलसवासनक्लेशजालः केवलः स्वस्थो भवति न चास्य पुनः संसारभयमस्ति तद्धेतोरवास्तवत्वेन समूलकाषं कषितत्वात्। सांख्यस्य तु सतस्तमसोऽशक्यसमुच्छेदत्वादिति। तदिदमुक्तम्। "विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणात्" इति। "प्रधानकारणवादः" इति। यथैव प्रधानकारणवादो ब्रह्मकारणवादिभिर्निराकृतः एवं परमाणुकारणवादोऽप्यतः सोऽपि निराकर्त्तव्यः। एतेन शिष्टापरिग्रहा अपि व्याख्याता इत्यस्य प्रपञ्च आरभ्यते। तत्र वैशेषिका ब्रह्मकारणत्वं दूषयाञ्चक्रुः। चेतनं चेदाकाशादीनामुपादानं तदारब्धमाकाशादि चेतनं स्यात्। कारणगुणक्रमेण हि कार्य्ये गुणारम्भो दृष्टः, यथा शुक्लैस्तन्तुभिरारब्धः पटः शुक्लः, न त्वसौ कृष्णो भवति। एवं चेतनेनारब्धमाकाशादि चेतनं भवेन्न त्वचेतनम्। तस्मादचेतनोपादानमेव जगत्तच्चाचेतनं परमाणवः, सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते, यथा तन्तुभिः पटस्यैवमंशुभ्यस्तन्तूनामेवमपकर्षपर्य्यन्तं कारणद्रव्यमतिसूक्ष्ममनवयवमवतिष्ठते, तच्च परमाणुस्तस्य तु सावयवत्वेऽभ्युपगम्यमानेऽनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्ग इत्युक्तम्। तत्र च प्रथमं तावददृष्टवदात्मसंयोगात्परमाणौ कर्म, ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते। बहवस्तु परमाणवः संयुक्ता न सहसा स्थूलमारभन्ते, परमाणुत्वे सति बहुत्वात्, घटोपगृहीतपरमाणुवत्। यदि हि घटोपगृहीताः परमाणवो घटमारभेरन् न घटे प्रविभज्यमाने कपालशर्करादायुपलभ्येत, तेषामनारब्धत्वात्, घटस्यैव तु तैरारब्धत्वात्। तथा सति मुद्गरप्रहाराद् घटविनाशे न किञ्चिदुपलभ्येत,

तेषामनारब्धत्वात्। तदवयवानां परमाणूनामतीन्द्रियत्वात्। तस्माच्च बहूनां परमाणूनां द्रव्यं प्रति समवायिकारणत्वम्, अपि तु द्वावेव परमाणू द्व्यणुकमारभेते। तस्य चाणुत्वं परिमाणं परमाणुपरिमाणात् पारिमाण्डल्यादन्यदीश्वरबुद्धिमपेक्ष्योत्पन्ना द्वित्वसंख्याऽऽरभते। न च द्व्यणुकाभ्यां द्रव्यस्यारम्भः, वैयर्थ्यप्रसङ्गात्। तदपि हि द्व्यणुकमेव भवेन्न तु महत्। कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो हि महत्त्वस्योत्पत्तिः। न च द्व्यणुकयोर्महत्त्वमस्ति, यतस्ताभ्यामारब्धं महद्भवेत्। नापि तयोर्बहुत्वं, द्वित्वादेव।

न च प्रचयभेदस्तूलपिण्डानामिव, तदवयवानामनवयवत्वेन प्रशिथिलावयवसंयोगभेदाभावात्। तस्मात्तन्नापि तत्कारणद्व्यणुकवदणुनैव भवितव्यं, तथा च पुरुषोपभोगातिशयाभावाददृष्टनिमित्तत्वाच्च विश्वनिर्माणस्य भोगार्थत्वात्तत्कारणेन च द्व्यणुकेन तन्निष्पत्तेः कृतं द्व्यणुकाश्रयेण द्व्यणुकान्तरेणेत्यारम्भवैयर्थ्यादारम्भार्थवत्त्वाय बहुभिरेव द्व्यणुकैस्त्र्यणुकं चतुरणुकं पञ्चाणुकं वा द्रव्यं महद्दीर्घमारब्धव्यम्। अस्ति हि तत्र तत्र भोगभेदोऽस्ति च बहुत्वसंख्येश्वरबुद्धिमपेक्ष्योत्पन्ना महत्त्वपरिमाणयोनिः। त्र्यणुकादिभिरारब्धं तु कार्यद्रव्यं कारणबहुत्वाद्वा कारणमहत्त्वाद्वा कारणप्रचयभेदाद्वा महद्भवतीति प्रक्रिया। तदेतयैव प्रक्रियया कारणसमवायिनो गुणाः कार्यद्रव्ये समानजातीयमेव गुणान्तरमारभन्त इति दूषणमदूषणीक्रियते, व्यभिचारादित्याह।

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्॥ ११॥

यथा महद् द्रव्यं त्र्यणुकादि ह्रस्वाद् द्व्यणुकाज्जायते, न तु महत्त्वगुणोपजनने द्व्यणुकगतं महत्त्वमपेक्षते, तस्य ह्रस्व-

त्वात्। यथा वा तदेव द्व्यणुकादि दीर्घं ह्रस्वाद् द्व्यणुकाज्जायते, न तु तद्गतं दीर्घत्वमपेक्षते, तदभावात्। वाशब्दार्थेऽनुक्तसमुच्चयार्थः। यथा द्व्यणुकमणुह्रस्वपरिमाणं परिमण्डलात् परमाणोरपरिमण्डलं जायते एवमचेतनाद् ब्रह्मणोऽचेतनं जगद्भविष्यतीति सूत्रयोजना। भाष्ये "परमाणुगुणविशेषस्तु" इति। पारिमाण्डल्यग्रहणमुपलक्षणं, न द्व्यणुकेऽणुत्वमपि परमाणुवृत्ति पारिमाण्डल्यमारभते, तस्य हि द्वित्वसंख्यायोनित्वादित्यपि द्रष्टव्यम्। ह्रस्वपरिमण्डलाभ्यामिति सूत्रं गुणिपरं न गुणपरम्। "यदापि द्वे द्वे द्व्यणुके" इति पठितव्ये प्रमादादेकं द्वेपदं न पठितम्। एवं चतुरणुकमित्याद्युपपद्यते। इतरथा हि द्व्यणुकमेव तदपि स्यात्, न तु महदित्युक्तम्। अथवा द्वे इति द्वित्वे, यथा द्व्येकयोर्द्विवचनैकवचने इति। अत्र हि द्वित्वैकत्वयोरित्यर्थः। अन्यथा द्व्येकेष्विति स्यात्संख्येयानां बहुत्वात्। तदेवं योजनीयम्। द्व्यणुकाधिकरणे ये द्वित्वे ते यदा चतुरणुकमारभेते संख्येयानां चतुर्णां द्व्यणुकानामारम्भकत्वात्तद्गते द्वित्वसंख्ये अपि आरम्भिके इत्यर्थः। एवं व्यवस्थितायां वैशेषिकप्रक्रियायां तद्दूषणस्य व्यभिचार उक्तः। यद्यप्यव्यवस्थिता तथापि तद्वस्थो व्यभिचार इत्याह। "यदापि बहवः परमाणवः" इति। नाणु जायते नो ह्रस्वं जायते इति योजना। चोदयति। "अथ मन्यसे विरोधिना परिमाणान्तरेण" स्वकारणद्वारेणाक्रान्तत्वादिति। परिहरति। "मैवं मंस्थाः" इति। कारणगता गुणा न कार्ये समानजातीयं गुणान्तरमारभन्त इत्येतावन्मात्रैर्नियमो न तद्धेत्वनुसरणे खेदनीयं मन इत्यर्थः। अपि च सत्परिमाणान्तरमाक्रामति नोत्पत्तेः प्राक् परिमाणान्तरमसदिति कथमाक्रामेत्। न च तत्कारणमाक्रामति।

पारिमाण्डल्यस्यापि समानजातीयस्य कारणस्याक्रमणहेतोर्भावेन समानबलतयोभयकार्य्यानुत्पादप्रसङ्गादित्याशयवानाह। "न च परिमाणान्तराक्रान्तत्वम्" इति। न च परिमाणान्तरारम्भे व्यापृतता पारिमाण्डल्यादीनाम्। न च कारणबहुत्वादीनां सन्निधानमसन्निधानञ्च पारिमाण्डल्यस्येत्याह। "न च परिमाणान्तरारम्भे" इति। व्यभिचारान्तरमाह। "संयोगात् च" इति। शङ्कते। "द्रव्ये प्रकृते" इति। निराकरोति। "न दृष्टान्तेन" इति। न चास्माकमयं नियमो भवतामपीत्याह। "सूत्रकारोऽपि" इति। सूत्रं व्याचष्टे। "यथा प्रत्यक्षाप्रत्यक्षयोः" इति। शेषमतिरोहितार्थम्॥

## उभयथापि न कर्मातस्तदभावः॥ १२॥

परमाणूनामाद्यस्य कर्मणः कारणाभ्युपगमेऽनभ्युपगमे वा न कर्मातस्तदभावः, तस्य द्व्यणुकादिक्रमेण सर्गस्याभावः। अथवा यदणुसमवाय्यदृष्टमथवा चेतनसमवायि, उभयथापि तस्याचेतनस्य चेतनानधिष्ठितस्याप्रवृत्तेः कर्माभावोऽतस्तदभावः सर्गाभावः। निमित्तकारणतामात्रेण त्वीश्वरस्याधिष्ठातृत्वमुपरिष्टान्निराकरिष्यते। अथवा संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथापि न कर्मातः सर्गहेतोः संयोगस्याभावात् प्रलयहेतोर्विभागस्याभावात् तदभावः, तयोः सर्गप्रलययोरभाव इत्यर्थः। तदेतत् सूत्रं तात्पर्य्यतो व्याचष्टे। "इदानीं परमाणुकारणवादम्" इति। निराकार्य्यस्वरूपमुपवर्णितम् -
ितमाह। "स च वादः" इति। "स्वानुगतैः" स्वसम्बद्धैः। सम्बन्धश्चाधार्य्याधारभूत इह प्रत्ययहेतुः समवायः। पञ्चमभूतस्यानवयवत्वात् तानीमानि चत्वारि भूतानीति। तत्र परमाणुकारणवादे इदमभिधीयते सूत्रम्। तत्र प्रथमो

व्याख्यामाह। "कर्मवताम्" इति। अभिघातादीन्यादिग्रहणेन नोदनसंस्कारगुरुत्वद्रवत्वानि गृह्यन्ते। नोदनसंस्कारावभिघातेन समानयोगक्षेमौ गुरुत्वद्रवत्वे च परमाणुगते सदातने इति कर्मसातत्यप्रसङ्गः। द्वितीयं व्याख्यानमाशङ्कापूर्वमाह। "अथादृष्टं" धर्माधर्मौ, "आद्यस्य कर्मणः" इति। "आत्मनश्च" चेतनस्य "अनुत्पन्नचैतन्यस्य" इति। "अदृष्टवता पुरुषेण" इति। संयुक्तसमवायसम्बन्ध इत्यर्थः। "सम्बन्धस्य सातत्यात्" इति। यद्यपि परमाणुचेतनयोः संयोगः परमाणुकर्मजस्तथापि तत्प्रवाहस्य सातत्यमिति भावः। सर्वात्मना चेदुपचयाभावः, एकदेशेन हि संयोगे यावपरावेकदेशौ निरन्तरौ ताभ्यामन्ये एकदेशाः संयोगिनाव्याप्ता इति प्रथिमोपपद्यते। सर्वात्मना तु नैरन्तर्ये परमाणावेकस्मिन् परमाणवन्तराण्यपि समाप्नोतीति न प्रथिमा स्यादित्यर्थः। शङ्कते। यद्यपि निष्प्रदेशाः परमाणवस्तथापि संयोगस्तयोरव्याप्यवृत्तिरेवंस्वभावत्वात्, कैषा वाचो युक्तिर्निष्प्रदेशं संयोगो न व्याप्नोतीति। एवैव वाचो युक्तिर्यद्यथा प्रतीयते तत्तथाभ्युपेयत इति। तामिमां शङ्कां सूत्रकार आह। "परमाणूनां कल्पिताः" इति। नह्यस्ति सम्भवो निरवयव एकस्तदैव तेनैव संयुक्तश्चासंयुक्तश्चेति, भावाभावयोरेकस्मिन्नद्वये विरोधात्, अविरोधे वा न क्वचिदपि विरोधोऽवकाशमासादयेत्। प्रतीतिस्तु प्रदेशकल्पनयापि कल्प्यते। तदिदमुक्तं 'कल्पिताः प्रदेशाः' इति। तथा च सूत्रमित्यमिति तामुद्धरति। "कल्पितानामवस्तुत्वात्" इति। तृतीयां व्याख्यामाह। "यथा चादिसर्गः" इति। नन्वभिघातनोदनादयः प्रलयारम्भसमये कस्माद्विभागारम्भककर्महेतवो न सम्भवन्त्यत आह। "नहि तत्रापि किञ्चिन्नियतम्" इति। सम्भवन्त्यभिघातादयः कदा-

चित् क्वचित् त्वपर्य्यायेण सर्वस्मिन्निगमहेतोरभावादित्यर्थः। "न प्रलयप्रसिद्ध्यर्थम्" इति। यद्यपि शरीरादिप्रलयावस्थेऽस्ति दुःखभोगस्तथाप्यसौ पृथिव्यादिप्रलये नास्तीत्यभिप्रेत्येदमुदितमिति मन्तव्यम् ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१३॥

व्याचष्टे "समवायाभ्युपगमाच्च" इति। न तावत् स्वतन्त्रः समवायोऽत्यन्तं भिन्नः समवायिभ्यां समवायिनौ घटयितुमर्हत्यतिप्रसङ्गात्। तस्मादनेन समवायिसम्बन्धिना सता समवायिनौ घटनीयौ, तथा च समवायस्य सम्बन्धान्तरेण समवायिसम्बन्धेऽभ्युपगम्यमानेऽनवस्था। यथासौ सम्बन्धिभ्यां सम्बन्धे न सम्बन्धान्तरमपेक्षते सम्बन्धिसम्बन्धनपरमार्थत्वात्। तथाहि नासौ भिन्नोऽपि सम्बन्धिनिरपेक्षो निरूप्यते। न च तस्मिन् सति सम्बन्धिनावसम्बन्धिनौ भवतस्तस्मात् स्वभावादेव समवायः समवायिनोर्न सम्बन्धान्तरेणेति नानवस्थेति चोदयति। "नन्विह प्रत्ययग्राह्यः" इति। परिहरति। "नोच्यते, संयोगोऽप्येवम्" इति। तथाहि संयोगोऽपि सम्बन्धिसम्बन्धनपरमार्थः, न च भिन्नोऽपि संयोगिभ्यां विना निरूप्यते, न च तस्मिन् सति संयोगिनावसंयोगिनौ भवत इतितुल्यचर्चः। यदुच्यते गुणः संयोगो न च द्रव्यासमवेतो गुणो भवति, न चास्य समवायं विना समवेतत्वं, तस्मात्संयोगस्यास्ति समवाय इति तद्दूषयति। "न च गुणत्वात्" इति। यद्यसमवायेऽस्यागुणत्वं भवति कामं भवतु न नः काचित् क्षतिस्तदिदमुक्तं "गुणपरिभाषायाश्च" इति। परमार्थतस्तु द्रव्याश्रयोत्थत्वम्। तच्च विनापि समवायं स्वरूपतः संयोगस्योपपद्यत एव। न च कार्य्य-

त्वात्समवाय्यसमवायिकारणापेक्षितया संयोग: संयोगसमवायीति युक्तम्, अत्रसंयोगस्यातथात्वप्रसङ्गात् । अपिच समवायस्यापि सम्बन्ध्यधीनसद्भावस्य सम्बन्धिनयैकस्य द्वयोर्वा विनाशित्वेन विनाशित्वात्कार्य्यत्वम् । नह्यस्ति सत्यवो गुणो वा गुणगुणिनौ वाऽवयवी वाऽवयवावयविनौ वा न स्तोऽप्यस्ति च तयो: सम्बन्ध इति । तस्मात् कार्य्य: समवाय: । तथा च यथैव निमित्तकारणमात्राधीनोत्पाद:, एवं संयोगोऽपि । अथ समवायोऽपि समवाय्यसमवायिकारणे अपेक्षते तथापि सैवानवस्थेति । तस्मात्समवायवत् संयोगोऽपि न सम्बन्धान्तरमपेक्षते । यद्युच्येत सम्बन्धिनावसौ घटयति नात्मानमपि सम्बन्धिभ्यां तत् किमसावसम्बद्ध एव सम्बन्धिभ्यामिवं चेदत्यन्तभिन्नोऽसम्बद्ध: कथं सम्बन्धिनौ सम्बन्धयेत् । सम्बन्धने वा हिमवद्विन्ध्यावपि सम्बन्धयेत् । तस्मात्संयोग: संयोगिना: समवायेन सम्बद्ध इति वक्तव्यम् । तदेतत्समवायस्यापि समवायिसम्बन्धे समानमन्यत्राभिनिवेशात्तथा चानवस्थेति भाव: ॥

## नित्यमेव च भावात् ॥ १४ ॥

प्रवृत्तेरप्रवृत्तेर्वेति शेष: । अतिरोहितार्थमस्य भाष्यम् ॥

## रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात् ॥ १५ ॥

यत् किल भूतभौतिकानां मूलकारणं तद्रूपादिमान् परमाणुर्नित्य इति भवद्भिरभ्युपेयते, तस्य चेद्रूपादिमत्त्वमभ्युपेयेत परमाणुत्वनित्यत्वविरुद्धे स्थौल्यानित्यत्वे प्रसज्येयातां, सोऽयं प्रसङ्ग एकधर्माभ्युपगमे धर्मान्तरस्य, नियता प्राप्तिर्हि प्रसङ्गलक्षणं, तदनेन प्रसङ्गेन जगत्कारणप्रसिद्धये प्रवृत्तं साधनं रूपादिमन्नित्यपरमाणुसिद्धे: प्रच्याव्य ब्रह्मगोचरतां

नीयते। तदेतद्वैशेषिकाभ्युपगमोपन्यासपूर्वकमाह। "साव-
यवानां द्रव्याणाम्" इति। परमाणुनित्यत्वसाधनानि च
तेषामुपन्यस्य दूषयति। "यच्च नित्यत्वे कारणम्" इति।
"सत्" इति। प्रागभावाद् व्यवच्छिनत्ति। "अकारणवत्"
इति। घटादेः। "यदपि द्वितीयम्" इति। लब्धरूपं हि
क्वचित् किञ्चिदन्यत्र निषिध्यते। तेनानित्यमिति लौकिकेन
निषेधेनान्यत्र नित्यत्वसद्भावः कल्पनीयस्ते चान्ये परमाणव
इति। तन्न। आत्मन्यपि नित्यत्वोपपत्तेः। व्यपदेशस्य च
प्रतीतिपूर्वकस्य तदभावे निर्मूलस्यापि दर्शनात्। यथेह
वटे यक्ष इति। यदपि नित्यत्वे तृतीयं कारणमविद्येति।
यदि सतां परमाणूनां परिदृश्यमानस्थूलकार्याणां प्रत्यक्षेण
कारणाग्रहणमविद्या तया नित्यत्वमेवं सति द्व्यणुकस्यापि
नित्यत्वम्। अथाद्रव्यत्वे सतीति विशेष्येत तथा सति न
द्व्यणुके व्यभिचारः, तस्यानेकद्रव्यत्वेनाविद्यमानद्रव्यत्वानुप-
पत्तेः। तथाप्यकारणत्वमेव नित्यतानिमित्तमापद्येत यतो-
ऽद्रव्यत्वमविद्यमानकारणभूतद्रव्यत्वमुच्यते तथा च पौनरु-
क्तमित्याह। "तस्य च" इति। अपि चाद्रव्यत्वे सति सत्त्वा-
दित्यत एवेष्टार्थसिद्धेरविद्येति व्यर्थम्। अथाविद्यापदेन
द्रव्यविनाशकारणद्वयाविद्यमानत्वमुच्यते द्विविधो हि द्रव्य-
नाशहेतुरवयवविनाशोऽवयवव्यतिषङ्गविनाशश्च, तदुभयं पर-
माणौ नास्ति तस्मान्नित्यः परमाणुः। न च सुखादिभि-
व्यभिचारः, तेषामद्रव्यत्वादित्याह। "तथापि" इति। निरा-
करोति। "नावश्यम्" इति। यदि हि संयोगसचिवानि
बहूनि द्रव्याणि द्रव्यान्तरमारभेरन्निति प्रक्रिया सिध्येत् सिध्येद्
द्रव्यद्वयमेव तद्विनाशकारणमिति। न त्वेतदस्ति। द्रव्य-
स्वरूपापरिज्ञानात्। न तावत् तन्त्वाधारस्तद्व्यतिरिक्तः

पटो नामास्ति यः संयोगसचिवैस्तन्तुभिरारभ्येतेत्युक्तमध-स्तात्। षट्पदार्थांश्च दूषयत्रग्रे वक्ष्यति। किन्तु कारणमेव विशेषवदवस्थान्तरमापद्यमानं कार्य्यं तच्च सामान्यात्मकम्। तथाहि मृद्वा सुवर्णं वा सर्वेषु घटरुचकादिष्वनुगतं सामान्य-मनुभूयते, न चैते घटरुचकादयो मृत्सुवर्णाभ्यां व्यतिरि-च्यन्त इत्युक्तं, अग्रे च वक्ष्यामः। तस्मान्मृत्सुवर्णं एव तेन तेनाकारेण परिणममाने घट इति च रुचक इति च कपाल-शर्कराकणमिति च शकलकणिकाचूर्णमिति च व्याख्यायेते। तत्र तत्रोपादानयोर्मृत्सुवर्णयोः प्रत्यभिज्ञानात्। न तु घटा-दयो वा कपालादिषु कपालादयो वा घटादिषु च रुचका-दयो वा शकलादिषु शकलादयो वा रुचकादिषु प्रत्यभिज्ञा-यन्ते यत्र कार्य्यकारणभावो भवेत्। न च विनश्यन्तमेव घटक्षणं प्रतीत्य कपालक्षणोऽनुपादान एवोत्पाद्यते तत्किमु-पादानप्रत्यभिज्ञानेनेति वक्तव्यं, एतस्या अपि वैनाशिकप्र-क्रियाया उपदिष्टाद् निराकरिष्यमाणत्वात्। तस्मादुप-जनापायधर्माणो विशेषावस्थाः सामान्यस्योपादेयाः, सामा-न्यात्मा तूपादानमेवं व्यवस्थिते यथा सुवर्णद्रव्यं काठिन्याव-स्थामपहाय द्रवावस्थया परिणतं न च तत्रावयवविभागः सत्रापि द्रवत्वे कारणं परमाणूनां भवत्विति तदभावेन द्रव-त्वानुपपत्तेस्तस्माद्यथा परमाणुद्रव्यमग्निसंयोगात् काठिन्य-मपहाय द्रवत्वेन परिणमते, न च काठिन्यद्रवत्वे परमाणो-र्व्यतिरिच्येते। एवं मृद्वा सुवर्णं वा सामान्यं पिण्डावस्थामप-हाय कुलालहेमकारादिव्यापाराद् घटरुचकाद्यवस्थामाप-द्यते। न त्ववयवविनाशात्तत्संयोगविनाशाद्वा विनष्टमस्ति घटरुचकादयः। न हि कपालादयोऽस्योपादानं तत्संयोगो वाऽसमवायिकारणमपि तु समान्यमुपादानं तच्च नित्यं न

च तत्संयोगसचिवमेकत्वात्, संयोगस्य द्विष्ठत्वेनैकस्मिन्नभावात्। तस्मात्सामान्यस्य परमार्थसतोऽनिर्वाच्या विशेषावस्थास्तदधिष्ठाना भुजङ्गादय इव रज्ज्वाद्युपादाना उपजनापायधर्माण इति सम्मतम्। प्रकृतमुपसंहरति। "तस्मात्" इति॥

## उभयथा च दोषात्॥ १६॥

अनुभूयते हि पृथिवी गन्धरूपरसस्पर्शात्मिका स्थूला, आपो रसरूपस्पर्शात्मिकाः सूक्ष्माः, रूपस्पर्शात्मकं तेजः सूक्ष्मतरं, स्पर्शात्मको वायुः सूक्ष्मतमः। पुराणेऽपि स्मर्यते।

आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत्।
द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत्॥
रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ।
त्रिगुणस्तु ततो वह्निः स शब्दस्पर्शवान् भवेत्॥
शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत्।
तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः॥
शब्दः स्पर्शश्च रूपञ्च रसश्चेद्गन्धमाविशत्।
संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम्॥
तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते।
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः॥
परस्परानुप्रवेशाद्धारयन्ति परस्परम्।

तेन गन्धादयः परस्परं संहन्यमानाः पृथिव्यादयस्तथा च यथायथा संहन्यमानानामुपचयस्तथातथा संहतस्य स्थौल्यं यथायथाऽपचयस्तथातथा सौक्ष्म्यतारतम्यं तदेवमनुभवागमाभ्यामवस्थितमर्थं वैशेषिकैरनिच्छद्भिरप्यशक्यापह्नवमाह। "गन्ध" इति। अस्तु तावच्छब्दो वैशेषिकैस्तस्य पृथिव्यादिगुणत्वे-

मानभ्युपगमादिति चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहृतवान् । अनुभवागमविरुद्धमर्थमुक्त्वा विकल्प्य दूषयति । "महत्" । स्थूलपृथिव्यादिवत् । "परमाणवोऽपि" इति । "उपचितगुणानां मूर्त्युपचयात्" उपचितसङ्घन्यमानानां सङ्घातोपचयात् "अपरमाणुत्वप्रसङ्गः" स्थूलत्वादिति । यस्तु ब्रूते न गन्धादिसङ्घातः परमाणुरपि तु गन्धाद्याश्रयो द्रव्यं न च गन्धादीनां तदाश्रयाणामुपचयेऽपि द्रव्यस्योपचयो भवितुमर्हत्यन्यत्वादिति तं प्रत्याह । "न चान्तरेणापि मूर्त्युपचयं" द्रव्यस्वरूपापचयमित्यर्थः । कुतः । "कार्य्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्" । न तावत् परमाणवो रूपतो गृह्यन्ते किन्तु कार्य्यद्वारा कार्य्यं च न गन्धादिभ्यो भिन्नं यदा न तदाधारतया गृह्यतेऽपि तु तदात्मकतया तथा च तेषामुपचये तदुपचितं दृष्टमिति परमाणुभिरपि तत्कारणैरेवं भवितव्यं तथा चाऽपरमाणुत्वं स्थूलत्वादित्यर्थः । द्वितीयं विकल्पं दूषयति । "अकल्प्यमाने तूपचितगुणत्वे" इति । "अथ सर्वे चतुर्गुणाः" इति । यद्यप्यस्मिन्कल्पे सर्वेषां स्थौल्यप्रसङ्गस्तथाप्यतिस्फुटतयोपेक्ष्य दूषयति । "ततोऽप्स्वपि" इति । वायो रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इत्यपि द्रष्टव्यम् ।

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

निगदव्याख्यातेन भाष्येण व्याख्यातम् । सम्प्रत्युक्तं भाष्यकृद्वैशेषिकतन्त्रं दूषयति । "अपि च वैशेषिकाः" इति । द्रव्याधीनत्वं द्रव्याधीननिरूपणत्वं, न हि, यथा गवाश्वमहिषमातङ्गाः परस्परानधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, वज्राद्यधीनोत्पत्तयो वा धूमादयो यथा वज्राद्यनधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, एवं गुणादयो द्रव्या-

ष्यनधीननिरूपणाः, अपि तु यदा यदा निरूप्यन्ते तदा तदा तदाकारतयैव प्रथन्ते न तु प्रथायामेषामस्ति स्वातन्त्र्यं, तस्मात्तदतिरिच्यन्ते द्रव्यादपि तु द्रव्यमेव सामान्यरूपं तथा तथा प्रथत इत्यर्थः। द्रव्यकार्यत्वमात्रं गुणादीनां द्रव्याधीनत्वमिति मत्वा नञ्चोदयति। "नन्वग्नेरन्यस्यापि" इति। परिहरति। "भेदप्रतीतेरस्तु" इति। न तदधीनोत्पादत्वं तदधीनत्वमाचक्ष्महे किन्तु तदाकारतां तथा च न व्यभिचार इत्यर्थः। शङ्कते। "गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यद्युच्येत"। यत्र हि द्वावाकारिणौ विभिन्नाभ्यामाकाराभ्यामवगम्येते, तौ सम्बद्धासम्बद्धौ वा वैयधिकरण्येन प्रतिभासेते यथेह कुण्डे दधि यथा वा गौरश्व इति न तथा गुणकर्मसामान्यविशेषसमवायानामेषां द्रव्याकारतयाकारान्तरायोगेन द्रव्यादाकारिणोऽन्यत्वं नाकारितया व्यवस्थानाभावात् सेयमयुतसिद्धिस्तया च सामानाधिकरण्येन प्रथेत्यर्थः। तामिमामयुतसिद्धिं विकल्प्य दूषयति। "तत् पुनरयुतसिद्धत्वम्" इति। तत्रापृथग्देशत्वं तदभ्युपगमेन विरुध्यत इत्याह। "अपृथग्देशत्वम्" इति। यदि तु संयोगिनोः कार्ययोः सम्बन्धिभ्यामन्यदेशत्वं युतसिद्धिस्तदन्याऽयुतसिद्धिः नित्ययोऽस्तु संयोगिनोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं युतसिद्धिस्तदन्याऽयुतसिद्धिस्तया चाकाशपरमाण्वोः परमाण्वोश्च संयुक्तयोर्युतसिद्धिः सिद्धा भवति। गुणगुणिनोश्च शौक्ल्यपटयोरयुतसिद्धिः सिद्धा भवति। नहि तत्र शौक्ल्यपटाभ्यां सम्बन्धिभ्यामन्यदेशौ शौक्ल्यपटौ। सत्यपि पटस्य तदन्यतन्तुदेशत्वे शौक्ल्यस्य सम्बन्धिपटदेशत्वात्। तन्न। नित्ययोरात्माकाशयोरजसंयोगे उभयस्या अपि युतसिद्धेरभावात्। नहि तयोः पृथगा-

यथाश्रितत्वमनाश्रितत्वात्, नापि द्वयोरन्यतरस्य वा पृथग्गति-मत्त्वममूर्त्तत्वेनोभयोरपि निष्क्रियत्वात्। न चाजसंयोगो नास्ति, तस्यानुमानसिद्धत्वात्। तथाह्याकाशमात्मसंयोगि, मूर्त्तद्रव्यसङ्गित्वात्, घटादिवदित्यनुमानम्। पृथगाश्रयाश्रयित्वपृथग्गतिमत्त्वलक्षणयुतसिद्धेरन्या त्वयुतसिद्धिर्यद्यपि नाभ्युपेतविरोधमावहति तथापि न सामानाधिकरण्यप्रत्ययमुपपादयितुमर्हति। एवंलक्षणेऽपि हि समवाये गुणगुणिनोरभ्युपगम्यमाने सम्बद्ध इति प्रत्ययः स्यान्न तदात्मप्रत्ययः। अस्य चोपपादनाय समवाय आस्थीयते भवद्भिः। स चेदास्थितोऽपि न प्रत्ययमिममुपपादयेत् कृतं तत्कल्पनया। न च प्रत्यक्षः सामानाधिकरण्यप्रत्ययः समवायगोचरः, तद्विरुद्धार्थत्वात्। तद्गोचरत्वे हि पटे शुक्ल इत्येवमाकारः स्यान्न तु पटः शुक्ल इति। न च शुक्लपदस्य गुणविशिष्टगुणिपरत्वादेवं प्रतीति साम्प्रतम्। नहि शब्दवृत्त्यनुसारि प्रत्यक्षम्। नह्यग्निमाणवक इत्युपचरिताग्निभावो माणवकः प्रत्यक्षेण दहनात्मना प्रथते। न चायमभेदविभ्रमः समवायनिबन्धनो भिन्नयोरपीति वाच्यम्। गुणादिसद्भावे तद्भेदे च प्रत्यक्षानुभवादन्यस्य प्रमाणस्याभावात्तस्य च भ्रान्तत्वे सर्वाभावप्रसङ्गात्। तदाश्रयस्य तु भेदसाधनस्य तद्विरुद्धतयोत्थानासम्भवात्। तदिदमुक्तं "तस्य तादात्म्येनैव प्रतीयमानत्वात्" इति। अपि चायुतसिद्धशब्दोऽपृथगुत्पत्तौ मुख्यः, सा च भवन्मते न द्रव्यगुणयोरस्ति, द्रव्यस्य प्राक् सिद्धेर्गुणस्य च पश्चादुत्पत्तेः, तस्मान्मिथ्यावादोऽयमित्याह। "युतसिद्धयोः" इति। अथ भवतु कारणस्य युतसिद्धिः, कार्यस्य त्वयुतसिद्धिः कारणातिरेकेणाभावात्, इत्याशङ्क्यान्यथा दूषयति। "एवमपि" इति। सम्बन्धिद्वयाधीनसत्त्वो हि

सम्बन्धो नामैकस्मिन्नपि सम्बन्धिनि भवितुमर्हति। न च समवायो नित्यः स्वतन्त्र इति चोद्यमवसरात्। न च कारणसमवायादन्यथा कार्यस्योत्पत्तिरिति यत्नं युक्तम्। एवं हि सति समवायस्य नित्यत्वाभ्युपगमात् कारणवैयर्थ्यप्रसङ्गः। उत्पत्तौ च समवायस्य सैव कार्यस्यास्तु किं समवायेन। सिद्धयोस्तु सम्बन्धे युतसिद्धिप्रसङ्गः। न चान्याऽयुतसिद्धिः सम्भवतीत्युक्तं, ततश्च यदुक्तं वैशेषिकैर्युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्। युतसिद्ध्यभावस्यैवाभावात्। एतेनाप्राप्तिसंयोगौ युतसिद्धिरित्यपि लक्षणमनुपपन्नम्। मा भूदप्राप्तिः कार्यकारणयोः प्राप्तिस्त्वनयोः संयोग एव कस्मान्न भवति, तत्राप्यसंयोगत्वायान्या युतसिद्धिर्वक्तव्या। तथा च सैवास्तां किमनया परस्पराश्रयदोषवत्या। न चान्या सम्भवतीत्युक्तम्। यत्पुनरन्यतराप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजोभयकर्मजा वा संयोगः, यथा स्थाणुश्येनयोर्मेषयोर्वा। न च तन्तुपटयोः सम्बन्धस्तथा, उत्पन्नमात्रस्यैव पटस्य तन्तुसम्बन्धात्। तस्मात्समवाय एवायमित्यत आह। "यथा चोत्पन्नमात्रस्य" इति। संयोगजोऽपि हि संयोगो भवद्भिरभ्युपेयते न क्रियाज एवेत्यर्थः। न चाप्राप्तिपूर्विकैव प्राप्तिः संयोगः, आत्माकाशसंयोगे नित्ये तदभावात्। कार्यस्य चोत्पन्नमात्रस्य कस्मिन् क्षणे कारणप्राप्तिविरह इति। अपि च सम्बन्धिरूपातिरिक्ते सम्बन्धे सिद्धे तदवान्तरभेदाय लक्षणभेदोऽनुश्रीयेत स एव तु सम्बन्ध्यतिरिक्तोऽसिद्धः, उक्तं हि परस्मादतिरिक्तः सम्बन्धिभ्यां सम्बन्धोऽसम्बद्धो न सम्बन्धिनौ घटयितुमीष्टे, सम्बन्धिसम्बन्धे चानवस्थितिः। तस्मादुपपत्त्यनुभवाभ्यां न कार्यस्य कारणादन्यत्वम्, अपितु कार-

यस्यैवायमनिर्वाच्यः परिणामभेद इति। तस्मात् कार्यस्य कारणादनतिरेकात् किं केन सम्बद्धम्। संयोगस्य च संयोगिभ्यामनतिरेकात् कस्तयोः संयोग इत्याह। "नापि संयोगस्य" इति। विचारासहत्वेनानिर्वाच्यतामस्यापरिभावयता शङ्कते। "सम्बन्धिशब्दप्रत्ययव्यतिरेकेण" इति। निराकरोति। "नैकत्वेऽपि स्वरूपबाह्यरूपापेक्षया" इति। तत्तदभिवचनोपनिबन्धनावस्थाभेदापेक्षयैकस्मिन्नपि नानाबुद्धिव्यपदेशोपपत्तिरिति। यथैको देवदत्तः स्वगतविशेषापेक्षया मनुष्यो ब्राह्मणो वदान्यः, स्वगतावस्थाभेदापेक्षया बालो युवा स्थविरः, स्वक्रियाभेदापेक्षया श्रोत्रियः, परापेक्षया तु पिता पुत्रः पौत्रो भ्राता जामातेति। निदर्शनान्तरमाह। "यथा चैकापि सती रेखा" इति। दार्ष्टान्तिके योजयति। "तथा सम्बन्धिनः" इति। अङ्गुल्योर्निरन्तरत्वं संयोगः, दधिकुण्डयोरुत्तराधरत्वं संयोगः। कार्यकारणयोस्तु तादात्म्यादनिर्वाच्यस्य कार्यस्य भेदं विवक्षित्वा सम्बन्धिनोरित्युक्तम्। "नापि सम्बन्धिविषयत्वे सम्बन्धशब्दप्रत्यययोः" इत्येतदप्यनिर्वाच्यभेदाभिप्रायम्। अपि चादृष्टवत्क्षेत्रज्ञसंयोगात् परमाणुमनसोराद्यं कर्म वर्णयिष्यति। "अग्नेरूर्ध्वज्वलनं, वायोस्तिर्यक् पवनम्, अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानीति वचनात्। न चाणुमनसोरात्मनाऽप्रदेशेन संयोगः सम्भवति। सम्भवे चाणुमनसोरात्मव्यापित्वात् परममहत्त्वेनानणुत्वप्रसङ्गात्। न च प्रदेशवृत्तिरनयोरात्मना संयोगोऽप्रदेशत्वादात्मनः, कल्पनायाश्च वस्तुतत्त्वव्यवस्थापनासहत्वादतिप्रसङ्गादित्याह। "तथाऽण्वात्ममनसाम्" इति। किञ्चान्यद् द्वाभ्यामणुभ्यां कारणाभ्यां सावयवस्य कार्यस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः। संश्लेषः सम्पर्को यत एकसम्बन्ध्याकर्षे सम्बन्ध्यन्तराकर्षो

भवति तस्यानुपपत्तिरिति। अत एव संयोगादन्यः कार्यकारणद्रव्ययोराश्रयाश्रितभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्पनीयः समवाय इति चेत्। निराकरोति। "न" कुतः। "इतरेतराश्रयत्वात्"। तद्विभजते। "कार्यकारणयोर्हि" इति। "अन्यत् परमाणूनाम्" इति। ये हि परिच्छिन्नास्ते सावयवा, यथा घटादयः। तथा च परमाणवस्तस्मात्सावयवा अनित्याः स्युः। अपरिच्छिन्नत्वे चाकाशादिवत् परमाणुत्वव्याघात। प्रकृते। "यास्त्वम्" इति। निराकरोति। "न स्थूला" इति। किं सूक्ष्मत्वात् परमाणवो न विनश्यन्त्यथ निरवयवतया, तत्र पूर्वस्मिन् कल्प इदमुक्तम्। "वस्तुभूतापि" इति। अवश्यं उत्तरं कल्पमाशङ्क्य निराकरोति। "विनश्यन्तोऽप्यवयवविभागेन" इति। "यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामपि" इति। यथा हि पिष्टपिण्डोऽविनष्टदवयवसंयोग एव प्रयत्नेन प्रथमानश्चाश्वत्थपत्राकारतां नीयमानः पुरोडाशतामापद्यते, तत्र पिण्डो नश्यति पुरोडाशश्चोत्पद्यते, न हि तत्र पिण्डावयवसंयोगा विनश्यन्ति, अपि तु संयुक्ता एव सन्तः परं प्रयत्नेन नुद्यमाना अधिकदेशव्यापका भवन्ति, एवमग्निसंयोगेन सुवर्णद्रव्यावयवाः संयुक्ता एव सन्तो द्रवीभावमापद्यन्ते, न तु मिथो विभज्यन्ते। तस्माद्यथावयवसंयोगविनाशमन्तरेणापि सुवर्णपिण्डो विनश्यति संयोगान्तरोत्पादमन्तरेण च सुवर्णं द्रव उपजायते, एवमन्तरेणाप्यवयवसंयोगविनाशं परमाणवो विनङ्क्ष्यन्त्यन्ये चोत्पत्स्यन्त इति सर्वमवदातम्॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः॥ १८॥

अवान्तरसङ्गतिमाह। "वैशेषिकराद्धान्तः" इति। वैशे-

षिकाः अर्धवैनाशिकास्ते हि परमाण्वाकाशदिक्कालात्मनसां सामान्यविशेषसमवायानां गुणानां च केषाञ्चिन्नित्यत्वमभ्युपेत्य शेषाणां निरन्वयविनाशमुपयन्ति, तेन तेऽर्धवैनाशिकास्तेन तदुपन्यासो वैनाशिकत्वसाम्येन सर्ववैनाशिकान् स्मारयतीति तदनन्तरं वैनाशिकमतनिराकरणमिति। अर्धवैनाशिकानां स्थिरभाववादिनां समुदायारम्भ उपपद्येनापि क्षणिकभाववादिनां त्वसौ दुर्घट इत्युपपादयिष्यामः। तेन सत्वरमित्युक्तम्। तदिदं दूषणाय वैनाशिकमतमुपन्यस्तम् तत्प्रकारभेदानाह। "स च बहुप्रकारः" इति। वादिवैचित्र्यात् खलु केचित्सर्वास्तित्वमेव बाह्यान्तः प्रतिपद्यन्ते, केचिज्ज्ञानमात्रास्तित्वं, केचित्सर्वशून्यताम्, अथ त्वत्रभवतां सर्वज्ञानां तत्त्वप्रतिपत्तिभेदो न सम्भवति तत्त्वस्यैकरूप्यादिति तदपरितोषेणाह। "विनेयभेदाद्वा"। हीनमध्यमोत्कृष्टधियो हि शिष्या भवन्ति। तत्र ये हीनमतयस्ते सर्वास्तित्ववादेन तदाशयानुरोधात् शून्यतायामवतार्यन्ते। ये तु मध्यमास्ते ज्ञानमात्रास्तित्वेन शून्यतायामवतार्यन्ते। ये तु प्रकृष्टमतयस्तेभ्यः साक्षादेव शून्यतातत्त्वं प्रतिपाद्यते। यथोक्तं बोधिचित्तविवरणे।

देशना लोकनाथानां सत्त्वाशयवशानुगाः।
भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा।
भिन्नापि देशनाऽभिन्ना शून्यताद्वयलक्षणा॥ इति।

यद्यपि वैभाषिकसौत्रान्तिकयोरवान्तरमतभेदोऽस्ति, तथापि सर्वास्तितायामस्ति सम्प्रतिपत्तिरित्येकीकृत्योपन्यासः। तथा च त्रित्वमुपपन्नमिति। पृथिवी खरस्वभावा, आपः स्नेहस्वभावाः, अग्निरुष्णस्वभावः, वायुरीरणस्वभावः। ईरणं प्रेर-

णम्। भूतभौतिकानुक्का चित्तचैत्तिकानाह। "तथा-रूपा" इति। रूप्यन्ते एभिरिति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। यद्यपि रूप्यमाणाः पृथि-व्यादयो बाह्यास्तथापि कायस्थत्वाद्वा इन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिकाः, विज्ञानस्कन्धोऽहमित्याकारो रूपादिवि-षय इन्द्रियादिजन्यो वा दण्डायमानः। वेदनास्कन्धो या प्रियाप्रियानुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्था चित्तस्य जायते स वेदनास्कन्धः। संज्ञास्कन्धः सविकल्प-प्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासो यथा डित्थः कुण्डली गौरो ब्राह्मणो गच्छतीत्येवञ्जातीयकः। संस्कारस्कन्धो रागादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ चेति। तदेतेषां समुदायः पञ्चस्कन्धी। "तस्मिन्नुभयहेतुकेऽपि" इति। बाह्ये पृथिव्याद्यणुहेतुके भूतभौतिकसमुदाये रूप-विज्ञानादिस्कन्धहेतुके च समुदाय आध्यात्मिकेऽभिप्रेयमाणे तदप्राप्तिस्तस्य समुदायस्यायुक्तता। कुतः, "समुदायिनाम-चेतनत्वात्"। चेतनो हि कुलालादिः सर्वं मृद्दण्डाद्युप-संहृत्य समुदायात्मकं घटमारचयन् दृष्टः। न त्वसति मृद्द-ण्डादिव्यापारिणि विदुषि कुलाले स्वयमचेतना मृद्दण्डादयो व्यापृत्य जातु घटमारचयन्ति। न चासति कुविन्दे तन्तु-वेमादयः पटं वयन्ति। तस्मात् कार्योत्पादस्तदनुगुणकार-णसमवधानाधीनस्तदभावे न भवति। कार्योत्पादानुगु-णञ्च कारणसमवधानं चेतनप्रेक्षाधीनमसत्यां चेतनप्रेक्षायां न भवितुमर्हतीति कार्योत्पत्तिश्चेतनप्रेक्षाधीनत्वव्याप्ता व्यापकविरुद्धोपलब्ध्या चेतनानधिष्ठितेभ्यः कारणेभ्यो व्याव-र्त्तमाना चेतनाधिष्ठितत्व एवावतिष्ठत इति प्रतिबन्धसिद्धिः। यद्यचेतनस्य चेतनाधीनैव कार्योत्पत्तिरस्ति तु चित्त

चेतनं तदीन्द्रियादिविषयम्यग्रं सत्यभिज्ञनात् तत्कारणचक्रं यथा यथा कार्य्याय पर्य्याप्तं तथा तथा प्रकाशयदचेतनानि कारणान्यधिष्ठाय कार्य्यमभिनिर्वर्त्तयतीति तत्राह। "चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्"। न खलु बाह्याभ्यन्तरसमुदायसिद्धिमन्तरेण चित्ताभिज्वलनं ततस्तु तामिच्छन् दुरुत्तरमितरेतराश्रयमाविशेदिति। न च प्राग्भवीया चित्ताभिदीप्तिरुत्तरसमुदायं घटयति। घटनसमये तस्याश्चिरातीतत्वेन सामर्थ्यविरहात्। अस्मद्राद्धान्तवदन्यस्य चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य सङ्घातकर्त्तुरनभ्युपगमात्। कारणविन्यासभेदं हि विद्वान् कर्त्ता भवति। न चान्वयव्यतिरेकावन्तरेण तद्विन्यासभेदं वेदितुमर्हति। न च स क्षणिकोऽन्वयव्यतिरेककालानवस्थायी ज्ञातुमन्वयव्यतिरेकावुत्सहते। अत उक्तं "स्थिरस्य" इति। यद्युच्येत असमवहितान्येव कारणानि कार्य्यं करिष्यन्ति परस्परानपेक्षाणि, कृतमत्र समवधाययित्रा चेतनेनेत्यत आह। "निरपेक्षप्रवृत्त्यभ्युपगमे च" इति। यद्युच्येत अन्यालयविज्ञानसन्तानाम्पदं पूर्वापरानुसन्धाद तदेव कारणानां प्रतिसन्धाद भविष्यतीति, तत्राह। "आशयस्यापि" इति। यत् खल्वेकं यदि स्थिरमाश्रीयेत ततो नामान्तरेणात्मैव। अथ क्षणिकं, तत उक्तदोषापत्तिः। न च तत्सन्तानस्तत्त्वान्यत्वे नामान्तरेणात्माऽभ्युपगतोऽनन्यत्वे च विज्ञानमेव तच्च क्षणिकमेवेत्युक्तदोषापत्तिः। आशेरतेऽस्मिन् कर्मानुभववासना इत्याशय आलयविज्ञानं तस्य। अपि च प्रवृत्तिः समुदायिनां व्यापारो न च क्षणिकानां व्यापारो युज्यते। व्यापारो हि व्यापारवदाश्रयस्तत्कारणकश्च लोके प्रसिद्धस्तेन व्यापारवता व्यापारात् पूर्वं व्यापारसमये च भवितव्यम्। अन्यथा कारणत्वाश्रय-

त्वयोरयोगात्। न च ममममययोरस्ति कार्य्यकारणभावो नापि भिन्नकालयोराधाराधेयभावः। तथा च क्षणिकत्वहानिरित्याह। "क्षणिकत्वाभ्युपगमाच्च" इति॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्॥ १९॥

यद्यपीति। अयमर्थः। संक्षेपतो हि प्रतीत्य समुत्पादलक्षणमुक्तं बुद्धेन 'इदं प्रत्ययफलम्' इति। उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितिता धर्मानियामकता प्रतीत्य समुत्पादानुलोमतेति। अथ पुनरयं प्रतीत्य समुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च। स पुनर्द्विविधः। बाह्य आध्यात्मिकश्च। तत्र बाह्यस्य प्रतीत्य समुत्पादस्य हेतूपनिबन्धः। यदिदं बीजादङ्कुरोऽङ्कुरात् पत्रं पत्रात्काण्डं काण्डान्नालो नालाद्गर्भो गर्भाच्छूकः शूकात् पुष्पं पुष्पात् फलमिति असति बीजेऽङ्कुरो न भवति, यावदसति पुष्पे फलं न भवति। सति तु बीजेऽङ्कुरो भवति, यावत् पुष्पे सति फलमिति। तत्र बीजस्य नैवं भवति ज्ञानमहमङ्कुरं निर्वर्त्तयामीति। अङ्कुरस्यापि नैवं भवति, ज्ञानमहं बीजेन निर्वर्त्तित इति। एवं यावत् पुष्पस्य नैव भवति, अहं फलं निर्वर्त्तयामीति। एवं फलस्यापि नैवं भवत्यहं पुष्पेणाभिनिर्वर्त्तितमिति। तस्मादसत्यपि चैतन्ये बीजादीनामसत्यपि चान्यस्मिन्नधिष्ठातरि कार्य्यकारणभावनियमो दृश्यते। उक्तो हेतूपनिबन्धः। प्रत्ययोपनिबन्धः प्रतीत्य समुत्पादस्योच्यते। प्रत्ययो हेतूनां समवायः। हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणीति, तेषामयमानानां भावः प्रत्ययः समवाय इति यावत्। यथा षण्णां धातूनां

समवायाद्बीजहेतुरङ्कुरो जायते तत्र च पृथिवीधातुर्बीजस्य संग्रहकृत्यं करोति, यतोऽङ्कुरः कठिनो भवति । अब्धातुर्बीजं स्नेहयति, तेजोधातुर्बीजं परिपाचयति, वायुधातुर्बीजमभिनिर्हरति, यतोऽङ्कुरो बीजान्निर्गच्छति । आकाशधातुर्बीजस्यानावरणकृत्यं करोति । ऋतुरपि बीजस्य परिणामं करोति । तदेतेषामविकलानां धातूनां समवाये बीजे रोहत्यङ्कुरो जायते नान्यथा । तत्र पृथिवीधातोर्नैवं भवत्यहं बीजस्य संग्रहकृत्यं करोमीति, यावदृतोर्नैवं भवत्यहं बीजस्य परिणामं करोमीति । अङ्कुरस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्निर्वर्त्तित इति । तथाध्यात्मिकः प्रतीत्य समुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च । तत्रास्य हेतूपनिबन्धो यदिदमविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्ययं जरामरणादीति । अविद्या चेन्नाभविष्यन्नैव संस्कारा अजनिष्यन्त । एवं यावज्जातिः, जातिश्चेन्नाभविष्यन्नैव जरामरणादय उदपत्स्यन्त । तत्राविद्याया नैवं भवत्यहं संस्कारानभिनिर्वर्त्तयामीति । संस्काराणामपि नैवं भवति वयमविद्यया निर्वर्त्तिता इति । एवं यावज्जात्या अपि नैवं भवत्यहं जरामरणाद्यभिनिर्वर्त्तयामीति । जरामरणादीनामपि नैवं भवति वयं जात्यादिभिनिर्वर्त्तिता इति । अथ च सत्स्वविद्यादिषु स्वयमचेतनेषु चेतनान्तरानधिष्ठितेष्वपि संस्कारादीनामुत्पत्तिः बीजादिष्विव सत्स्वचेतनेषु चेतनान्तरानधिष्ठितेष्वप्यङ्कुरादीनाम् । इदं प्रतीत्य प्राप्येदमुत्पद्यत इत्येतावन्मात्रस्य दृष्टत्वाच्चेतनाधिष्ठानस्यानुपलब्धेः । सोऽयमाध्यात्मिकस्य प्रतीत्य समुत्पादस्य हेतूपनिबन्धः । अथ प्रत्ययोपनिबन्धः पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां समवायाद्भवति कायः । तत्र कायस्य

पृथिवी धातुः काठिन्यं निर्वर्त्तयति। अब्धातुः स्नेहयति कायं, तेजोधातुः कायस्याशितपीते परिपाचयति। वायुधातुः कायस्य श्वासादि करोति। आकाशधातुः कायस्यान्तः सुषिरभावं करोति। यस्तु नामरूपाङ्कुरमभिनिर्वर्त्तयति पञ्चविज्ञानकायसंयुक्तं सास्रवञ्च मनोविज्ञानं सोऽयमुच्यते विज्ञानधातुः। यदा आध्यात्मिकाः पृथिव्यादिधातवो भवन्त्यविकलास्तदा सर्वेषां समवायाद्भवति कायस्योत्पत्तिः। तत्र पृथिव्यादिधातूनां नैवं भवति वयं कायस्य काठिन्यादि निर्वर्त्तयाम इति। कायस्यापि नैवं भवति ज्ञानमहमेभिः प्रत्ययैरभिनिर्वर्त्तित इति। अथ च पृथिव्यादिधातुभ्योऽचेतनेभ्यश्च तेनान्तरानधिष्ठितेभ्योऽङ्कुरस्येव कायस्योत्पत्तिः सोऽयं प्रतीत्य समुत्पादो दृष्टत्वाद्बाह्यवद्वेदितव्यः। तत्रैतेष्वेव षट्सु धातुषु यैकसंज्ञा पिण्डसंज्ञा नित्यसंज्ञा सुखसंज्ञा सत्त्वसंज्ञा पुद्गलसंज्ञा मनुष्यसंज्ञा मातृदुहितृसंज्ञा अहङ्कारममकारसंज्ञा सेयमविद्या संसारानर्थसम्भारस्य मूलकारणं तस्यामविद्यायां सत्यां संस्कारा रागद्वेषमोहा विषयेषु प्रवर्त्तन्ते। वस्तुविषया विज्ञप्तिर्विज्ञानं विज्ञानाच्चत्वारो रूपिण उपादानस्कन्धास्तन्नाम तानुपादाय रूपमभिनिर्वर्त्तते। तदैकध्यमभिसंक्षिप्य नामरूपं निरुच्यते। शरीरस्यैव कललबुद्बुदाद्यवस्था नामरूपसंमिश्रितानीन्द्रियाणि षडायतनं, नामरूपेन्द्रियाणां त्रयाणां सन्निपातः स्पर्शः, स्पर्शाद्वेदना सुखादिका, वेदनायां सत्यां कर्त्तव्यमितत्सुखं पुनर्मयेत्यध्यवसानं तृष्णा भवति। तत उपादानं वाक्कायचेष्टा भवति। ततो भवः, भवत्यस्मादिति भवो धर्माधर्मौ। तद्धेतुकः स्कन्धप्रादुर्भावो जातिः जन्म। जन्महेतुका उत्तरे जरामरणादयः। जातानां स्कन्धानां परिपाको जरा।

स्कन्धानां नाशो मरणम्। म्रियमाणस्य मूढस्य साभिषङ्गस्य पुत्रकलत्रादावन्तर्दाहः शोकः। तदुत्थं प्रलपनं हा मातः! हा तात! हा च मे पुत्रकलत्रादीति परिदेवना। पञ्चविज्ञानकायसंयुक्तमसाध्वनुभवनं दुःखं, मानसञ्च दुःखं दौर्मनस्यम्। एवं जातीयकाश्चोपायाः 'त उपक्लेशाः' गृह्यन्ते। तेऽमी परस्परहेतुका जन्मादिहेतुका अविद्यादयोऽविद्यादिहेतुकाश्च जन्मादयो घटीयन्त्रवदनिशमावर्त्तमानाः सन्तीति तदेतैरविद्यादिभिराक्षिप्तः सङ्घात इति। तदेतद् दूषयति। "तन्न" कुतः, "उत्पत्तिमात्रनिमित्तत्वात्" इति। अयमभिसन्धिः। यत् खलु हेतूपनिबद्धं कार्य्यं तदन्यानपेक्षं हेतुमात्राधीनोत्पादत्वादुत्पद्यतां नाम, पञ्चस्कन्धसमुदायस्तु प्रत्ययोपनिबद्धो न हेतुमात्राधीनोत्पत्तिः, अपि तु नानाहेतुसमवधानजन्मा, न च चेतनमन्तरेणान्यः सन्निधापयितास्ति कारणानामित्युक्तम्। बीजाद्यङ्कुरोत्पत्तेरपि प्रत्ययोपनिबद्धाया विवादाध्यासितत्वेन पक्षनिक्षिप्तत्वात्। पक्षेण च व्यभिचारोद्भावनायामतिप्रसङ्गेन सर्वानुमानोच्छेदप्रसङ्गात्। स्यादेतत्। अनपेक्षा एवान्त्यक्षणप्राप्ताः क्षित्यादयोऽङ्कुरमारभन्ते। तेषां तूपसर्पणप्रत्ययवशात् परस्परसमवधानम्। न चैकस्मादेव कारणात्कार्य्यसिद्धेः किमन्यैः कारणैरिति वाच्यम्। कारणचक्रानन्तरं कार्य्योत्पादात् सिद्धमित्येव नास्ति। न चैकोऽपि तत्कारणसमर्थ इत्यन्य उदासत इति युक्तम्। नहि ते प्रेक्षावन्तो ये नैवमालोचयेयुरस्मासु समर्थ एकोऽपि कार्य्ये इति कृतं नः सन्निधिनेति। किन्तूपसर्पणप्रत्ययाधीनपरस्परसन्निधानोत्पादा नानुत्पन्नं नाप्यसन्निधानुमीशते। तांश्च सर्वाननपेक्षान् प्रतीत्य कार्य्यमपि न नोत्पत्तुमर्हति। न च स्वमहिम्ना सर्वे

कार्य्यमुत्पादयन्तोऽपि नानाकार्य्याणामीशते तथैव तेषां सामर्थ्यात्। न च कारणभेदात् कार्य्यभेदः, सामग्र्या एकत्वात् तद्भेदस्य च कार्य्यनानात्वहेतुत्वान्यथा दर्शनात्। तत्र। यद्यन्त्यक्षणप्राप्ता अनपेक्षाः स्वकार्य्योपजनने हन्तानेन क्रमेण ततः पूर्वं ततः पूर्वं सर्वे एवानपेक्षास्तत्तत्स्वकार्य्योपजनन इति। कुसूलस्थत्वाविशेषेऽपि येन बीजक्षणेन कुसूलस्थेन स्वकार्य्यक्षणपरम्परयाङ्कुरोत्पत्तिसमर्थो बीजक्षणो जनयितव्यः सोऽनपेक्ष एव बीजक्षणः स्वकार्य्योपजनने। एवं सर्व एव तदनन्तरानन्तरवर्त्तिनो बीजक्षणा अनपेक्षा इति कुसूलनिहितबीज एव स्यात् कृती कृषीवलः, कृतमस्य दुःखबहुलेन कृषिकर्म्मणा। येन हि बीजक्षणेन स्वक्षणपरम्परयाऽङ्कुरो जनयितव्यस्तस्यानपेक्षासौ क्षणपरम्परा कुसूल एवाङ्कुरं करिष्यतीति। तस्मात्परम्परापेक्षा एवान्त्या वा मध्या वा पूर्व्वे वा क्षणाः कार्य्योपजनन इति वक्तव्यम्। यथाहुः।

'न किञ्चिदेकमेकस्मात्सामग्र्याः सर्वसम्भवः' इति।

तत्रेदं समवधानं कारणानां विन्यासभेदतत्प्रयोजनाभिसन्धिं चावगतपूर्व्वकं दृष्टमिति नाचेतनाद्धि सिध्यतीति। तदिदमुक्तम्। "भवेदयमत्र सङ्घातो यदि सङ्घातस्य किञ्चिन्निमित्तमवगम्यते" इति। "इतरेतरप्रत्ययत्वेऽपि" इति। इतरेतरहेतुत्वेऽपीत्यर्थः। उक्तमभिसन्धिमविद्वान् परिचोदयति। "नन्वविद्यादिभिरर्थादाक्षिप्यते" इति। परिहरति। "उच्यते, यदि तावत्" इति। किमाक्षेप उत्पादनम्, आहो ज्ञापनम्। तत्र न तावत् कारणमन्यथानुपपद्यमानं कार्य्यमुत्पादयति, किन्तु स्वसामर्थ्येन। तस्माज्ज्ञापनं वक्तव्यम्। तथा च ज्ञापितस्यान्यदुत्पादकं वक्तव्यम्, तच्च स्थिरपक्षेऽपि सत्यपि च भोक्तरि अधिष्ठातारं चेतनमन्तरेण न

सम्भवति, किमङ्ग पुनः क्षणिकेषु भावेषु। भोक्तृभोगिनामपि कदाचिदाश्रियेत सङ्घातः, स तु भोक्तापि नास्तीति दूरोत्सारितत्वं दर्शयति। "भोक्तृरहितेषु" इति। अपि च सहैव उपकार्य्योपकारकभावेन स्थिताः कार्य्यं जनयन्ति। न च क्षणिकपक्ष उपकार्य्योपकारकभावोऽस्ति, भावस्योपकाराना-स्पदत्वात्। क्षणस्याभिन्नत्वादनुपकृतोपकृतत्वासम्भवात्। कालभेदेन वा तदुपपत्तौ क्षणिकत्वव्याघातात्तदिदमाह। "आश्रयाश्रयिशून्येषु च" इति। "अथायमभिप्रायः" इति। यदा हि प्रत्ययोपनिबन्धनः प्रतीत्य समुत्पादो भवेत्तदा चेतनोऽधिष्ठाताऽपेक्षेतापि, न तु प्रत्ययोपनिबन्धनोऽपि तु हेतूपनिबन्धनः। तथाच ज्ञतमधिष्ठाता हेतुः स्वभावत एव कार्य्यसङ्घातं करिष्यति केवल इति भावः। अस्तु तावद्यथा केवलाद्धेतोः कार्य्यं नोपजायत इति, अन्योन्याश्रयप्रसङ्गोऽस्मिन् पक्ष इत्याशयवानाह। "कथं तेनैव" इति। सम्प्रति प्रत्ययोपनिबन्धनं प्रतीत्य समुत्पादमास्थाय चोदयति। "अथ सन्त्येव सङ्घाता एव" इति। अस्थिरा अपि हि भावाः सदा संहता एवोदयन्ते व्ययन्ते च। न पुनरितस्ततोऽवस्थिताः केनचित् पुञ्जीक्रियन्ते यथा च ज्ञतमत्र संहन्ता चेतनेनेति भावः। "अनादौ" इति परम्पराश्रयं निवर्त्तयति। तदेतद्विकल्प्य दूषयति। "तदापि सङ्घातात्" इति। स खलु सङ्घातसन्ततिवर्त्ती धर्माधर्माशयः संस्कारसन्तानो यथायथं सुखदुःखे जनयन्नागन्तुकं कञ्चनानामाद्य स्वत एव जनयेत् आमाद्य वा। अनामाद्यजननं सदैव सुखदुःखे जनयेत्। असमर्थस्यानपेक्षस्य चेपायोगात्। आमाद्य जननं तदासादनकारणं प्रेक्षावानभ्युपेयः। तथाच न प्रत्ययोपनिबन्धनः प्रतीत्य समुत्पादः। तस्मादनेनागन्तुकानपेक्षस्य सङ्घातकस्यैव

सदृशजनने विसदृशजनने वा स्वभाव आस्थेयः। तथाच भाष्योक्तं दूषणमिति। "यदि च यद्भोगार्थः सङ्घातः स्यात्" इति। अप्राप्तभोगो हि भोगार्थी भोगमाप्तुकामस्तत्साधने प्रवर्त्तत इति प्रत्यात्मसिद्धम्। सेयं प्रवृत्तिर्भोगादन्यस्मिन् स्थिरे भोक्तरि भोगतत्साधनसमर्थस्यापि न कल्पते नास्थिरे न च भोगादनन्यस्मिन्। नहि भोगो भोगाय कल्पते नाप्यन्यो भोगायान्यस्य। एवं मोक्षेऽपि द्रष्टव्यम्। तत्र बुभुक्षुमुमुक्षू चेत् स्थिरावभ्युपेयेयातां तदाऽभ्युपेतहानमवश्यं वा प्रवृत्तिप्रसङ्ग इत्यर्थः। "न तु सङ्घातः सिध्येत् भोक्त्रभावात्" इति। भोक्त्रभावेन प्रवृत्त्यनुपपत्तेः कर्त्रभावः। ततः कर्माभावात् सङ्घातासिद्धिरित्यर्थः॥

## उत्तरोत्पादे च पूर्वनिरोधात्॥ २०॥

पूर्वसूत्रेण सङ्गतिमाह। "उक्तमेतत्" इति। हेतूपनिबन्धनं प्रतीत्यसमुत्पादमभ्युपेत्य प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादो दूषितः। सम्प्रति हेतूपनिबन्धनमपि स दूषयतीत्यर्थः। दूषणमाह। "इदमिदानीम्" इति। "निरुध्यमानस्य" इति। न तावद्विरोधिकर्तृविरोधकारणसान्निध्यं निरुध्यमानता स्वीक्रियते वैनाशिकैरकारणं विनाशमभ्युपगच्छद्भिः। तस्यानिष्टत्वात्। तस्माद्विनाशग्रस्तत्वमचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम्। निरुद्धत्वञ्च चिरनिरुद्धत्वं विवक्षितं, तथा चोभयोरप्यभावग्रस्तत्वाद्धेतुत्वानुपपत्तिः। शङ्कते। "अथ भावभूतः" इति। कारणस्य हि कार्योत्पादात् प्राक्कालसत्ताधर्मो न कार्यकाला तदा कार्यस्य सिद्धत्वेन तत्सिद्धार्थायाः सत्ताया अनुपयोगादिति भावः। तदेतत्प्राकृदृष्ट्या दूषयति। "भावभूतस्य" इति। भूत्वा

व्यापृत्य भावाः प्रायेण हि कार्यं कुर्वन्तो लोके दृश्यन्ते । तथा च स्थिरत्वम्, इतरथा तु लोकविरोध इति । पुनः शङ्कते । "यस्य भाव एव" इति । यथाहुः । "भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति । भवत्वेवं व्यापारवत्ता तथापि क्षणिकस्य न कारणत्वमित्याह । "तथापि नैवोपपद्यते" क्षणिकस्य कारणभावः । मृत्सुवर्णकारणा हि घटादयश्च रुचकादयश्च मृत्सुवर्णात्मानोऽनुभूयन्ते । यदि च न कार्य्यसमये कारणं सत्कथं तेषां तदात्मनानुभवः । न च कारणसादृश्यं कार्य्यस्य न तु तादात्म्यमिति वाच्यम् । असति कस्यचिद्रूपस्यानुगमे सादृश्यस्याप्यनुपपत्तेः । अनुगमे वा तदेव कारणं तथा च तस्य कार्य्यतादात्म्यमिति सिद्धमक्षणिकत्वमित्यर्थः । सर्वथा वलक्षण्ये तु तन्तुफलभावस्तन्तुघटादावपि प्राप्त इत्यतिप्रसङ्ग इत्याह । "विलेव वा" इति । न च तद्भावभावो नियामकस्तस्यैकान्ततः क्षणेऽग्रक्यग्रहत्वात् सामान्यस्य चाकारणत्वात् । कारणत्वे वा क्षणिकत्वहानिरस्मत्पक्षपातप्रसङ्गश्चेति भावः । आदिमतापादनिरोधयोर्विकल्पत्रयेऽपि वस्तुनः शाश्वतत्वप्रसङ्ग इत्याह । "अपि चोत्पादनिरोधौ नाम" इति । पर्य्यायत्वापादनेऽपि नित्यत्वापादनं मन्तव्यम् । वस्तूत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः । संसर्गेऽप्यसता संसर्गानुपपत्तेः सत्त्वाभ्युपगमे शाश्वतत्वमित्यपि द्रष्टव्यम् । शेषं निगदव्याख्यातम् ॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥**

नीलाभासस्य हि चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारतासमनन्तरप्रत्ययात् पूर्वविज्ञानाद् बोधरूपता चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहणप्रतिनियमः । आलोकात्सहकारिप्र-

सन्तानोच्छेदः। सदृशसन्ततिसन्तानात्।
न च सन्तानिनामविच्छेदेन हेतुफलभावेन सन्तानविच्छेद-स्यासम्भवात्” इति। नापि भावगोचरौ सम्भवतः प्रतिसंख्या-प्रतिसंख्यानिरोधौ। अत्र तावदनपक्रमावाप्रवृत्तस्य भावस्य न प्रतिसंख्यानिरोधः सम्भवति तस्य पुरुषप्रयत्नापेक्षाभावादित्य-स्यैव दूषणं तथापि दोषान्तरमुभयस्मिन्नपि निरोधे ब्रूते। “नहि भावानाम्” इति। यतो निरन्वयो विनाशो न सम्भ-वत्यतो निरुपाख्योऽपि न सम्भवति, तेनैवान्वयिना रूपेण भावस्य नष्टस्याप्युपाख्येयत्वात्। निरन्वयविनाशाभावे हेतु-माह। “सर्वास्वप्यवस्थासु” इति। यद्यदन्वयिरूपं तत्तत्परमा-र्थसद्भावः। अवस्थास्तु विशेषाख्या उपजनापायधर्माणस्तासां सर्वासामनिर्वचनीयतया स्वतो न परमार्थसत्त्वमन्वयिन-स्तु रूपं तासां तत्त्वं तस्य च सर्वत्र प्रत्यभिज्ञायमानत्वान्न विनाश इत्यवस्थावतोऽविनाशादवस्थानां निरन्वयो विनाश इति। तासां तत्त्वस्यान्वयिनः सर्वथाविच्छेदात्। स्यादे-तत्। मृत्पिण्डमृद्घटमृत्कपालादिषु सर्वत्र मृत्तत्त्वप्रत्यभि-ज्ञानाद्भवत्वेवम्। तप्तोपलतलपतितनष्टस्य तूदबिन्दोः किमस्ति रूपमन्वयि प्रत्यभिज्ञायमानं येनास्य न निरन्वयो नाशः स्यादित्यत आह। “अस्पष्टप्रत्यभिज्ञानास्वपि” इति। अत्रापि तत्तोयं तेजसा मारुतमण्डलमभ्युदत्वाय नीयत इत्यनुमेयं मृदादीनामन्वयिनामविच्छेददर्शनात्। शक्यं तत्र वक्तुम्।

उदबिन्दौ च सिन्धौ च तोयभावो न भिद्यते।
विनष्टोऽपि ततो बिन्दावस्ति तस्यान्वयोऽम्बुधौ॥
तस्मान्न कश्चिदपि निरन्वयो नाश इति सिद्धम्॥

**उभयथा च दोषात्॥२३॥**

परिकरः सामग्री सम्यग्ज्ञानस्य यमनियमादिः श्रवणमननादिश्च। मार्गः क्षणिकनैरात्म्यादिभावनाः। अतिरोहितमन्यत्॥

## आकाशे चाविशेषात्॥ २४॥

एतद्व्याचष्टे। "यच्च तेषाम्" इति। वेदप्रामाण्ये विप्रतिपन्नानपि प्रति शब्दगुणानुमेयत्वमाकाशस्य वक्तव्यम्। तथाहि जातिमत्त्वेन सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्यास्पर्शत्वे सति बाह्यैकेन्द्रियग्राह्यत्वेन गन्धादिवद्गुणत्वमनुमितम्। चायमात्मगुणो बाह्येन्द्रियगोचरत्वात्। अत एव न मनोगुणः, तद्गुणानामप्रत्यक्षत्वात्। न पृथिव्यादिगुणः, तद्गुणगन्धादिसाहचर्यानुपलब्धेः। तस्माद्गुणो भूत्वा गन्धादिवदसाधारणेन्द्रियग्राह्यो यद्द्रव्यमनुमापयति तदाकाशं पञ्चमं भूतं वस्त्विति। "अपि चावरणाभावमाकाशमिच्छत" इति। निषेध्यनिषेधाधिकरणनिरूपणाधीननिरूपणो निषेधो न ... त्यधिकरणनिरूपणे शक्यो निरूपयितुम्। तस्मावर...भावाधिकरणमाकाशं वस्त्विति। अतिरोहितार्थमन्यत्॥

## अनुस्मृतेश्च॥ २५॥

विभजते। "अपि च वैनाशिकः सर्वस्य वस्तुन" इति। यस्तु मन्यते निमित्तनैमित्तिकभावावस्थयोरन्यत्वेऽपि समानायां सन्ततौ कार्यकारणभावात् स्मृतिरुपपत्स्यत इति मन्यमानो न परितुष्यति तं प्रति प्रत्यभिज्ञासमाख्यातप्रत्यक्षविरोधमाह। "अपि च दर्शनस्मरणयोः कर्त्तरि" इति। ततोऽहमद्राक्षीदिति प्रतीयात्, अहं स्मराम्यन्यस्त्वद्राक्षीदित्यर्थः। प्रत्यभिज्ञाप्रत्यक्षविरोधप्रपञ्चस्तूत्तरः। "आ जन्मनः" "आ चोत्तमादुच्छासात्" आमरणादित्यर्थः। न च सादृश्यनिब-

स्थिरं प्रत्यभिज्ञानं, पूर्वापरक्षणदर्शिन एकस्याभावे तदनुपपत्तेः। शङ्कते। "तेनेदं सदृशम्" इति। अयमर्थो विकल्पप्रत्ययोऽयम्। विकल्पश्च स्वाकारं बाह्यतयाऽध्यवस्यति, न तु तत्त्वतः पूर्वापरौ क्षणौ तयोः सादृश्यं वा गृह्णाति। तत्कथमेकस्यानेकदर्शिनः स्थिरस्य प्रसङ्गः, इति निराकरोति "न तेनेदम्" इति। "भिन्नपदार्थोपादानात्" इति। नानापदार्थसंभिन्नवाक्यार्थाभासस्तावदयं विकल्पः प्रथते। तत्रैते नानापदार्था न प्रथन्त इति ब्रुवाणः स्वसंवेदनं बाधते। न चैकस्य ज्ञानस्य नानाकारत्वं सम्भवति, एकत्वविरोधात्। न च तावन्त्येव ज्ञानानीति युक्तम्। तथा सति प्रत्याकारं ज्ञानानां समाप्तेस्तेषां च परस्परवार्ताज्ञानाभावात् नानात्वेन न स्यात्। तस्मात् पूर्वापरक्षणतत्सादृश्यगोचरत्वं ज्ञानस्य वक्तव्यं, न चैतत् पूर्वापरक्षणावस्थायिनमेकं ज्ञातारं विनेति क्षणभङ्गभङ्गप्रसङ्गः। यदुच्यते। अस्त्येतस्मिन् विकल्पे तेनेदं सदृशमिति वाक्यप्रयोगो न त्विह तत्तेदन्तास्पदौ पदार्थौ, तयोश्च सादृश्यमिति विवक्षितम्। अपि त्वेवमाकारता ज्ञानस्य कल्प्यत इति। तत्राह। "यदा हि लोकप्रसिद्धः पदार्थः" इति। एकाधिकरणविप्रतिषिद्धधर्मद्वयाभ्युपगमो विवादः। तत्रैकः स्वपक्षं साधयत्यन्यश्च तत्साधनं दूषयति। न चैतत् सत्यसति विकल्पानां बाह्यालम्बनत्वेऽसति च लोकप्रसिद्धपदार्थकत्वे भवितुमर्हति। ज्ञानाकारत्वे हि विकल्पप्रतिभासिनां नित्यत्वानित्यत्वादीनामेकार्थविषयत्वाभावात् ज्ञानानाञ्च धर्मिणां भेदाच्च विरोधः। न ह्यात्मनित्यत्वं बुद्ध्यनित्यत्वञ्च ब्रुवाणौ विप्रतिपद्येते। न चालौकिकार्थेनानित्यशब्देनात्मनि विभुत्वं विवक्षितवताऽनित्यशब्दं प्रयुञ्जानो लौकिकार्थं नित्यशब्दमात्मनि प्रयुञ्जानेन विप्रतिपद्यते। तस्मादनेन

स्वपक्षं प्रतितिष्ठापयिषता परपक्षसाधनञ्च निराचिकीर्षता विकल्पानां लोकसिद्धपदार्थकता बाह्यालम्बनता च वक्तव्या । यद्युच्येत द्विविधो हि विकल्पानां विषयो ग्राह्यश्चाध्यवसेयश्च । तत्र स्वाकारो ग्राह्योऽध्यवसेयस्तु बाह्यः । तथा च पक्षप्रतिपक्षपरिग्रहलक्षणा विप्रतिपत्तिः प्रसिद्धपदार्थकत्वञ्चोपपद्यत इत्याह । "एवमप्येषोऽर्थः" इति । निश्चितं यत्तदेव वक्तव्यं ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत् । अयमभिसन्धिः । कथमध्यवसेयता बाह्यस्य यदि ग्राह्यता न द्वैविध्यम् । अथान्या साऽस्ति, ननूक्ता तेन स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तिरिति । अथ विकल्पाकारस्य कोऽयमध्यवसायः । किं करणमाहो योजनमुतारोप इति । न तावत् करणं नह्यन्यदन्यत् कर्तुं शक्यम् । नहि जातु सहस्रमपि शिल्पिनो घटं पटयितुमीशते । न चाकारं बाह्येन योजयितुम् । अपि च तथा सति युक्त इति प्रत्ययः स्यात्, न चास्ति । आरोपोऽपि किं गृह्यमाणे बाह्ये उताऽगृह्यमाणे । यदि गृह्यमाणे तदा किं विकल्पेनाहो तत्समयजेनाविकल्पकेन । न तावद्विकल्पोऽभिलापसंसर्गयोग्यगोचरोऽशक्याभिलापसंसर्गं स्वलक्षणं देशकालाननुगतं गोचरयितुमर्हति । यथाहुः ।

अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक् ।
तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी ॥ इति ।

न च तत्समयभाविना निर्विकल्पकेन गृह्यमाणे बाह्ये विकल्पेनागृह्णाति तत्र विकल्पः स्वाकारमारोपयितुमर्हति । नहि रजतज्ञानाप्रतिभासिनि पुरोवर्त्तिनि वस्तुनि रजतज्ञानेन शक्यं रजतमारोपयितुम् । अगृह्यमाणे तु बाह्ये स्वाकार इत्येव स्यान्न बाह्य इति । तथा च नारोपणम् । अपि चायं विकल्पः स्वसंवेदनं सन्तं विकल्पं किं वस्तुसन्त-

स्वाकारं गृहीत्वा पश्चाद्बाह्यमारोपयत्यथ यदा स्वाकारं गृह्णाति तदैवारोपयति न तावत् क्षणिकतया क्रमविरहिणो ज्ञानस्य क्रमवर्त्तिनौ ग्रहणारोपणे कल्पेते । तस्माद्यदैव स्वाकारमनर्थं गृह्णाति तदैवार्थमारोपयतीति वक्तव्यम् ।

न चैतद्युज्यते स्वाकारो हि स्वसंवेदनप्रत्यक्षतयातिविशदो बाह्यं चारोप्यमाणमविशदं ततोऽन्यदेव स्यान्न तु स्वाकारः समारोपितः । न च भेदाग्रहमात्रेण समारोपाभिमानः । वैशद्यावैशद्यकल्पनया भेदग्रहस्योक्तत्वात् । अपि चागृह्यमाणे भेदे कस्मात् स्वलक्षणाद् दाहादिना तदभिमुखो प्रवर्त्तेत, हन्त तर्हि त्रैलोक्येन पद्यानेन न भेदो गृहीत इति यत्र क्वचन प्रवर्त्ततामविशेषात् । एतेन ज्ञानाकारस्य चालीकस्यापि बाह्यत्वसमारोपः प्रत्युक्तः । तस्मात्सूक्तं ततोऽन्यदेव सन्तं बहुप्रलापित्वमात्मनः ख्यापयेदिति । अपि च सादृश्यनिबन्धनः संव्यवहारस्तेनेदं सदृशमिति न समाकारबुद्धिनिबन्धनो भवेन्न तु तदेवेदमित्याकारबुद्धिनिबन्धन इत्याह । "न चायं सादृश्यात् संव्यवहारः" इति । ननु ज्वालादिषु सादृश्यादभ-त्यामपि सादृश्यबुद्धौ तद्भावावगमनिबन्धनः संव्यवहारो दृश्यते यथा तथेहापि भविष्यतीति पूर्वापवितार्पणाह । "भवेदपि कदाचिद्बाह्यवस्तुनि" इति । तथाहि विविधजनसङ्कीर्णगोपुरेण पुरं निविशमानं नरान्तरेभ्य आत्मनिर्धारणायामात्मनं चिह्नं विदधतमुपहसन्ति पार्श्वस्थाः पृथग्जना इति ॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

"इतश्चानुपपन्नो वैनाशिकसमयः" इति । अस्थिरात् कार्योत्पत्तिमिच्छन्तो वैनाशिका अर्थादभावादेव भावोत्पत्तिमाहुः । उक्तमेतदधस्तात् । निरपेक्षात् कार्योत्पत्तौ

पुरुषकर्मवैयर्थ्यं न सापेक्षतायाश्च क्षणस्याभेद्यत्वे नोपकृतत्वानु-
पकृतत्वानुपपत्तेरनुपकारिणि चापेक्षाभावादक्षणिकत्वप्रसङ्गः।
सापेक्षत्वानपेक्षत्वयोश्चान्यतरनिषेधस्यान्यतरविधाननान्तरीय-
कत्वेन प्रकारान्तराभावाद्वास्थिराद्भावाद्भावोत्पत्तिरिति क्षणिक-
पक्षेऽर्थादभावाद्भावोत्पत्तिरिति परिशिष्यत इत्यर्थः। न
केवलमर्थादापद्यते दर्शयन्ति च। “नानुपमृद्य प्रादुर्भावात्”
इति। एतद्विभजते। “विनष्टाद्धि किल” इति। किलका-
रोऽनिच्छायाम्। कूटस्थाच्च कारणात् कार्यमुत्पद्यतापि सर्व
सर्वत उत्पद्येत। अयमभिसन्धिः। कूटस्थो हि कार्यज-
ननस्वभावो वा स्यादतत्स्वभावो वा, स चेत्कार्यजननस्वभा-
वस्ततो यावदनेन कार्यं कर्त्तव्यं तावत् सकृदेव कुर्यात्।
समर्थस्य क्षेपायोगात्। अतत्स्वभावत्वे तु न कदाचिदपि
कुर्यात्। यद्युच्येत समर्थोऽपि क्रमवत्सहकारिसचिवः क्रमेण
कार्याणि करोतीति। तदयुक्तम्। विकल्पासहत्वात्।
किमस्य सहकारिणः कञ्चिदुपकारमादधति न वा। अना-
धानेऽनुपकारितया सहकारिणो नापेक्षेत। आधानेऽपि
भिन्नमभिन्नं वोपकारमादध्युः। अभेदे तदेवाहितमिति
कौटस्थ्यं व्याहन्येत। भेदे तूपकारस्य तस्मिन् सति कार्यस्य
भावादसति चाभावात्सत्यपि कूटस्थे कार्यानुत्पादादन्वय-
व्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति नार्थ-
क्रियाकारी भावः। तदुक्तम्।

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः॥ इति।

तथा चाकस्मिकत्वादपि चेत् कूटस्थात् कार्यं जायेत सर्वं
सर्वस्माज्जायेतेति सूक्तम्। उपसंहरति। “तस्मादभाव-
ग्रस्तेभ्यः” इति। “तदिदमुच्यते”। “नासतोऽदृष्टत्वात्” इति।

भावात् कार्योत्पत्तिः, कस्मात्, अदृष्टत्वात् । नहि शशविषाणादङ्कुरादीनां कार्याणामुत्पत्तिर्दृश्यते । यदि त्वभावाद्भावोत्पत्तिः स्यात्तदाऽभावत्वाविशेषात् शशविषाणादिभ्योऽप्यङ्कुरोत्पत्तिः । नह्यभावो विशिष्यते । विशेषणयोगे वा सोऽपि भावः स्यान्न निरुपाख्य इत्यर्थः । विशेषणयोगमभावस्याभ्युपेत्याह । "नाप्यभावः कस्यचिदुत्पत्तिहेतुः" इति । अपि च यद्यदनन्वितं न तत्तस्य विकारः, यथा घटशरावोदञ्चनादयो हेमानन्विता न हेमविकाराः, अनन्विताश्चैते विकारा अभावेन । तस्मान्नाभावविकाराः, भावविकारास्तु ते, भावस्य तैरन्वितत्वादित्याह । "अभावाच्च भावोत्पत्तौ" इति । अभावकारणवादिनो वचनमनुभाष्य दूषयति । "यत्तु क्रम" इति । स्थिरोऽपि भावः क्रमवत्सहकारिसमवधानात् क्रमेण कार्याणि करोति, न चानुपकारकाः सहकारिणः, स चास्य सहकारिभिराधीयमान उपकारो न भिन्नो नाप्यभिन्नः किन्त्वनिर्वाच्य एवानिर्वाच्याच्च कार्यमप्यनिर्वाच्यमेव जायते । न चैतावता स्थिरस्याकारणत्वं तदुपादानत्वात् कार्यस्य रज्जूपादानत्वमिव भुजङ्गस्येत्युक्तम् । तथा च श्रुतिः 'मृत्तिकेत्येव सत्यम्' इति । अपि च येऽपि मन्यन्ते क्षणिकानि स्वलक्षणानि वस्तुसत्यान्यपि तेषामपि किमिति बीजजातीयेभ्योऽङ्कुरजातीयान्येव जायन्ते कार्याणि, न तु क्रमेलकजातीयानि । नहि बीजाद्बीजान्तरस्य वा क्रमेलकस्य वात्यन्तवैलक्षण्ये कश्चिद्विशेषः । न च बीजाङ्कुरत्वं सामान्यं परमार्थसतो येनैतयोर्भाविकः कार्यकारणभावो भवेत् । तस्मात्काल्पनिकादेव स्वलक्षणोपादानाद्बीजजातीयात्तथाविधस्यैवाङ्कुरजातीयस्योत्पत्तिनियम आस्थेयः । अन्यथा कार्यहेतुकानु-

मानोच्छेदप्रसङ्गः। दिङ्मात्रमत्र सूचितं प्रपञ्चस्तु ब्रह्मतत्त्वसमीक्षान्यायकणिकयोः कृत इति नेह प्रतन्यते विस्तरभयात्।

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

भाष्यमस्य सुगमम्॥

## नाभाव उपलब्धेः ॥ २८ ॥

पूर्वाधिकरणसङ्गतिमाह। "एवम्" इति। बाह्यार्थवादिभ्यो विज्ञानमात्रवादिनां सुगताभिप्रेततया विशेषमाह। "केषाञ्चित् किल" इति। अथ प्रमाता प्रमाणं प्रमेयं प्रमितिरिति हि चतसृषु विधासु तत्त्वपरिसमाप्तिराबाह्यान्तरमाभावेऽपि तत्त्वस्याव्यवस्थानात्। तस्मादनेन विज्ञानस्कन्धमात्रं तत्त्वं व्यवस्थापयता इतरा विधा एषितव्यास्तथाच न विज्ञानस्कन्धमात्रं तत्त्वं नह्यस्ति सम्भवो 'बाह्यानमात्रं चतस्रो विधा' इत्यत आह। "तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेण" इति। यद्यप्यनुभवात्मनोऽनुभाव्योऽनुभवितानुभवनं तथापि बुद्ध्यारूढेन बुद्धिपरिकल्पितेनास्यैव प्रमाणप्रमेयफलव्यवहारः प्रमात्रव्यवहारश्चेत्यपि द्रष्टव्यं न पारमार्थिक इत्यर्थः। एवञ्च न सिद्धसाधनम्। नहि बाह्यवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति, किन्त्वनिर्वचनीयं नीलादीति। तथाहि। स्वरूपं विज्ञानस्यासत्याकारयुक्तं प्रमेयम्। प्रमेयप्रकाशनं प्रमाणफलं, तत्प्रकाशनशक्तिः प्रमाणम्। बाह्यवादिनोरपि वैभाषिकसौत्रान्तिकयोः काल्पनिक एव प्रमाणफलव्यवहारोऽभिमत इत्याह। "सत्यपि बाह्येऽर्थे" इति। भिन्नाधिकरणत्वे हि

प्रमाणफलयोस्तद्भावो न स्यात्। नहि खदिरगोचरे परशौ पलाशे द्वैधीभावो भवति। तस्मादनयोरैकाधिकरण्यं वक्तव्यम्। कथञ्च तद्भवति यदि ज्ञानस्यैव प्रमाणफले भवतः। न च ज्ञानं स्वलक्षणमनंशमंशाभ्यां वस्तुसद्भ्यां युज्यते, तदेव ज्ञानमज्ञानव्यावृत्तिकल्पितज्ञानत्वांशं फलम्। अफलव्यावृत्तिपरिकल्पितात्मनाऽप्रकाशनांशेन प्रमाणम्। प्रमेयं त्वस्य बाह्यमेव। एवं सौत्रान्तिकसमयेऽपि। ज्ञानस्यायमारूप्यमनीलाकारव्यावृत्त्या कल्पितनीलाकारत्वं प्रमाणं व्यवस्थापनहेतुत्वात्। अज्ञानव्यावृत्तिकल्पितञ्च ज्ञानत्वं फलं व्यवस्थाप्यत्वात्। तथा चाहुः। नहि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषात्। तान्तु सारूप्यमाविशत् सरूपयत्तद् घटयेत्। प्रश्नपूर्वकं बाह्यार्थाभाव उपपत्तिमाह। "कथं पुनरवगम्यते" इति। न हि विज्ञानालम्बनत्वाभिमतो बाह्योऽर्थः परमाणुस्तावत् सम्भवति। एकस्थूलनीलाभासं हि ज्ञानं न परमसूक्ष्मपरमाण्वाभासम्। न चान्याभासमन्यगोचरं भवितुमर्हति। अतिप्रसङ्गेन सर्वगोचरतया सर्वसर्वज्ञत्वप्रसङ्गात्। न च प्रतिभासधर्मः स्थौल्यमिति युक्तम्। विकल्पासहत्वात्। किमयं प्रतिभासस्य ज्ञानस्य धर्मः, उत प्रतिभासमानकालेऽर्थस्य धर्मः। यदि पूर्वः कल्पोऽस्तु तथा सति हि, स्थौल्यानुरञ्जनमेव विज्ञानमभ्युपेतं भवति। एवं च कः प्रतिकूलो भवान् अनुकूलमाचरति। द्वितीय इति चेत्। तथा हि रूपपरमाणव एव निरन्तरमुत्पन्ना एकविज्ञानोपारोहिणः स्थौल्यं न चात्र कस्यचिद् भ्रान्तता। नहि न ते रूपपरमाणवो न च न निरन्तरमुत्पन्ना न चैकविज्ञानानुपारोहिणः। तेन मा भून्नीलत्वादिवत् परमाणुधर्मः, प्रत्येकं

परमाण्वभावात्। प्रतिभासमानानां तु तेषां भविष्यति बहुत्वादिवत् संवृतं स्थौल्यम्। यथाहुः।

यस्यैकस्य चैकेन किञ्चिद्रूपं हि गृह्यते।

संवृतं प्रतिभासस्य तदेकात्मतया स्थितम्॥

न च तद्दर्शनं भ्रान्तं नानात्वस्यानुपश्यतः।

संवृतं ग्रहणं नानात्वं च वस्तुनो भवेत् इति।

तन्न। नैरन्तर्यावभासस्य भ्रान्तत्वात्। गन्धरसस्पर्शपरमाण्वन्तरिता हि ते रूपपरमाणवो न निरन्तराः। तस्मादारात् सान्तरेषु वनेष्विव घनतावभासवत् स्थूलप्रत्ययः परमाणुषु सान्तरेषु भ्रान्त एवेति पश्यामः। तस्मात् कल्पनापोढत्वेऽपि भ्रान्तत्वाद्ग्राह्यस्य प्रत्यक्षस्य योगिनां च दृष्टानवयवप्रत्यक्षता परमाणूनां चरत्वाभ्युपगमे। तदिदमुक्तं, न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति। नापि तत्समूहास्तम्भादयोऽवयविनः। तेषामसत्त्वे परमाणुभ्यः परमाणव एव। तत्र चोक्तं दूषणम्। भेदे तु गवाश्ववदत्यन्तवैलक्षण्यमिति न तादात्म्यम्। समवायश्च निराकृत इति। एवं भेदाभेदविकल्पेन जातिगुणकर्मादीनपि प्रत्याचक्षीत, तस्मात्सदसत्प्रतिभासनं तस्य सर्वस्य विचारासहत्वात् अप्रतिभासमानसद्भावे च प्रमाणाभावात् बाह्यानालम्बनाः प्रत्यया इति। अपि च न तावद्विज्ञानमिन्द्रियवत्स्वसत्तामात्रेण प्रत्याययितुमर्हति। नहि यथेन्द्रियमसद्विषयं ज्ञानं जनयत्येवं विज्ञानमपरं विज्ञानं जनयितुमर्हति। तत्रापि समानत्वादनुयोगस्यानवस्थाप्रसङ्गात्। न चार्थाधारं प्राकट्यलक्षणं फलमाधातुमर्हति। अतीतानागतेषु तदसम्भवात्। नह्यस्ति सम्भवोऽप्रत्यक्षस्य धर्मो धर्मिणोऽस्य प्रत्यक्षत्वम् इति। तस्माज्ज्ञानस्वरूपप्रत्यक्षतैवार्थप्रत्यक्षताऽभ्युपेया। तथा चाकारं सह ज्ञाना-

ततो भेदाभावात् कथमर्थभेदं व्यवस्थापयेदिति। तद्भेदव्यवस्थापनायाकारभेदोऽभ्युपेतव्यः। तदुक्तं न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषात् तां तु सारूप्यमाविशत् सरूपयत्तद् घटयेदिति। एकश्चायमाकारोऽनुभूयते स चेद्विज्ञानस्य नार्थसद्भावे किञ्चन प्रमाणमस्तीत्याह। "अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य" इति। "अपि च सहोपलम्भनियमात्" इति। यद्येन सह नियतसहोपलम्भनं तत्ततो न भिद्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः। नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः। निषेध्यो हि भेदः सहोपलम्भानियमेन व्याप्तो यथा भिन्नावभासिनो नावश्यं सहोपलभ्येते। कदाचिदभ्रापिधानेऽन्यतरस्यैकस्योपलब्धेः सोऽयमिह भेदव्यापकानियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्तयतीति। तदुक्तम्।

सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये॥ इति।

"स्वप्नादिवच्चेदं द्रष्टव्यम्"। यो यः प्रत्ययः स सर्वो बाह्यानालम्बनो यथा स्वप्नमायादिप्रत्ययस्तथा चैष विवादाध्यासितः प्रत्यय इति स्वभावहेतुः। बाह्यानालम्बनता हि प्रत्ययत्वमात्रानुबन्धिनी वृक्षत्व इव शिंशपात्वमात्रानुबन्धिनीति तन्मात्रानुबन्धिनि निरालम्बनत्वे साध्ये भवति प्रत्ययत्वं स्वभावहेतुः। अत्रान्तरे सौत्रान्तिकश्चोदयति। "कथं पुनरसति बाह्येऽर्थे" नीलमिदं पीतमिदमित्यादि। "प्रत्ययवैचित्र्यमुपपद्येत" न हि सति ये यस्मिन् सत्यपि कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षाः, यथाऽविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासाः प्रत्ययाश्चेतनसन्तानान्तरसापेक्षास्तथा च विवादाध्यासिताः सत्यप्यालयविज्ञानसन्ताने षडपि प्रवृत्ति-

प्रत्यया इति स्वभावहेतुः। यस्त्वासावालयविज्ञानसन्तानातिरिक्तः कादाचित्कप्रवृत्तिज्ञानभेदहेतुः स बाह्योऽर्थ इति। वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति चेत्। नन्वेकसन्ताननिपतितानामालयविज्ञानानां तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना, तस्याश्च स्वकार्य्योपजननं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्ययः स्वसन्तानवर्त्ती पूर्वक्षणः सन्तानान्तरस्यानभ्युपगमात्। तथा च सर्वेऽप्यालयसन्तानपातिनः परिपाकहेतवो भवेयुः। न वा कश्चिदपि, आलयसन्तानपातित्वाविशेषात्। क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात् कार्य्यकादाचित्कत्वमिति चेत्। नन्वेवमेकस्यैव नीलज्ञानोपजननसामर्थ्यं तत्प्रबोधसामर्थ्यं चेति क्षणान्तरस्य तन्न स्यात्। सत्त्वं वा कथं क्षणभेदात् सामर्थ्यभेद इत्यालयसन्तानवर्त्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे कार्य्यनियमानुपपत्तेः। स्वसन्तानमात्राधीनत्वे निरपेक्षस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वं तद्व्यापकस्य कादाचित्कत्वं निवर्त्तमानं हेत्वन्तरापेक्षत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिः। न च सन्तानान्तरनिबन्धनत्वं सर्वेषामिष्यते प्रवृत्तिविज्ञानानां विज्ञानवादिभिरपि तु कस्यचिदेव विशिष्टागमवचनप्रतिभासस्य प्रवृत्तिविज्ञानस्य। अपि च सन्तानान्तरसन्तानानिमित्तत्वे तस्यापि सदा सन्निधानान्न कादाचित्कत्वं स्यात्। नहि सन्तानान्तरसन्तानस्य देशतः कालतो वा विप्रकर्षसम्भवः। विज्ञानवादे विज्ञानातिरिक्तदेशानभ्युपगमादमूर्त्तत्वाच्च विज्ञानानामदेशात्मकत्वात् संसारस्यादिमत्त्वप्रसङ्गेनापूर्वसत्त्वप्रादुर्भावानभ्युपगमाच्च न कालतोऽपि विप्रकर्षसम्भवः। तस्मादस्ति बाह्योऽर्थः प्रत्ययवैचित्र्यानुपपत्त्या अनुमानिको बाह्योऽर्थ इति सौत्रान्तिकाः प्रतिपेदिरे, तान्निराकरोति।

"वासनावैचित्र्यादित्याह" विज्ञानवादी। इदमत्राकूतम् स्वसन्तानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ सन्दिग्धविपक्षव्यावृत्तिकत्वेन हेतुरनैकान्तिकः। तथाहि। वाह्यनिमित्तत्वेऽपि कथं कदाचित् नीलसंवेदनं कदाचित् पीतसंवेदनम्, आलम्बनीलपीतसन्निधानासन्निधानाभ्यामिति चेत्। अथ पीतसन्निधानेऽपि किमिति नीलज्ञानं न भवति पीतज्ञानं भवति, तत्र तस्य सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत्। कुतः पुनरयं सामर्थ्यासामर्थ्यभेदः। हेतुभेदादिति चेत्। एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति। सन्तानिनो हि क्षणाः कार्य्यभेदहेतवस्ते च प्रतिकार्य्यं भिद्यन्ते च। सन्तानो नाम कश्चिदेक उत्पादकः क्षणानां यदभेदात् क्षणा न भिद्येरन्। ननु न क्षणभेदाभेदाभ्यां शक्तिभेदाभेदौ भिन्नानामपि क्षणानामेकसामर्थ्योपलब्धेः। अन्यथैक एव क्षणं नीलज्ञानजननसमर्थ इति न भूयो नीलज्ञानानि जायेरन्। तदसमर्थस्यातीतत्वात् क्षणान्तराणां चासामर्थ्यात्। तस्मात् क्षणभेदेऽपि न सामर्थ्यभेदः, सन्तानभेदे तु सामर्थ्यं भिद्यत इति तत्र। यदि भिन्नानां सन्तानानां नैकं सामर्थ्यं, हन्त तर्हि नीलसन्तानानामपि मिथो भिन्नानां नैकमस्ति नीलाकाराधानसामर्थ्यमिति सन्निधानेऽपि नीलसन्तानान्तरस्य न नीलज्ञानमुपजायेत। तस्मात् सन्तानान्तराणामिव क्षणान्तराणामपि स्वकारणभेदाधीनोपजननानां केषाञ्चिदेव सामर्थ्यभेदः केषाञ्चिन्नेति वक्तव्यम्। तथा चैकालयज्ञानसन्तानपतितः कश्चिदेव ज्ञानक्षणस्य स तादृशः सामर्थ्यातिशयो वासनापरनामा स्वप्रत्ययग्रामादितो यतो नीलाकारं प्रवृत्तिविज्ञानं जायते न पीताकारम्। कश्चित्तु स तादृशो यतः पीता-

कारं ज्ञानं न नीलाकारमिति वासनावैचित्र्यादेव ज्ञानप्रत्यया-सादिताज्ज्ञानवैचित्र्यमिदं न तदतिरिक्तार्थसद्भावे किञ्च-नास्ति प्रमाणमिति पश्यामः । आलयविज्ञानसन्तानपतित-मेवासंविदितं ज्ञानं वासना तद्वैचित्र्याच्चीलाद्यनुभववैचित्र्यम्, पूर्वनीलाद्यनुभववैचित्र्याच्च वासनावैचित्र्यमित्यनादितानयो-र्विज्ञानवासनयोस्तस्मान्न परस्पराश्रयदोषसम्भवो बीजाङ्कुर-सन्तानवदिति । अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्य-स्यैव ज्ञानवैचित्र्यहेतुता नार्थवैचित्र्यस्येत्याह । "अपि चान्व-यव्यतिरेकाभ्याम्" इति । "एवं प्राप्ते, ब्रूमः" । "नाभाव उपलब्धेः" इति । न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । स ह्युपलब्ध्यभावाद्वाध्यवसीयेत सत्यप्युपलम्भे तस्य बाह्याविषयत्वाद्वा सत्यपि बाह्यविषयत्वे बाह्यार्थबाधकप्रमा-णसद्भावाद्वा । न तावत् सर्वथोपलब्ध्यभाव इति प्रश्नपूर्वक-माह । "कस्मादुपलब्धेः" इति । नहि स्फुटतरं सर्वजनीन उपलम्भे सति तदभावः शक्यो वक्तुमित्यर्थः । द्वितीयं पक्ष-मवलम्बते । "ननु नाहमेवं ब्रवीमि" इति । निराकरोति । "बाढमेवं ब्रवीषि" । उपलब्धिग्राहिणा हि साक्षिणोपलब्धि-गृह्णता बाह्यविषयत्वेनैव गृह्यते नोपलब्धिमात्रमित्यर्थः । "अतश्च" इति वक्ष्यमाणोपपत्तिपरामर्शः । तृतीयं पक्षमाल-म्बते । "ननु बाह्यस्यार्थस्यासम्भवात्" इति । निराकरोति । "नायं साधुरध्यवसायः" इति । इदमत्राकूतम् । घटपटादयो हि स्थूला भासन्ते न तु परमसूक्ष्मास्तदेवं नानादिग्देशव्या-पित्वलक्षणं स्थौल्यं यद्यपि ज्ञानाकारत्वे नावरणानावरणल-क्षणेन विरुद्धधर्मसंसर्गेण युज्यते ज्ञानोपाधेरनावृतत्वादेव तथापि तद्देशत्वातद्देशत्वकम्पाकम्पत्वरक्तारक्तत्वलक्षणैर्विरुद्ध-धर्मसंसर्गैरस्य नानात्वं प्रसज्यमानं ज्ञानाकारत्वेऽपि न

शक्यं शक्रेणापि वारयितुम्। व्यतिरेकाव्यतिरेकवृत्तिविकल्पौ च परमाणोरंशवत्त्वं चोपपादितानि वैशेषिकपरीक्षायाम्। तस्माद् बाह्यार्थस्य ज्ञानेऽपि स्थौल्यमसम्भवः। न च तावत् परमाण्वाभासमेकं ज्ञानमेकस्य नानात्मत्वानुपपत्तेः। आकाराणां वा ज्ञानतादात्म्यादेकत्वप्रसङ्गात्। न च यावन्त आकारास्तावन्त्येव ज्ञानानि तावतां ज्ञानानां मिथो वार्त्तानभिज्ञतया स्थूलानुभवाभावप्रसङ्गात्। न च तत्पृष्ठभावी समस्तज्ञानाकारसङ्कलनात्मक एकः स्थूलविकल्पो विजृम्भत इति साम्प्रतम्। तस्यापि साकारतया स्थौल्यायोगात्। यथाह धर्मकीर्त्तिः।

तस्मान्नार्थे न च ज्ञाने स्थूलाभासस्तदात्मनः।
एकत्र प्रतिषिद्धत्वाद् बहुष्वपि न सम्भवः॥ इति।

तस्माद्भवतापि ज्ञानाकारं स्थौल्यं समर्थयमानेन प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवावास्थेयौ। तथा चेदन्तास्पदमशक्यं ज्ञानाद्भिन्नं बाह्यमपह्नोतुमिति। यत्तु ज्ञानस्य प्रत्यर्थं व्यवस्थायै विषयसारूप्यमास्थितं नैतेन विषयोऽपह्नोतुं शक्यः। अनर्थं तत्सारूप्यस्य तद्व्यवस्थापकत्वानुपपत्तेरित्याह। "न च ज्ञानस्य विषयसारूप्यात्" इति। यच्च सहोपलम्भनियम उक्तः सोऽपि विकल्पं न सहते। यदि ज्ञानार्थयोः साहित्येनोपलम्भस्ततो विरुद्धो हेतुरभेदं साधयितुमर्हति। साहित्यस्य सहितद्वयभेदव्याप्तत्वात्। अभेदे तदनुपपत्तेः। अथैकोपलम्भनियमः। न। एकत्वस्यावाचकः सहशब्दः। अपि च किमेकत्वेनोपलम्भ आहो एक उपलम्भो ज्ञानार्थयोः। न तावदेकत्वेनोपलम्भ इत्याह। "बहिरुपलब्धेश्च विषयस्य"। अथैकोपलम्भनियमस्तत्राह। "अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभाव-

हेतुको नाभेदहेतुक इत्यवगन्तव्यम्"। यथा हि सर्वं चाक्षुषं प्रभारूपानुविद्धं बुद्धिबोध्यं नियमेन मनुजैरुपलभ्यते न चैतावता घटादिरूपं प्रभात्मकं भवति, किन्तु प्रभोपायत्वान्नियम एवमिहाप्यात्ममात्रिकानुभवोपायत्वादर्थस्यैकोपलम्भनियम इति। अपि च यत्रैकविज्ञानगोचरौ घटपटौ तत्रार्थभेदं विज्ञानभेदं चाध्यवस्यन्ति प्रतिपत्तारो न चैतदैकात्म्येऽवकल्पत इत्याह। "अपि च घटज्ञानं पटज्ञानम्" इति। तथार्थाभेदेऽपि विज्ञानभेददर्शनाच्च विज्ञानादन्यत्वमर्थस्येत्याह। "तथा घटदर्शनं घटस्मरणम्" इति। अपि च स्वरूपमात्रपर्यवसितं ज्ञानं ज्ञानान्तरवार्त्तानभिज्ञमिति ययोर्भेदस्तौ हि न गृहीतौ इति भेदोऽपि तद्गतो न गृहीत इति। एवं क्षणिकशून्यानात्मत्वादयोऽप्यनेकप्रतिज्ञाः हेतुदृष्टान्तज्ञानभेदसाध्याः। एवं स्वसमाधारणमन्यतो व्यावृत्तं लक्षणं यस्य तदपि यद्व्यावर्त्तते यतश्च व्यावर्त्तते तदनेकज्ञानसाध्यमेवं सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वाऽनेकज्ञानगम्यम्। एवं वाच्यवाचकभावोऽनेकज्ञानसाध्यः। एवमविद्योपप्लववशेन यत् सद्भिमतं यथा नीलमिति सदसत्, नरविषाणमीश्वर इत्यसदसत्, अमूर्त्तमिति सदसदसत्। शक्यं हि शशविषाणममूर्त्तं वक्तुम्, शक्यञ्च विज्ञानममूर्त्तं वक्तुम्। यथोक्तम्।

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः।
शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः॥ इति।

एवं मोक्षप्रतिज्ञा च यो मुच्यते यतश्च मुच्यते येन मुच्यते तदनेकज्ञानसाध्या। एवं विप्रतिपन्नं प्रतिपादयितुं प्रतिज्ञति यश्च प्रतिपादयति येन प्रतिपादयति यश्च पुरुषः प्रतिपाद्यते यच्च प्रतिपादयति तदनेकज्ञानसाध्यमसत्यां कालिकानेकार्थज्ञानप्रतिसन्धातरि नोपपद्यते। तत्रैवं विज्ञानस्य क्षणिका-

लम्बनेऽनुपपन्नमित्याह । "अपि च द्वयोर्ज्ञानयोः पूर्वोत्तरका-लयोः" इति । अपि च भेदाश्रयः कर्मफलभावो नाभिन्ने ज्ञाने भवितुमर्हति । नो खलु छिदा छिद्यते किन्तु दारु, नापि पाकः पच्यतेऽपि तु तण्डुलाः । तदिहापि न ज्ञानं स्वांशेन ज्ञेयमात्मनि वृत्तिविरोधादपि तु तदतिरिक्तोऽर्थः । पाच्या इव तण्डुलाः पाकातिरिक्ता इति । भूमिरचनापूर्वकमाह । किञ्चान्यद् विज्ञानं विज्ञानमित्यप्यभ्युपगच्छतीति । चोदयति । "ननु विज्ञानस्य स्वरूपातिरिक्तग्राह्यत्वे" इति । अयमर्थः । स्वरूपादतिरिक्तमर्थं चेद्विज्ञानं गृह्णाति ततस्तद-प्रत्यक्षं सन्नार्थं प्रत्यक्षयितुमर्हति । नहि चक्षुरिव तद्विलीन-मर्थं कञ्चनातिशयमाधत्ते येनार्थमप्रत्यक्षं सत् प्रत्यक्षयेदपि तु तत्प्रत्यक्षतैवार्थप्रत्यक्षता । यथाहुः । 'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति । तच्चेत् ज्ञानान्तरेण प्रतीयेत तदप्रतीतं नार्थविषयं ज्ञानमपरोक्षयितुमर्हति । एवं तत्त-दित्यनवस्था । तस्मादनवस्थाया बिभ्यता वरं स्वात्मनि वृत्ति-रास्थिता । अपि च यथा प्रदीपो न दीपान्तरमपेक्षते, एवं ज्ञानमपि न ज्ञानान्तरमपेक्षितुमर्हति समत्वादिति । तदे-तत् परिहरति । "तदुभयमप्यसद्विज्ञानग्रहणमात्र एव विज्ञा-नसाक्षिग्रहणाकाङ्क्षानुत्पादादनवस्थाशङ्कानुपपत्तेः" । अय-मर्थः । सत्यमप्रत्यक्षस्योपलम्भस्य नार्थदृष्टिः प्रसिध्यति न तूप-लब्धारं प्रति तत्प्रत्यक्षत्वायोपलम्भान्तरं प्रार्थनीयम्, अपि तु तस्मिन्निन्द्रियार्थसन्निकर्षादन्तःकरणविकारभेद उत्पन्नमात्र एव प्रमातुरर्थश्चोपलम्भश्च प्रत्यक्षौ भवतः । अर्थो हि निलीन-स्वभावः प्रमातारं प्रति स्वप्रत्यक्षत्वायान्तःकरणविकारभेदमनु-भवमपेक्षते, अनुभवस्तु जडोऽपि स्वच्छतया चैतन्यबिम्बोद्ग्रह-णाय नानुभवान्तरमपेक्षते येनानवस्था भवेत् । न ह्यस्ति सच्छ-

वोऽनुभव उत्पद्यते न च प्रमातुः प्रत्यक्षो भवति यथा नीलादिः । तस्माद्यथा छेत्ता छिदया छेद्यं वृक्षादि व्याप्नोति, न तु छिदां छिदान्तरेण, नापि छिदैव छेत्री, किन्तु स्वत एव देवदत्तादिः । यथा वा पक्ता पाक्यं पाकेन व्याप्नोति न तु पाकं पाकान्तरेण । नापि पाक एव पक्ता किन्तु स्वत एव देवदत्तादिः । एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति न तु प्रमां प्रमान्तरेण, नापि प्रमैव प्रमात्री, किन्तु स्वत एव प्रमायाः प्रमाता व्यापकः । न च प्रमातरि कूटस्थनित्यचैतन्ये प्रमापेक्षासम्भवो यतः प्रमातुः प्रमायाः प्रमान्तरापेक्षायामनवस्था भवेत् । तस्मात् सूक्तं विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणः प्रमातुः कूटस्थनित्यचैतन्यस्य ग्रहणाकाङ्क्षानुत्पादादिति । यदुक्तं, समत्वादवभास्यावभासकभावानुपपत्तेरिति । तत्राह । "साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्धृउपलभ्यभावोपपत्तेः" । मा भूद् ज्ञानयोः साम्येन ग्राह्यग्राहकभावो ज्ञातृज्ञानयोस्तु वैषम्यादुपपद्यत एव । साक्षित्वञ्च ज्ञातस्य न प्राकट्यक्रियाकृतफलशालितया यथा ज्ञातं यस्य फलं फलान्तरानुप[illegible]। यथाहुः । न संविदर्यते फलत्वादिति । अपि तु प्रमातारं प्रति स्वतःसिद्धप्रकटतया साक्ष्यप्यर्थः प्रमातारं प्रति तस्या संविदि प्रकटः संविदपि प्रकटा । यथाहुस्तस्याः कर्मभावो विद्यत इति । स्यादेतत् । यत्प्रकाशते तदन्येन प्रकाश्यते यथा ज्ञानार्थौ तथा च साक्षीति नास्ति प्रत्यक्षसाक्षिणोर्वैषम्यमित्यत आह । "स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात्" । तथाहि । यस्य साक्षिणः सदाऽसन्दिग्धाविपरीतस्य नित्यसाक्षात्कारताऽनागन्तुकप्रकाशत्वे घटते । तथाहि । प्रमाता सन्दिहानोऽप्यसन्दिग्धो विपर्यस्यन्नप्यविपरीतः परोक्षमर्थमुपेक्षमाणोऽप्यपरोक्षः स्वरूपस्यानुभविता प्राणभृन्मा-

त्वस्य, न चैतदन्याधीनसंवेदनत्वे घटते। अनवस्थाप्रसङ्गश्चोक्तः। तस्मात् स्वयंसिद्धतामस्यानिच्छताप्यप्रत्याख्येयाप्रमाणमार्गायत्तत्वादिति। किञ्चोक्तेन क्रमेण ज्ञानस्य स्वयमवगन्तृत्वाभावात् प्रमातुरनभ्युपगमे च प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत्। अवगन्तुश्चेत् कस्यचिदपि न प्रकाशते कृतमवगमेन स्वयप्रकाशिनेति। विज्ञानमेवावगन्त्विति मन्वानः शङ्कते। "बाढमेवमनुभवरूपत्वात्" इति। न फलस्य कर्तृत्वं कर्मत्वं वास्तीति प्रदीपवत् कर्त्रन्तरमपेक्षणीयम्, तथा च न सिद्धमाधर्मिति। परिहरति। "न, अन्यस्यावगन्तुः" इति। ननु साक्षिस्थाने,न्वन्मदनमनमेव विज्ञानं तथा च नाम्नैव विप्रतिपत्तिर्नार्थे इति शङ्कते। "साक्षिणोऽवगन्तुः स्वयंसिद्धतामपक्षिपता" अभिप्रयता "स्वयं प्रथते विज्ञानमित्येष एव" इति। निराकरोति। "न" इति। भवति हि विज्ञानस्योत्पादादयो धर्मा अभ्युपेतास्तथा चास्य फलतया नावगन्तृत्वम्। कर्तृफलभावस्यैकत्र विरोधात्, किन्तु प्रदीपादितुल्यमित्यर्थः॥

## वैधर्म्याच्च न स्वप्नादिवत्॥ २९॥

बाधाबाधौ वैधर्म्यं, स्वप्नप्रत्ययो बाधितो जाग्रत्प्रत्ययस्त्वबाधितः। त्वयापि चावश्यं जाग्रत्प्रत्ययस्याबाधितत्वमास्थेयं तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते। जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेत्। नहि बाध्यमेव बाधकं भवितुमर्हति। तथा च न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्यात् स्वप्नवदिति।

तस्माद्बाधाबाधाभ्यां वैधर्म्याच्च स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुम्। "निद्राग्लानम्" इति। करणदोषाभिधानं, मिथ्यात्वाय वैधर्म्यान्तरमाह। "अपि च स्मृतिरेव" इति। संस्कारमात्रजं हि विज्ञानं स्मृतिः। प्रत्युत्पन्नेन्द्रियसम्प्रयोगलिङ्गशब्दसादृश्यान्यथानुपपद्यमानयोग्यप्रमाणानुत्पत्तिलक्षणसामग्रीप्रभवन्तु ज्ञानमुपलब्धिः, तदिह निद्राणस्य सामग्र्यन्तरविरहात् संस्कारः परिशिष्यते, तेन संस्कारजत्वात् स्मृतिः, सापि च निद्रादोषाद्विपरीताऽवर्त्तमानमपि पित्रादि वर्त्तमानतया भासयति। तेन स्मृतिरेव तावदुपलब्धिविशेषस्तस्याश्च स्मृतेर्विपरीत्यमिति अतो महदन्तरमित्यर्थः। अपि च स्वतःप्रामाण्ये सिद्धे जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धं नानुमानेनान्यथयितुं शक्यमनुभवविरोधेन तदनुत्पादादबाधितविषयत्वस्यानुमानोत्पादसामग्र्या, न च कारणाभावे कार्य्यमुत्पत्तुमर्हतीत्याशयवानाह। "अपि चानुभवविरोधप्रसङ्गात्" इति॥

## न भावोऽनुपलब्धेः॥ ३०॥

यथा लोकदर्शनप्राप्तान्वयव्यतिरेकावनुविधीयमानावर्थोपलब्धिर्भवतो नार्थानपेक्षायां वासनायां वासनाया अप्यर्थोपलब्ध्याधीनत्वदर्शनादित्यर्थः। अपि चाश्रयाभावादपि न लौकिकी वासनोपपद्यते। न च क्षणिकमालयविज्ञानं वासनाधारो भवितुमर्हति। द्वयोर्युगपदुत्पद्यमानयोः सव्यदक्षिणशृङ्गवदाधाराधेयभावाभावात्। प्रागुत्पन्नस्य चाधेयानुत्पादसमये सतः क्षणिकत्वव्याघात इत्याशयवानाह। "अपि च वासना नाम" इति। शेषमतिरोहितार्थम्॥

## क्षणिकत्वाच्च॥ ३१॥

स्यादेतत् । यदि साकारं विज्ञानं न सम्भवति बाह्यश्चार्थः स्थूलसूक्ष्मविकल्पेनासम्भवी । हन्तैवमर्थज्ञाने सत्त्वेन तावद्विचारं न सहेते । नाप्यसत्त्वेन, असतो भासनायोगात् । नोभयत्वेन । विरोधात् सदसतोरेकत्वानुपपत्तेः । नाप्यनुभयत्वेन । एकनिषेधस्येतरविधाननान्तरीयकत्वात् । तस्माद्विचारासहत्वमेवास्तु तत्त्वं वस्तूनाम् । यथाहुः ।

इदं वस्तु बलायातं यद्वदन्ति विपश्चितः ।

यथा यथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥ इति ।

न क्वचिदपि पक्षे व्यवतिष्ठत इत्यर्थः । तदेतन्निराचिकीर्षुराह । "शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध" इति तन्निराकरणाय नादरः क्रियते" । लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति । तथा च सर्वप्रमाणविप्रतिषेधादियं व्यवस्थोपपद्यते । अथोच्येत तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यवहारिकम् । तथा च मिथ्याविषयत्वाच्च सर्वप्रमाणविप्रतिषेध इत्यत आह । न ह्ययं सर्वप्रमाणप्रसिद्धो लोकस्य व्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् । प्रमाणानि हि स्वगोचरं प्रवर्तमानानि तत्त्वमिदमित्थं च प्रवर्तन्ते । अतात्त्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यं न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते । बाधकश्चातात्त्विकत्वमेषां तद्गोचरविपरीततत्त्वोपदर्शनेन दर्शयेत् । यथा शुक्तिकेयं न रजतं मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि । तद्वदिहापि सदसत्ता-

गोचरविपरीततत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्शनीयं न त्वव्यवस्थापिततत्त्वान्तरेण प्रमाणानि शक्यानि बाधितुम्। विचारासहत्वं वस्तूनां तत्त्वं व्यवस्थापयद्बाधकमतात्त्विकत्वं प्रमाणानां दर्शयतीति चेत्, किं पुनरिदं विचारासहत्वं वस्तु यत्तत्त्वमभिमतं किं तद्वस्तु परमार्थतः सदादीनामन्यतमत् केवलं विचारं न सहते। अथ विचारासहत्वेन निस्तत्त्वमेव तत्र परमार्थतः सदादीनामन्यतमद्विचारं न सहत इति विप्रतिषिद्धम्। न सहते चेत् सदादीनामन्यतमदन्यतमच्चेत् कथं न विचारं सहते अथ निस्तत्त्वं चेत् कथमन्यतमत्तत्त्वमव्यवस्थाप्य शक्यमेवं वक्तुम्। न च निस्तत्त्वतैव तत्त्वं भावानां, तथा सति हि तत्त्वाभावः स्यात् सोऽपि च विचारं न सहत इत्युक्तं भवद्भिः। अपि चारोपितं निषेधनीयम् आरोपश्च तत्त्वाधिष्ठानो दृष्टो यथा शुक्तिकादिषु रजतादेः। न चेत् किञ्चिदस्ति तत्त्वं कस्य कस्मिन्वारोपः। तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्मानिदं प्रपञ्चात्मनारोप्यते, तच्च तत्त्वं व्यवस्थाप्यातात्त्विकत्वेन व्यावहारिकत्वं प्रमाणानां बाधकेनोपपद्यत इति युक्तमुत्पश्यामः।

## सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥

विभजते। "किं बहुनोक्तेन यथायथं" अस्यतोऽर्थस्यायं "वैनाशिकसमय" इति। अस्यतस्तावत्पश्यतां तद्धर्माभिधर्मापथाद्यसाधुपदप्रयोगः। अर्थतश्च नैरात्म्यमभ्युपेत्यालयविज्ञानं समस्तवासनाधारमभ्युपगच्छन्नन्तरमात्मानमभ्युपैति। एवं क्षणिकत्वमभ्युपेत्योत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितितेति नित्यतामुपैतीत्यादिकमुन्नेतव्यमिति॥

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥

निरस्तो मुक्तकच्छानां सुगतानां समयः, विवसनानां समय इदानीं निरस्यते। तत्समयमाह संक्षेपविस्तराभ्याम्। "सप्त चैषां पदार्थाः सम्मताः" इति। तत्र संक्षेपमाह। "संक्षेपतस्तु द्वावेव पदार्थौ" इति। बोधात्मको जीवो जडवर्गस्त्वजीव इति यथायोगं तयोर्जीवाजीवयोरिममपरं प्रपञ्चमाचष्टे। तमाह। "पञ्चास्तिकाया नाम" इति। "सर्वेषामप्येषामवान्तरप्रभेदान्" इति। जीवास्तिकायस्त्रिधा। बद्धो मुक्तो नित्यसिद्धश्चेति। पुद्गलास्तिकायः षोढा। पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमञ्चेति। धर्मास्तिकायः प्रवृत्त्यनुमेयोऽधर्मास्तिकायः स्थित्यनुमेयः। आकाशास्तिकायो द्वेधा। लोकाकाशोऽलोकाकाशश्च। तत्रोपर्युपरि स्थितानां लोकानामन्तर्वर्ती लोकाकाशस्तेषामुपरि मोक्षस्थानमलोकाकाशः। तत्र हि न लोकाः सन्ति। तदेवं जीवाजीवपदार्थौ पञ्चधा प्रपञ्चितौ। आस्रवसंवरनिर्जराख्याः पदार्थाः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते। द्विधा प्रवृत्तिः सम्यङ्मिथ्या च। तत्र मिथ्या प्रवृत्तिरास्रवः। सम्यक्प्रवृत्ती तु संवरनिर्जरौ। आस्रावयति पुरुषं विषयेष्विति इन्द्रियप्रवृत्तिरास्रवः। इन्द्रियद्वारा हि पौरुषं ज्योतिर्विषयान् स्पृशद्रूपादिज्ञानरूपेण परिणमत इति। अन्ये तु कर्माण्यास्रवमाहुः, तानि हि कर्त्तारमभिव्याप्य स्रवन्ति कर्त्तारमनुगच्छन्तीत्यास्रवः। सेयं मिथ्याप्रवृत्तिरनर्थहेतुत्वात्। संवरनिर्जरौ च सम्यक्प्रवृत्ती। तत्र शमदमादिरूपा प्रवृत्तिः संवरः। सा ह्यास्रवस्रोतसो द्वारं संवृणोतीति संवर उच्यते। निर्जरस्त्वनादिकाल-प्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिला-

रोहणादिः। स हि निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरः। बन्धोऽष्टविधं कर्म। तत्र घातिकर्म चतुर्विधम्। तद्यथा। ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरायमिति। तथा चत्वार्यघातिकर्माणि। तद्यथा, वेदनीयं नामिकं गोत्रिकमायुष्कं चेति। तत्र सम्यग् ज्ञानं न मोक्षसाधनम्। नहि ज्ञानाद्वस्तुसिद्धिरिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते। आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म। बहुषु विप्रतिपत्तिषु तीर्थकरैः प्रदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म। मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरायं कर्म। तानीमानि श्रेयोहन्तृत्वाद् घातिकर्माण्युच्यन्ते। अघातीनि कर्माणि तद्यथा वेदनीयं कर्म शुक्लपुद्गलविपाककर्तृ, तद्धि बन्धोऽपि न निःश्रेयसप्रतिपन्थि तत्त्वज्ञानाविघातकत्वात्। शुक्लपुद्गलारम्भकवेदनीयकर्मानुगुणं नामिकं कर्म, तद्धि शुक्लपुद्गलस्याद्यावस्थां कललबुद्बुदादिकमारभते। गोत्रिकमव्याकृतम्। ततोऽप्याद्यं शक्तिरूपेणावस्थानम्। आयुष्कं त्वायुः कारयति कथयत् तदाद्यमहत्यायुष्कम्। तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि। तदेतत् कर्माष्टकं पुरुषं बध्नातीति बन्धः। विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरि देशावस्थानं मोक्ष इत्येके। अन्ये तु ऊर्ध्वगमनशीलो हि जीवो धर्माधर्मास्तिकायेन बद्धस्तद्विमोक्षादूर्ध्वं गच्छत्येव स मोक्ष इति। त एते सप्त पदार्था जीवादयः सप्तावान्तरप्रभेदैरुपन्यस्ताः। तत्र "सर्वत्र चेमं सप्तभङ्गीनयन्नाम न्यायमवतारयन्ति। स्यादस्ति स्यान्नास्ति स्यादवक्तव्यः स्यादस्ति च नास्ति च स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति

त्यस्ति चावक्तव्यश्च" इति। स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योती। यथाहुः।

वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम्।

स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः॥ इति।

यदि पुनरयमनेकान्तद्योतकः स्याच्छब्दो न भवेत् स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात्, तदिदमुक्तमर्थयोगित्वादिति। अनेकान्तद्योतकत्वे तु स्यादस्ति कथञ्चिदस्तीति स्यात्पदात् कथञ्चिदर्थोऽस्तीत्यनेनानुक्तः प्रतीयत इति नानर्थक्यम्। तथा च।

स्याद्वादः सर्वथैकान्तत्यागात् किंवृत्तचिद्विधेः।

सप्तभङ्गनयापेक्षो हेयादेयविशेषकृत्॥

किंवृत्ते प्रत्यये खल्वयं चिन्निपातविधिना सर्वथैकान्तत्यागात् सप्तस्वेकान्तेषु यो भङ्गस्तत्र यो नयस्तदपेक्षः सन् हेयोपादेयभेदाय स्याद्वादः कल्पते। तथाहि। यदि वस्त्वस्त्येवेत्येकान्तस्तत् सर्वथा सर्वदा सर्वत्र सर्वात्मनाऽस्त्येवेति, न तदीप्साजिहासाभ्यां क्वचित् कदाचित् कथञ्चित् कश्चित् प्रवर्त्तेत निवर्त्तेत वा। प्राप्ताप्रापणीयत्वात्, हेयस्यानुपपत्तेश्च। अनेकान्तपक्षे तु क्वचित् कदाचित् कस्यचित् कथञ्चित् सत्त्वे हानोपादाने प्रेक्षावतां कल्पेते इति तमेतं सप्तभङ्गीनयं दूषयति। "नैकस्मिन्नसम्भवात्" विभजते। "नह्येकस्मिन् धर्मिणि" परमार्थसति परमार्थसतां "युगपत्सदसत्त्वादीनां धर्माणां" परस्परपरिहारस्वरूपाणां समावेशः सम्भवति। एतदुक्तं भवति। सत्यं यदस्ति वस्तुतस्तत्सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव न नास्ति, यथा प्रत्यगात्मा। यत्तु क्वचित् कथञ्चित् कदाचित् केनचिदात्मनाऽस्तीत्युच्यते यथा प्रपञ्चस्तद्व्यवहारतो न तु परमार्थत-

स्तस्य विचारासहत्वात् । न च प्रत्ययमात्रं वास्तवत्वं व्यवस्थापयति, शुक्तिमरुमरीचिकादिषु रजततोयादेरपि वास्तवत्वप्रसङ्गात् । लौकिकानामबाधेन तु तद्व्यवस्थायां देहात्माभिमानस्याप्यबाधेन तात्त्विकत्वे सति लोकायतमतापातेन नास्तिकत्वप्रसङ्गात् । परीक्षकरूपाणां तु देहात्माभिमानस्य विचारतो बाधनं प्रपञ्चस्याप्यनेकान्तस्य तुल्यमिति । अपि च सदसत्त्वयोः परस्परविरुद्धत्वेन समुच्चयाभावे विकल्पः । न च वस्तुनि विकल्पः सम्भवति । तस्मात् स्थाणुर्वा पुरुषो वेति ज्ञानवत् सप्तत्वपञ्चत्वनिर्धारणस्य फलस्य निर्धारयितुश्च प्रमातुस्तत्करणस्य प्रमाणस्य च तत्प्रमेयस्य च सप्तत्वपञ्चत्वस्य सदसत्त्वसंशये साधु समर्थितं तीर्थकरत्वमृषभेणात्मनः । निर्धारणस्य चैकान्तसत्त्वे सर्वत्र नानेकान्तवाद इत्याह । "य एते सप्त पदार्थाः" इति । शेषमतिरोहितार्थम् ॥

## एवं चात्माकार्त्स्न्यम् ॥ ३४ ॥

"एवं च" इति चेन समुच्चयं द्योतयति । शरीरपरिमाणत्वे ह्यात्मनोऽकृत्स्नत्वं परिच्छिन्नत्वम्, तथा चानित्यत्वं, ये हि परिच्छिन्नास्ते सर्वेऽनित्या यथा घटादयस्तथा चात्मेति । तदेतदाह । "यथैकस्मिन् धर्मिणि" इति । इदं चापरमकृत्स्नत्वेन सूचितमित्याह । "शरीराणां चानवस्थितपरिमाणत्वात्" इति । मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्नुं महत्यल्पत्वादित्यात्मनः कृत्स्नशरीराव्यापित्वादकार्त्स्न्यम्, तथा च न शरीरपरिमाणत्वमिति । तथा हस्तिशरीरं परित्यज्य यदा पुत्तिकाशरीरो भवति तदा न तत्र कृत्स्नः पुत्तिकाशरीरे सम्मीयेतेत्यकार्त्स्न्यमात्मनः । सुगममन्यत् । चोदयति । "स्यादेतत्" । "अन-

न्तावयवः" इति। यथा हि प्रदीपो घटमहाहर्म्योदरवर्ती सङ्कोचविकासवानेवं जीवोऽपि पुत्तिकाहस्तिदेहयोरित्यर्थः। तदेतद्विकल्प्य दूषयति। "तेषां पुनरनन्तानाम्" इति। न तावत्प्रदीपोऽत्र निदर्शनं भवितुमर्हति, अनित्यत्वप्रसङ्गात्। विसारवो हि प्रदीपावयवाः प्रदीपश्चावयवी प्रतिक्षणमुत्पत्तिनिरोधधर्मा तस्मादनित्यत्वात्तस्य नास्थिरो जीवस्तदवयवाश्चाभ्युपेतव्याः। तथा च विकल्पद्वयोक्तं दूषणमिति। यच्च जीवावयवानामानन्त्यमुदितं तदनुपपन्नतरमित्याह। "अपि च शरीरमात्र" इति। शङ्कापूर्वं सूत्रान्तरमवतारयति। "अथ पर्यायेण" इति। तत्राप्युच्यते।

## न च पर्यायादप्यविरोधो विकारादिभ्यः॥ ३५॥

कर्माष्टकमुक्तं ज्ञानावरणीयादि। किं चात्मनो नित्यत्वाभ्युपगमे आगच्छतामपगच्छतां चावयवानामियत्ताऽनिरूपणेन चात्मज्ञानाभावान्नापवर्ग इति भावः। "अत एवमादिदोषप्रसङ्गात्" इति। आदिपदसूचितं दोषं ब्रूमः। किं चैते जीवावयवाः प्रत्येकं वा चेतयेरन् समूढा वा, तेषां प्रत्येकं चैतन्ये बहूनां चेतनानामैकाभिप्रायत्वनियमाभावात् कदाचिद्विरुद्धदिक्क्रियत्वेन शरीरमुन्मथ्येत। समूहचैतन्ये तु हस्तिशरीरस्य पुत्तिकाशरीरत्वे छिन्नावयवशेषो जीवो न चेतयेत्। विगलितबहुसमूहितया समूहस्याभावात्। "पुत्तिकाशरीर" इति। "अथवा" इति। पूर्वसूत्रप्रसञ्जितायां जीवानित्यतायां बौद्धवत्सन्ताननित्यतामाशङ्क्येदं सूत्रम्। 'न च पर्यायादप्यविरोधो विकारादिभ्यः'। न च पर्यायात् परिमाणानवस्थानेऽपि सन्तानाभ्युपगमेनात्मनो नित्यत्वादविरोधो बन्धमोक्षयोः। कुतः। परिणामादिभ्यो

दोषेभ्यः। सत्तायाश्च वस्तुत्वे परिणामस्ततश्चमेवदनित्यत्वादिदोषप्रसङ्गः। अवस्तुत्वे चादिपदसूचिता नैरात्म्यापत्तिदोषप्रसङ्ग इति। विसिचो विवसनाः॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः॥ ३६॥

एवं हि मोक्षावस्थाभावि जीवपरिमाणं नित्यं भवेत्। यद्यभूत्वा न भवेदभूत्वा भाविनामनित्यत्वाद्घटादीनाम्। कथञ्चाभूत्वा न भवेद्यदि प्रागप्यासीत्। न च परिमाणान्तरावरोधेऽपूर्वं भवितुमर्हति। तस्मादन्त्यमेव परिमाणं पूर्वमप्यासीदित्यभेदः। तथा चैकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरप्राप्तिः शरीरपरिमाणत्वाभ्युपगमव्याघातादिति। अत्र चोभयोः परिमाणयोर्नित्यत्वप्रसङ्गादिति योजना। एकशरीरपरिमाणतैवेति च योज्यम्। द्वितीये तु व्याख्याने उभयोरवस्थयोरिति योजना। एकशरीरपरिमाणता न योज्या, किन्त्वेकपरिमाणतामात्रमणुर्महान् वेति विवेकः॥

## पत्युरसामञ्जस्यात्॥ ३७॥

अविशेषेणेश्वरकारणवादोऽनेन निषिध्यत इति भ्रमनिरासायमाह। "केवला" इति। सांख्ययोगव्यपाश्रया हिरण्यगर्भपतञ्जलिप्रभृतयः। प्रधानमुक्तं दृक्शक्तिः पुरुषः प्रत्ययानुपश्यः। स च नानाक्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः प्रधानपुरुषाभ्यामन्यः। माहेश्वराश्चत्वारः शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति। चत्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायितया माहेश्वराः। कारणमीश्वरः। कार्यं प्राधानिकं महदादि। योगोऽप्योङ्कारादिध्यानधारणादिः। विधिस्त्रिषवणस्नानादिर्गूढचर्यावसानो दुःखान्तो मोक्षः। पशव आत्मानो जीवाः पाशो बन्धनं

तद्विमोक्षो दुःखान्तः। एष तेषामभिसन्धिः। चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्यं निमित्तकारणत्वमात्रं न तूपादानत्वमपि। तस्मादिहापीश्वरोऽधिष्ठाता जगत्कारणानां निमित्तमेव, न तूपादानमप्येकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधादिति प्राप्तम्। एवं प्राप्तेऽभिधीयते। पत्युरसामञ्जस्यादिति। इदमत्राकूतम्। ईश्वरस्य निमित्तकारणत्वमात्रमागमाद्वाऽवगम्येत प्रमाणान्तराद्वा, प्रमाणान्तरमप्यनुमानमर्थापत्तिर्वा। न तावदागमात्, तस्य निमित्तोपादानकारणत्वप्रतिपादनपरत्वादित्यसकृदावेदितम्। तस्मादनेनास्मिन्नर्थे प्रमाणान्तरमास्थेयम्। तत्रानुमानं तावन्न सम्भवति। तद्धि दृष्टानुसारेण प्रवर्तते तदनुसारेण चासामञ्जस्यम्। तदाह। "हीनमध्यम" इति। एतदुक्तं भवति। आगमादीश्वरसिद्धौ न दृष्टमनुसर्तव्यं, नहि स्वर्गापूर्वदेवतादिष्वागमादवगम्यमानेषु किञ्चिदस्ति दृष्टम्। नह्यागमो दृष्टमपेक्ष्य प्रवर्तते। तेन श्रुतसिद्धार्थसदृशानि दृष्टविपरीतस्वभावानि सुबहून्यपि कल्प्यमानानि न लौकिकगम्यतामावहन्ति प्रमाणवत्त्वात्। यस्तु तत्र कथञ्चिद् दृष्टानुसारः क्रियते स सुहृद्भावमात्रेणागमानपेक्षेण अनुमानन्तु दृष्टसाधर्म्येण प्रवर्तमानं दृष्टविपर्यये तुषादपि बिभेतितरामिति। प्राणिकर्मापेक्षत्वाददोष इति चेत्। न। कुतः, कर्मेश्वरयोर्मिथः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयत्वदोषप्रसङ्गात्। अयमर्थः। यदीश्वरः करुणापराधीनो वीतरागस्ततः प्राणिनः कपूये कर्मणि न प्रवर्तयेत्तेषामुत्पन्नमपि नाधितिष्ठेत् तावन्मात्रेण च प्राणिनां दुःखानुत्पादात्। नहीश्वराधीना जनाः स्वातन्त्र्येण कपूयं कर्म कर्तुमर्हन्ति। तदनधिष्ठितं वा कपूयं कर्म फलं प्रसोतुमुत्सहते। तस्मात् स्वतन्त्रोऽपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयम्।

तथा चायमपरो गण्डस्योपरि स्फोट इतरेतराश्रयः प्रसज्येत, कर्मणेश्वरः प्रवर्त्तनीय ईश्वरेण च कर्मेति। शङ्कते। "अनादित्वादिति चेत्" पूर्वकर्मणेश्वरः सम्प्रतितने कर्मणि प्रवर्त्यते तेनेश्वरेण सम्प्रतितनं कर्म स्वकार्ये प्रवर्त्यत इति। निराकरोति। "न, वर्त्तमानकालवत्" इति। यथा पूर्वं कर्म कथमीश्वराप्रवर्त्तितमीश्वरप्रवर्त्तनलक्षणं कार्यं करोति। तत्रापि प्रवर्त्तितमीश्वरेण पूर्वतनकर्मप्रवर्त्तितेनेत्येवमन्धपरम्परादोषः। चक्षुष्मता ह्यन्धो नीयते नान्धान्तरेण। तथापि द्वावपि प्रवर्त्याविति कः कं प्रवर्त्तयेदित्यर्थः। अपि च नैयायिकानामीश्वरस्य निर्दोषत्वं स्वसमयविरुद्धमित्याह। "अपि च" इति। अस्माकन्तु नायं समय इति भावः। ननु कारुण्यादपि प्रवर्त्तमानो जनो दृश्यते न च कारुण्यं दोष इत्यत आह। "स्वार्थप्रयुक्त एव च" इति। कारुण्ये हि सत्यस्य दुःखं भवति तेन तत्प्रहाणाय प्रवर्त्तत इति कारुणिका अपि स्वार्थप्रयुक्ता एव प्रवर्त्तन्त इति। ननु स्वार्थप्रयुक्त एव प्रवर्त्ततामेवमपि को दोष इत्यत आह। "अर्थवत्त्वादीश्वरस्य" इति। अर्थित्वादित्यर्थः। पुरुषस्य चौदासीन्याभ्युपगमाच्च वास्तवी प्रवृत्तिरिति। अपरमपि दृष्टानुसारेण दूषणमाह॥

## सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

दृष्टो हि सावयवानामसर्वगतानाञ्च संयोगः। अप्राप्तिपूर्विका हि प्राप्तिः संयोगः, न सर्वगतानां सम्भवत्यप्राप्तेरभावान्निरवयवत्वाच्च। अव्याप्यवृत्तिता हि संयोगस्य स्वभावो न च निरवयवेष्वव्याप्यवृत्तिता संयोगस्य सम्भवतीत्युक्तम्। तस्मादव्याप्यवृत्तितायाः संयोगस्य व्यापिकाया निवृत्तेस्तद्व्या-

प्यस्य संयोगस्य विनिवृत्तिरिति भावः। नापि समवायलक्षणः। स ह्ययुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः सम्बन्ध इत्यभ्युपेयते न च प्रधानपुरुषेश्वराणां मिथोऽस्त्याधाराधेयभाव इत्यर्थः। नापि योग्यतालक्षणः कार्य्यगम्य-सम्बन्ध इत्याह। "नान्यः" इति। नहि प्रधानस्य महदहङ्कारादिकारणत्वमद्यापि सिद्धमिति शङ्कते। "ब्रह्मवादिनः" इति। निराकरोति। "न" कुतस्तस्य मतेऽनिर्वचनीयतादात्म्यलक्षणसम्बन्धोपपत्तेः। "अपि च" इति। आगमो हि प्रवृत्तिं प्रति न दृष्टान्तमपेक्षते इत्यदृष्टपूर्वे नाहकेऽ च प्रवर्त्तितुं समर्थः। अनुमानन्तु दृष्टानुसारि नैवंविधे प्रवर्त्तितुमर्हतीति, शङ्कते। "परस्यापि" इति। परिहरति। "न" इति। अस्माकं त्वीश्वरागमयोरनादित्वादीश्वरयोनित्वेऽप्यागमस्य न विरोध इति भावः॥

## अधिष्ठानानुपपत्तेश्च॥ ३९॥

यथादर्शनमनुमानं प्रवर्त्तते नालौकिकार्थविषयमितीहापि न प्रवर्त्तत्यम्। सुगममन्यत्॥

## करणवच्चेन्न भोगादिभ्यः॥ ४०॥

"रूपादिहीनम्" इति। अनुद्भूतरूपमित्यर्थः। रूपादिहीनकरणाधिष्ठानं हि पुरुषस्य स्वभोगादावेव दृष्टं नान्यत्र। नहि बाह्यं कुठाराद्यपरिदृष्टं व्यापारयन् कश्चिदुपलभ्यते। तस्माद्रूपादिहीनं करणं व्यापारयत ईश्वरस्य भोगादिप्रसक्तिस्तथा चानीश्वरत्वमिति भावः। कल्पान्तरमाह। "अन्यथा" इति। पूर्वमधिष्ठितिरधिष्ठानमिदानीन्तु अधिष्ठानं भोगायतनं शरीरमुक्तम्। तथा भोगादिप्रसङ्गेनानीश्वरत्वं पूर्व-

मापादितम्। सम्प्रति तु शरीरित्वेन भोगादिप्रसञ्जनादनी-श्वरत्वमुक्तमिति विशेषः॥

## अन्तवत्त्वमसर्वज्ञता वा॥ ४१॥

अपि च सर्वत्रानुमानं प्रमाणयतः प्रधानपुरुषेश्वराणामपि सङ्ख्याभेदवत्त्वमन्तवत्त्वं च दृष्टत्वात्। सङ्ख्यान्यत्वमपि प्रसज्येताद्यानुमानस्य ततश्चान्तवत्त्वमसर्वज्ञता वा। अस्माकं त्वागमगम्येऽर्थे तद्बाधितविषयतया नानुमानं प्रवर्तत इति भावः। स्वरूपपरिमाणमपि यस्य यादृगमणुमहत् परममहद्दीर्घं ह्रस्वं चेति। "अथ मा भूदेष दोषः" इत्युत्तरो विकल्पो यस्यान्तोऽस्ति तस्यान्तवत्त्वाग्रहणमसर्वज्ञतामापादयेत्। यस्य त्वन्त एव नास्ति तस्य तदग्रहणं नामसर्वज्ञतामावहति नहि शशविषाणाद्यज्ञानादज्ञो भवतीति भावः। परिहरति। "ततः" इति। आगमानपेक्षस्यानुमानमयामन्तवत्त्वमवगमयतीत्युक्तम्।

## उत्पत्त्यसम्भवात्॥ ४२॥

अन्यत्र वेदैर्विसंवादाद्यत्रापि विसंवादः स निरस्यते तमंशमाह। "यत्पुनरिदमुच्यते"। "वासुदेवात्सङ्कर्षणो जीवः" इति जीवस्य कारणवत्त्वे सत्यनित्यत्वम्, अनित्यत्वे परलोकिनोऽभावात्परलोकाभावः। ततश्च स्वर्गनरकापवर्गाभावाप्रत्तेनाभावापत्तेर्नास्तिक्यमित्यर्थः। अनुपपन्ना च जीवस्योत्पत्तिरित्याह। "प्रतिषेधिष्यते च" इति॥

## न च कर्तुः करणम्॥ ४३॥

यद्यप्यनेकशिल्पपर्यवदातः परशुं कृत्वा तेन पलाशं छिनत्ति। यद्यपि च प्रयत्नेनेन्द्रियार्थसन्निकर्षेण मनसा ज्ञानकारणमुपादायार्थं विजानाति तथापि सङ्कर्ष-

णोऽकरणः कथं प्रद्युम्नाख्यं मनःकरणं कुर्यात् । अकरणस्य वा करणनिर्माणसामर्थ्ये कृतं करणनिर्माणेनाकरणादेव निखिलकार्यसिद्धेरिति भावः ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

वासुदेवा एवैते सङ्कर्षणादयः "निर्दोषाः" अविद्यादिदोषरहिताः । "निरधिष्ठानाः" निरुपादानाः अत एव "निरवद्याः" अनित्यत्वादिदोषरहिताः, तस्मादुत्पत्त्यसम्भवोऽनुगुणत्वान्न दोष इत्यर्थः । अथोच्यते । "एवमपि" इति । मा भूदभ्युपगमे न दोषः, प्रकारान्तरेण त्वयमेव दोषः । प्रश्नपूर्वं प्रकारान्तरमाह । "कथं यदि तावत्" इति । न तावदेते परस्परं भिन्ना ईश्वराः परस्परव्याहतेच्छा भवितुमर्हन्ति । व्याहतकामत्वे च कार्यानुत्पादात् । अव्याहतकामत्वे वा प्रत्येकमीश्वरत्वे एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम् । सम्भूय चेशनायां परिशुद्धो न कश्चिदीश्वरः स्यात्, सिद्धान्तहानिश्च । भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । तस्मात् कल्पान्तरमास्थेयम् । तत्र चोत्पत्त्यसम्भवो दोष इत्याशयवान् कल्पान्तरमुपन्यस्योत्पत्त्यसम्भवेनापाकरोति । "अथायमभिप्रायः" इति । सुगममन्यत् ॥

## विप्रतिषेधाच्च ॥ ४५ ॥

गुणिभ्यः सङ्कर्षणादिभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रूते । "आत्मान एवैते भगवन्तो वासुदेवाः" इति । आदिग्रहणेन प्रद्युम्नानिरुद्धयोर्मनोऽहङ्कारलक्षणतयात्मनो भेद-

मभिधायामान एवैत इति तद्विकल्पाभेदाभिधानमपरं संगृहीतम्। वेदविप्रतिषेधो व्याख्यातः॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्य-
विभागे भामत्यां द्वितीयाध्यायस्य द्वितीयः पादः।

---

## न वियदश्रुतेः॥ १॥

पूर्वं प्रमाणान्तरविरोधः श्रुतेर्निराकृतः, सम्प्रति तु श्रुतीनामेव परस्परविरोधो निराक्रियते। तत्र सृष्टिश्रुतीनां परस्परविरोधमाह। "वेदान्तेषु तत्र तत्र" इति। श्रुतिविप्रतिषेधाच्च परपक्षाणामनपेक्षत्वं ख्यापितं तद्वत् स्वपक्षस्य श्रुतिविप्रतिषेधादिति। "तदर्थनिमन्नत्वम्" पर्याभासविनिवृत्त्याथत-त्प्रतिपादनम्। तस्य फलं स्वपक्षस्य जगतो ब्रह्मकारणत्वस्यानपेक्षत्वाशङ्कानिवृत्तिः। इह हि पूर्वपक्षे श्रुतीनां मिथो विरोधः प्रतिपाद्यते सिद्धान्ते त्वविरोधः। तत्र कि[illegible]-कदेशिना वचनं "न वियदश्रुतेः" इति। तस्याभिसन्धिः। यद्यपि तैत्तिरीयके वियदुत्पत्तिश्रुतिरस्ति तथापि तस्याः प्रमाणान्तरविरोधाद् बहुश्रुतिविरोधाच्च गौणत्वम्। तथाच वियतो नित्यत्वात्तेजःप्रमुख एव सर्गः, तथाच न विरोधः श्रुतीनामिति। तदिदमुक्तम्। "प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्योत्पत्तिरस्त्युत नास्ति" इति। यदि नास्ति, न श्रुतिविरोधाशङ्का। अथास्ति, ततः श्रुतिविरोध इति तत्परिहाराय प्रयत्नान्तरमास्थेयमित्यर्थः। तत्र पूर्वपक्षसूत्रम्। "अस्ति तु" तैत्तिरीये हि सर्गप्रकरणे केवलस्याकाशस्य [illegible] सर्गः श्रूयते छान्दोग्ये च केवलस्य तेजसः प्रथमः सर्गः। न च श्रुत्यन्तरानुरोधेनाश्रयस्याधिगत-

स्यापि ससहायताकल्पनं युक्तं, सहायत्वावगमविरोधात्। श्रुतसिद्ध्यर्थं ह्यश्रुतं कल्प्यते न तु तद्विघाताय विहन्यते चासहायत्वं श्रुतं कल्पितेन ससहायत्वेन। न च परस्परानपेक्षाणां व्रीहियववत् विकल्पोऽनुष्ठानं हि विकल्प्यते न वस्तु। नहि स्थाणुपुरुषविकल्पो वस्तुनि प्रतिष्ठां लभते। न च सर्गभेदेन व्यवस्थोपपद्यते। साम्प्रतिकसर्गवद्भूतपूर्वस्यापि तथात्वात्। न खल्विह सर्गे क्षीराद्दधि जायते सर्गान्तरे तु दध्नः क्षीरमिति भवति। तस्मात्सर्गश्रुतयः परस्परविरोधिन्यो नास्मिन्नर्थे प्रमाणं भवितुमर्हन्तीति पूर्वः पक्षः। सिद्धान्त्येकदेशी सूत्रेण स्वाभिप्रायमाविष्करोति।

## गौण्यसम्भवात् ॥ २ ॥

प्रमाणान्तरविरोधेन बहुश्रुत्यन्तरविरोधेन चाकाशोत्पत्त्यसम्भवात्। गौणी चाकाशोत्पत्तिश्रुतिरित्यविरोध इत्यर्थः। प्रमाणान्तरविरोधमाह। "नह्याकाशस्य" इति। समवाय्यसमवायिनिमित्तकारणेभ्यो हि कार्यस्योत्पत्तिर्नियता तदभावे न भवितुमर्हति धूम इव धूमध्वजाभावे। तस्मात्तदकारणमाकाशं नित्यमिति। अपि च य उत्पद्यन्ते तेषां प्रागुत्पत्तेरनुभवार्थक्रिये नोपलभ्येते उत्पन्नस्य च दृश्येते यथा तेजःप्रभृतीनाम्। न चाकाशस्य तादृशो विशेष उत्पादानुत्पादयोरस्ति, तस्मान्नोत्पद्यत इत्याह। "उत्पत्तिमताम्" इति। "प्रकाशनम्" प्रकाशो घटपटादिगोचरः। "पृथिव्यादिवैधर्म्याच्च" इति। चादिग्रहणेन द्रव्यत्वे सत्यस्पर्शवत्त्वादात्मवन्नित्यमाकाशमिति सूचितम्। "आरण्यानाकाशेषु" इति। वेदेऽप्येकस्याकाशस्यौपाधिकं बहुत्वं तदेवं

प्रमाणान्तरविरोधेन गौणत्वमुक्त्वा मुख्यान्तरविरोधेनापि गौणत्वमाह॥

## शब्दाच्च ॥ ३ ॥

सुगमम्॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

पदस्यानुषङ्गो न पदार्थस्य तस्य क्वचिन्मुख्यं क्वचिदौपचारिकं मुख्यतामुख्यताभ्यामित्यविरोधः। चोद्यद्वयं करोति। "कथम्" इति। प्रथमं चोद्यं परिहरति। "एकमेवेति तावत्" इति। "कुलं" गृहम्। "अमत्राणि पात्राणि घटशरावादीनि। आपेक्षिकमवधारणं न सर्वविषयमित्यर्थः। उपपत्त्यन्तरमाह। "न च नभसापि" इति। अपि-रभ्युपगमे। यदि सर्वापेक्षं तथाप्यदोष इत्यर्थः। "न च प्रागुत्पत्तेः"। जगत इति शेषः। द्वितीयं चोद्यमपाकरोति। "अतएव च ब्रह्मविज्ञानेन" इति। तद्ब्रह्मणाऽस्वाभाविनाकाशस्य ब्रह्मणोऽन्यत्वादिति। अपि चाविभक्तदेशकालमाकाशं ब्रह्मणा च ब्रह्मकार्यैश्च तदभिन्नस्वभावैरतः क्षीरकुम्भपरिमितनिमग्नपयोबिन्दुवद् ब्रह्मणि तत्कार्ये च विज्ञाते नभो विदितं भवतीत्याह। "अपि च सर्वं कार्यमुत्पद्यमानम्" इति। एवं सिद्धान्तैकदेशिमतं प्राप्त इदमाह॥

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ५ ॥

ब्रह्मविवर्तात्मतया जगतस्तद्विकारस्य वस्तुतो ब्रह्मणोऽभेदे ब्रह्मणि ज्ञाते ज्ञानमुपपद्यते नहि जगत्तत्त्वं ब्रह्मणोऽन्यत्। तस्मादाकाशमपि तद्विवर्ततया तद्विकारः सत्-कृज्ज्ञानेन ज्ञातं भवति नान्यथा। अविकारत्वे तु ततस्त

स्यादन्तरं न ब्रह्मणि विदिते विदितं भवति। भिन्नयोस्तु लक्षणान्यत्वभावेऽपि देशकालाभेदेऽपि नान्यतरज्ञानेनान्यतरज्ञानं भवति। नहि क्षीरस्य पूर्णकुम्भे क्षीरे गृह्यमाणे सत्स्वपि पाथोबिन्दुषु पाथस्त्वप्रतिज्ञातत्वमस्ति विज्ञानं तस्मान्न ते क्षीरे विदिते विदिता इति प्रतिज्ञादृष्टान्तप्रत्ययानुपरोधाय वियत उत्पत्तिरकामेनाप्यभ्युपेयेति। तदेवं सिद्धान्तैकदेशिना दूषिते पूर्वपक्षे स्वपक्षे विशेषमाह। "सत्यं दर्शितम्" अतएव "विरुद्धं तु तत्" इति। सिद्धान्तसारमाह। "नैष दोषस्तेजःसर्गस्य तैत्तिरीयके" इति। श्रुत्योरन्यथोपपद्यमानान्यथानुपपद्यमानयोरन्यथानुपपद्यमाना बलवती तैत्तिरीयकश्रुतिः। छान्दोग्यश्रुतिस्त्वन्यथोपपद्यमाना दुर्बला। नन्वसहायं तेजः प्रथममवगम्यमानं ससहायत्वेन विरुध्यते इत्यत आह। "नहीयं श्रुतिस्तेजोजनिप्रधाना" इति। सर्गसंसर्गः श्रौतो भेदस्त्वार्थः। स च श्रुत्यन्तरेण विरोधिना बाध्यते, अवन्ध्यत्वात्। न च तेजः प्रमुखसर्गसंसर्गवदसहायत्वमप्यस्य श्रौतं, किन्तु व्यतिरेकलभ्यं, न च श्रुतेन तदपवादबाधनं श्रुतस्य तेजःसर्गस्यानुपपत्तिः। तदिदमुक्तं। तेजोजनिप्रधानेति। स्यादेतत्। यद्येकं वाक्यमनेकार्थं न भवत्येकस्य व्यापारद्वयासम्भवात्, हन्त भोः कथमेकस्य स्रष्टुरनेकव्यापारत्वमविरुद्धमित्यत आह। "स्रष्टा त्वेकोऽपि" इति। वृद्धप्रयोगाधीनावधारणं शब्दसामर्थ्यं न चानावृत्तस्य शब्दस्य क्रमाक्रमाभ्यामनेकत्रार्थे व्यापारो दृष्टः। दृष्टस्तु क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारत्वमित्यर्थः। न चास्मिन्नर्थे एकस्य वाक्यस्य व्यापारोऽपि तु भिन्नानां वाक्यानामित्याह। "न वाक्याभिः" इति। सुगमम्। चोदयति। "ननु शमविधा-

नार्थम्" इति। यत्परः शब्दः स शब्दार्थो न चैष सृष्टिपरोऽपि तु ब्रह्मपर इत्यर्थः। परिहरति। "न हि तेजःप्राथम्यानुरोधेन" इति। गुणत्वादार्थत्वाच्च क्रमस्य श्रुतप्रधानपदार्थविरोधात्तस्यायोगोऽयुक्त इत्यर्थः। सिद्धान्त्यैकमत्येन वियदनुत्पत्तिवादिनं प्रत्याह। "अपि च छान्दोग्ये" इति। यत् पुनरन्यथा प्रतिज्ञोपपादनं कृतं तद्दूषयति। "यच्चोक्तम्" इति। दृष्टान्तानुरूपत्वाद्दार्ष्टान्तिकस्य तस्य च प्रकृतिविकाररूपत्वाद्दार्ष्टान्तिकस्यापि तथाभावः। अपि च भ्रान्तिमनु चैतद्वचनमेकमेवाद्वितीयमिति नापि लोकबुद्धिवत्। औपचारिकं वा सिंहो माणवक इतिवत्। तत्र न तावद्भ्रान्तिमित्याह। "लौकिकन्यायेन" इति। भ्रान्तिविज्ञानस्याप्रमाणस्य च पुरुषधर्मत्वादपौरुषेये तदसम्भव इत्यर्थः। नाप्यौपचारिकमित्याह। "सावधारणा चेयम्" इति। काममुपचारादस्त्वेकत्वमवधारणाऽद्वितीयपदं नोपपद्यते। नहि माणवके सिंहत्वमुपचर्य न सिंहादन्योऽस्ति मनाग् माणवक इति वदन्ति लौकिकाः। तस्माद्ब्रह्मत्वमैकान्तिकं जगतो विवक्षितं श्रुत्या न त्वौपचारिकम्। अभ्यासे हि भूयस्त्वमर्थस्य भवति न त्वल्पत्वमपि प्रागेवौपचारिकमित्यर्थः। "न च स्वकार्यापेक्षया" इति। निःशेषवचनः सर्वशब्दो नासति श्रुत्यन्तरविरोधे एकदेशविषयो युज्यत इत्यर्थः। आकाशस्योत्पत्तौ प्रमाणान्तरविरोधमुक्तमनुभाष्य तस्य प्रमाणान्तरस्य प्रमाणान्तरविरोधेनाप्रमाणभूतस्य न गौणत्वापादनसामर्थ्यमित्याह॥

## यावद्विकारं तु विभागो लोकवत् ॥ ६ ॥

सोऽयं प्रयोग आकाशदिक्कालमनःपरमाणवो विकार-

सामान्यत्वे सति विभक्तत्वाद् घटशरावोदञ्चनादिवदिति। "सर्वं कार्यं निरात्मकम्" इति। निरुपादानं स्यादित्यर्थः। शून्यवादश्च निराकृतः स्वयमेव श्रुत्योपन्यस्य कथमसतः सज्जायेतेति। उपपादितश्च तन्निराकरणमधस्तादिति। आत्मत्वादेवात्मनः प्रत्यगात्मनो निराकरणाशङ्कानुपपत्तिः। एतदुक्तं भवति। सोपादानं चेत्कार्यं तत आत्मैवोपादानमुक्तं तस्यैवोपादानत्वं न पुनरुपादानान्तरकल्पनानुपपत्तेरिति। स्यादेतत्। अस्त्वात्मोपादानमस्य जगतस्तस्य तूपादानान्तरमन्वेष्यमाणमप्यन्यद्भविष्यतीत्यत आह। "न ह्यात्मागन्तुकः कस्यचिदुपादानान्तरस्योपादेयः" कुतः "स्वयं सिद्धत्वात्" सत्ता वा प्रकाशो वास्य स्वयं सिद्धो तत्प्रकाशाभिकायाः सिद्धस्तावदनागन्तुकत्वमाह। "न ह्यात्मात्मनः" इति। उपपादितमेतदधः संशयविपर्य्यासगोचरानास्पदत्वात्। कदापि नात्मा पराधीनप्रकाशस्तदधीनप्रकाशास्तु प्रमाणादयोऽत एव श्रुतिः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति। "न चेदृशस्य निराकरणं सम्भवति" इति। निराकरणमपि हि तदधीनात्मलाभं तद्विरुद्धं नोदेतुमर्हतीत्यर्थः। सत्ताया अनागन्तुकत्वमप्याह। "तथा हमेवेदानीं जानामि" इति। प्रमाप्रमाणप्रमेयाणां वर्त्तमानातीतानागतत्वेऽपि प्रमातुः सदा वर्त्तमानत्वानुभवादप्रच्युतस्वभावस्य नागन्तुकं सत्त्वम्। त्रैकाल्यावच्छेदेन ह्यागन्तुकत्वं स्यात् तत्प्रमातुः सदा वर्त्तमानाद्वर्त्तमानमागन्तुकत्वं स्वस्याप्यसमादाय निवर्त्तत इति। "अन्यथाभवत्यपि ज्ञातव्ये" इति। प्रकृतिप्रत्ययाभ्यां ज्ञानज्ञेययोरन्यथाभावो दर्शितः। ननु जीवतः प्रमातुर्मा भूदन्यथाभावो मृतस्य तु भविष्यतीत्यत आह। "तथा भस्मीभवत्यपि" इति। यत्

खलु सत्स्वभावमनुभवसिद्धं तस्यानिर्वचनीयत्वमन्यतो बाधकादवसातव्यम्। बाधकञ्च घटादीनां स्वभावाद्विचलनं प्रमाणोपनीतं, यस्य तु न तदस्त्यात्मनो न तस्य तत् कल्पनं युक्तमबाधितानुभवसिद्धस्य सत्स्वभावस्यानिर्वचनीयत्वकल्पना प्रमाणाभावात्। तदिदमुक्तं "न सम्भावयितुं शक्यम्" इति। तदनेन प्रबन्धेन प्रत्यनुमानेनाकाशानुत्पत्त्यनुमानं दूषयित्वानैकान्तिकत्वेनापि दूषयति। "यत्तूक्तं समानजातीयम्" इति। नाप्यनेकमेवोपादानमुपादेयमारभते यत्र हि क्षीरं दधिभावेन परिणमते तत्र नावयवानामनेकेषामुपादानत्वमभ्युपगन्तव्यं किन्तु गात्रमेव क्षीरमेकमुपादेयदधिभावेन परिणमते। यथा निरवयवपरमाणुवादिनां क्षीरपरमाणुर्दधिपरमाणुभावेनेति। शेषमतिरोहितार्थम्॥

## एतेन मातरिश्वा व्याख्यातः॥ ८॥

यद्यभ्यासे भूयस्त्वमर्थस्य भवति नाल्पत्वं दृश्यत उपचरितत्वं हन्त भोः पवनस्य नित्यत्वप्रसङ्गः। वायुश्चान्तरिक्षमेतदमृतमिति द्वयोरमृतत्वमुक्त्वा पुनः पवनस्य विशेषणाच्च। "सैषाऽनस्तमिता देवता यद्वायुः" इति। तस्मादभ्यासापेक्षिकं वायोरमृतत्वमपि तु चौत्पत्तिकमेवेति प्राप्ते, तदिदमुक्तं भाष्यकृता। "अस्तमयप्रतिषेधादमृतत्वश्रवणाच्च" इति। चेन समुच्चयार्थेनाभ्यासो दर्शितः। एवं प्राप्ते, उच्यते। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्प्रतिज्ञावाक्यार्थस्य प्राधान्यात्तदुपपादनार्थत्वाच्च वाक्यान्तराणां तेषामपि चाद्वैतक्रमप्रतिपादकानां मातरिश्वोत्पत्तिप्रतिपादकानां बहुलमुपलब्धेर्मुख्यभूयस्त्वाभ्याममूषां श्रुतीनां बलीयस्त्वादेतदनुरोधेना-

सृतत्वानन्तमयप्रतिषेधावापेक्षिकत्वेन नेतव्याविति । भूयसीः श्रुतीरपेक्ष्य द्वे अपि श्रुती शब्दमात्रमुक्ते ।

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

ननु न चास्य कश्चिज्जनितेत्यात्मनः सतोऽकारणत्वश्रुतेः कथमुत्पत्त्याशङ्का, न च वचनमदृष्ट्वा पूर्वः पक्ष इति युक्तम्, अधीतवेदस्य ब्रह्मजिज्ञासाधिकारादादर्शनानुपपत्तेरत आह । "वियत्पवनयोः" इति । यथा हि वियत्पवनयोरमृतत्वानन्तमयत्वश्रुती श्रुत्यन्तरविरोधादापेक्षिकत्वेन नीते । एवमकारणत्वश्रुतिरात्मनोऽग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधात् प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या । न चात्मनः कारणवत्त्वेऽनवस्था लोहगन्धिनामिव हेत्वनादित्वात् कार्यकारणपरम्पराया इति भावः । "तथा विकारेभ्यः" इति प्रमाणान्तरविरोधो दर्शितः । एवं प्राप्ते, उच्यते । सदेकस्वभावस्यात्मनोऽसम्भवः । कुतः । "अनुपपत्तेः" । सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथयितव्यम् । उत्पत्तिमन्तो हि विकाराः सत्त्वेनानुभूता अपि कतिपयकालकलातिक्रमे विनश्यन्तो दृश्यन्त इत्यनिर्वचनीयास्त्रैकाल्यावच्छेदादिति । न चात्मा तादृशस्तस्य श्रुतेरनुभवाद्वा वर्त्तमानैकस्वभावत्वेन प्रसिद्धेस्तदिदमाह । "सन्मात्रं हि ब्रह्म" इति । एतदुक्तं भवति । यत्स्वभावाद्विचलति तदनिर्वचनीयं निर्वचनीयोपादानं युक्तं, न तु विपर्ययः । यथा रज्जूपादानः सर्पो न तु सर्पोपादाना रज्जुरिति । ययोस्तु स्वभावादप्रच्युतिस्तयोरनिर्वचनीययोर्नोपादेयोपादानभावः, यथा रज्जुशुक्तिकयोरिति । न च निरधिष्ठानो विभ्रम इत्याह । "नाप्यसतः" इति । न च निरधिष्ठानभ्रमपरम्परानादित्वात् ।

"भूतप्रकृतित्वमभ्युपगतेऽनवस्थापसङ्गात्" इति । पारमार्थिको हि कार्यकारणभावोऽनादितानवस्थया दुष्यति । समारोपस्तु विकारस्य न समारोपितोपादान इत्युपपादितं माध्यमिकमतनिषेधाधिकारे तदत्र न प्रसक्तव्यम् । तथाचाप्रदर्शितानविभ्रमसमर्थनाऽनादित्वेनोचितेत्यर्थः । अग्निविस्फुलिङ्गश्रुतिरौपाधिकरूपापेक्षया नेतव्या । शेषमतिरोहितार्थम् । ये तु गुणादिकानामुत्पत्तिविषयमिदमधिकरणं वर्णयाञ्चक्रुस्तैः इतोऽनुपपत्तेरिति क्लेशेन व्याख्येयमविरोधसमर्थनप्रस्तावे चास्य सङ्गतिर्वक्तव्या । श्रद्धादिशब्दकानादीनामुत्पत्तिप्रतिपादकवाक्यस्यानवगमात् । तदास्तां तावत् ॥

## तेजोऽतस्तथा ह्याह ॥ १० ॥

यद्यपि वायोरग्निरित्यत्र पञ्चमी कारकविभक्तिरुपपदविभक्तेर्बलीयसीति नियमादानन्तर्यपरा युक्ता, तथापि बहुश्रुतिविरोधेन दुर्बलाप्युपपदविभक्तिराश्रयिता । ततश्चानन्तर्यदर्शनपरं वायोरग्निरिति श्रुतिः । न च साक्षाद्ब्रह्मजत्वसम्भवे तदन्यजत्वेन तज्जत्वं परम्परयाश्रयितुं युक्तम् । वाजपेयस्य यूपवदिति प्राप्तम् । एवं प्राप्त उच्यते । युक्तं पशुयागवाजपेययोरङ्गाङ्गिनोर्नानात्वान्न साक्षाद्वाजपेयसम्बन्धे क्लेशेन परम्पराश्रयणम् । इह तु ,वायोरग्निविकारस्यापि ब्रह्मणो वस्तुतोऽनन्यत्वाद्वायूपादानत्वे साक्षादेव ब्रह्मोपादानत्वोपपत्तेः कारकविभक्तिबलीयस्त्वानुरोधेनोभयथोपपद्यमानाः श्रुतयः काम्यमौलिन्यायेन नियम्यन्त इति युक्तमिति राद्धान्तः । "पारम्पर्यजत्वेऽपि" इति । भेदकल्पनाभिप्रायं यतः पारमार्थिकमभेदमाह । "वायुभावापन्नं ब्रह्म" इति । "यथा तस्याः शृतम्" इति तु दृष्टान्तः परम्परामात्रसाम्येन न तु सर्वथा साम्येनेति सर्वमवदातम् ॥

## आपः ॥ ११ ॥

निगदव्याख्यातेन भाष्येण व्याख्यातम्॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

अन्नशब्दोऽयं व्युत्पत्त्या च प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते। श्रुतिश्च प्रकरणाद्बलीयसी, सा च वाक्यशेषेणोपोद्बलिता यत्र क्वचन वर्षतीत्यनेन, तस्मादभ्यवहार्यं व्रीहियवाद्येवान्नाद्यं जायत इति विवक्षितम्। कार्ष्ण्यमपि हि सम्भवति कस्याश्चिदवनीयस्य, नहि पृथिव्यपि कृष्णा, लोहितादिरूपाया अपि दर्शनात्। ततश्च श्रुत्यन्तरेणाद्भ्यः पृथिवी, पृथिव्या ओषधय इत्यादिना विरोध इति पूर्वः पक्षः। श्रुत्योर्विरोधे वस्तुनि विकल्पानुपपत्तेरन्यतरानुगुणतयान्यतरा नेतव्या। तत्र किमद्भ्यः पृथिवीति पृथिवीशब्दोऽन्नपरतया नीयतामुतान्नमसृजतेत्यन्नशब्दः पृथिवीपरतयेति विषये महाभूताधिकारानुरोधात् 'पार्थिवकृष्णरूपानुरोधाच्च तदपां शर आसीत्' इति च पुनः श्रुत्यनुरोधाच्च वाक्यशेषस्य चान्यथाप्युपपत्तेरन्नशब्दोऽन्नकारणे पृथिव्यामिति राद्धान्तः॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

सृष्टिक्रमे भूतानामविरोध उक्तः इदानीमाकाशादिभूताधिष्ठात्र्यो देवताः किं स्वतन्त्राः पूर्वोत्तरभूतसर्गे प्रवर्तन्त उत परमेश्वराधिष्ठिताः परतन्त्रा इति। तत्राकाशाद्वायुर्वायोरग्निरिति स्ववाक्ये निरपेक्षाणां श्रुतेः स्वयं चेतनानां च चेतनान्तरापेक्षायां प्रमाणाभावात्, प्रस्तावस्य च लिङ्गस्य च पारम्पर्येणापि मूलकारणस्य ब्रह्मण उपपत्तेः, स्वतन्त्राणामेवाकाशादीनां वाय्वादिकारणत्वमिति जगतो ब्रह्मयोनित्व-

व्याघात इति प्राप्तम्। एवं प्राप्तेऽभिधीयते। आकाशाद्वायुरित्यादय आकाशादीनां कार्याणामुपादानभावमाचक्षते, न पुनः स्वातन्त्र्येणाधिष्ठातृत्वम्। न च चेतनानां स्वकार्य्ये स्वातन्त्र्यमित्येतदप्यैकान्तिकं, परतन्त्राणामपि तेषां बहुलमुपलब्धेः भृत्यान्तेवास्यादिवत्। तस्माल्लिङ्गप्रस्तावसामर्थ्यात् स ईश्वर एव तेन तेनाकाशादिभावेनोपादानभावेनावतिष्ठमानः स्वयमधिष्ठाय निमित्तकारणभूतस्तं तं विकारं वाय्वादिकं सृजतीति युक्तम्। इतरथा लिङ्गप्रस्तावौ बाधितौ स्यातामिति। "परमेश्वरावेशवशात्" इति। परमेश्वर एवान्तर्यामिभावेनाविष्ट ईक्षिता, तस्मात्सर्वस्य कार्य्यजातस्य साक्षात्परमेश्वर एवाधिष्ठाता निमित्तकारणं न त्वाकाशादिभावमापन्नः। आकाशादिभावमापन्नस्तूपादानमिति सिद्धम्॥

## विपर्य्ययेण तु क्रमोऽत उपपद्यते च॥ १५॥

उत्पत्तौ महाभूतानां क्रमः श्रुतो नाप्ययेऽप्ययमात्रस्य श्रुतत्वात्। तत्र नियमे सम्भवति नानियमो व्यवस्थारहितो हि सः। न च व्यवस्थायां सत्यामव्यवस्था युज्यते। तत्र क्रमभेदापेक्षायां किं दृष्टोऽप्ययक्रमो घटादीनां महाभूतेऽप्ययक्रमनियामकोऽस्त्वाहो, श्रौत उत्पत्तिक्रम इति विषये श्रौतस्य श्रौतान्तरमभ्यर्हितं समानजातीयतया तस्यैव बुद्धिसान्निध्यात्। न दृष्टं, विरुद्धजातीयत्वात्। तस्माच्छ्रौतेनैवोत्पत्तिक्रमेणाप्ययक्रमो नियम्यत इति प्राप्ते, उच्यते। अप्ययस्य क्रमापेक्षायां सत्युत्पत्तिक्रमो नियामको भवेत्, न त्वस्याप्ययस्य क्रमापेक्षा, दृष्टानुमानोपनीतेन क्रमभेदेन श्रुत्यनुसारिणोऽप्ययक्रमस्य बाध्यमानत्वात्। तथा हि

सत्युपादानोपरमेऽप्युपादेयमस्तीति व्याप्तं चैतदस्ति। तस्मात् तदिदं दृष्टक्रमावरोधादाकाङ्क्षैव नास्ति, क्रमान्तरं प्रत्ययोग्यत्वात् तस्य तदिदमुक्तं सूत्रकृता 'उपपद्यते च' इति। भाष्यकारोऽप्याह। "न चाभावयोग्यत्वादप्यर्थेनाकाङ्क्ष्यते" इति। तस्मादुत्पत्तिक्रमाद्विपरीतः क्रम इत्यं तन्न्यायमूला च स्मृतिरुक्ता ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

तदेवं भावनोपयोगिनो भूतानामुत्पत्तिप्रलयौ विचार्य बुद्धीन्द्रियमनसां क्रमं विचारयति। अत्र च विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्देनेन्द्रियाणि च बुद्धिं च ब्रूते। तत्रैतेषां क्रमापेक्षायामात्मनश्च भूतानि चान्तरा समाम्नानात्तेनैव पाठेन क्रमो नियम्यते। तस्मात् पूर्वोत्पत्तिक्रमभङ्गप्रसङ्गः। यत आत्मनः करणानि करणेभ्यश्च भूतानीति प्रतीयते, तस्मादात्मन आकाश इति भज्यते। अन्नमयमिति च मयडानन्दमय इतिवत् न विकारार्थ इति प्राप्तेऽभिधीयते। विभक्तत्वात्तावदन्नप्रभृतीनां कारणापेक्षायामन्नमयं मन इत्यादिलिङ्गश्रवणादपेक्षितार्थकथनाय विकारार्थत्वमेव मयटो युक्तम्, इतरथा त्वनपेक्षितमुक्तं भवेत्। न च तदपि घटते। न ह्यन्नमयो यज्ञ इतिवदन्नप्राचुर्यं मनसः सम्भवति। एवं चक्षुरादिविकारा मनआदयो भूतानां परस्तादुत्पद्यन्त इति युक्तम्। प्रौढवादितयाऽभ्युपेत्याह। "अथ त्वभौतिकानि" इति। भवत्वात्मन एव करणानामुत्पत्तिः, न त्वेतावता भूतैरात्मनो नोत्पत्तव्यम्। तथा च नोक्तक्रमभङ्गप्रसङ्गः। विशिष्यते भिद्यते भज्यत इति यावत् ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

देवदत्तादिनामधेयं तावज्जीवात्मनो न शरीरस्य तस्मै शरीराय श्राद्धादिकरणानुपपत्तेः। तन्मृतो देवदत्तो जातो देवदत्त इति व्यपदेशस्य मुख्यत्वं मन्वानस्य पूर्वः पक्षः, मुख्यत्वे शास्त्राणामामुष्मिकस्वर्गादिफलसम्बन्धानुपपत्तेः शास्त्रविरोधात् लौकिकव्यपदेशो भाक्तो व्याख्येयः। भक्तिश्च शरीरोत्पादविनाशौ तत्सम्प्रयोग इति जातकर्मादि च गर्भबीजसमुद्भवजीवपापप्रशमनार्थं, न तु जीवजन्मपापप्रशमनार्थम्। अतएव स्मरन्ति।

एवमेनः शमं याति बीजगर्भसमुद्भवमिति।

तस्माच्च शरीरोत्पत्तिविनाशाभ्यां जीवजन्मविनाशाविति सिद्धम्। एतच्च लौकिकव्यपदेशस्य भ्रान्तिमूलत्वमुपेत्याधिकरणम्। उक्तं त्वध्यासभाष्य एव भ्रान्तिमूलत्वम्। मा भूतामस्य शरीरोदयव्ययाभ्यां स्थूलावुत्पत्तिविनाशौ। आकाशादिवत्तु महासर्गादौ तदन्ते चोत्पत्तिविनाशौ जीवस्य भविष्यत इति शङ्कापनयनायेदमारभ्यते।

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

विचारमूलसंशयस्य बीजमाह। "श्रुतिविप्रतिपत्तेः" इति। तामेव दर्शयति। "कासुचिद्धि श्रुतिषु" इति। पूर्वपक्षं गृह्णाति। "तत्र प्राप्तम्" इति। परमात्मनस्तावद्विरुद्धधर्मसंसर्गादपहतानपहत-पाप्मत्वादि-लक्षणाज्जीवानामन्यत्वम्। ते चेद्विकारास्ततस्तस्मादन्तरत्वे बहुतराद्वैतश्रुतिविरोधः। ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधश्च। तस्माच्छ्रुतिभिरनुज्ञायते विकारत्वं प्रमाणान्तरं चार्थात्, "विभक्तत्वादा-

काशादिवत्" इति। यथा 'अग्नेः क्षुद्रा विस्फुलिङ्गाः' इति च श्रुतिः साक्षादेव ब्रह्मविकारत्वं जीवानां दर्शयति। यथा सुदीप्तात् पावकादिति च ब्रह्मणो जीवानामुत्पत्तिञ्च तत्राप्ययञ्च साक्षाद्दर्शयति। नन्वक्षराद्भावानामुत्पत्तिप्रलयाववगम्येते न जीवानामित्यत आह। "जीवात्मनाम्" इति। स्यादेतत्। सृष्टिश्रुतिष्वाकाशाद्युत्पत्तिरिव कस्माज्जीवोत्पत्तिर्नाम्नायते। तस्मादाम्नानयोग्यस्यानाम्नानात् तस्योत्पत्त्यभावं प्रतीम इत्यत आह। "न च क्वचिदश्रवणम्" इति। एवं हि कस्याञ्चिच्छाखायामाम्नातस्य कतिपयाङ्गसहितस्य कर्मणः शाखान्तरीयाङ्गोपसंहारो न भवेत्। तस्माद्बहुतरश्रुतिविरोधादनुप्रवेशश्रुतिर्विकारभावापत्त्या व्याख्येया। तस्मादाकाशवज्जीवात्मान उत्पद्यन्त इति प्राप्त उच्यते। भवेदेवं यदि जीवा ब्रह्मणो भिद्येरन्, न त्वेतदस्ति, तत् सृष्ट्वा तदेवानुप्राविशदिति जीवेनात्मनेत्यविभागश्रुतेरेकत्वाच्च भेदस्य भेदकस्याकाशस्याकाशवदविकृतधर्मसमग्रस्योपपत्तेः। उपाधीनां च मनोमय इत्यादीनां श्रुतेर्भूयसीनां च नित्यत्वाजत्वादिगोचराणां श्रुतीनां दर्शनादुपाधिप्रविलयेनाप्यनन्यत्वं ति च प्रश्नोत्तराभ्यामनेकधोपपादनाच्च युक्त्या "अविभागस्य चैको देवः सर्वभूतेषु गूढः" इति श्रुत्यैवात्मत्वाभिव्यक्त्या जीवात्मानो न विकारा न चाद्वैतप्रतिज्ञाविरोध इति सिद्धम्। मैत्रेयीब्राह्मणं चाधस्ताद्व्याख्यातमिति नेह व्याख्यानम्॥

## ज्ञोऽत एव ॥ १८ ॥

कर्मणा हि ज्ञानात्मनो व्याप्तस्तदभावे न भवति धूम इव धूमध्वजाभावे, सुषुप्त्याद्यवस्थासु च ज्ञेयस्याभावात्तद्व्याप्यस्य ज्ञानस्याभावः। तथा च नात्मस्वभावचैतन्यं तद-

सुषुप्तावपि चैतन्यस्य व्यावृत्तेः। तस्मादिन्द्रियादिभावाभावानुविधानाद् ज्ञानभावाभावयोरिन्द्रियादिसन्निकर्षाधीनमागन्तुकमस्य चैतन्यं धर्मो न स्वाभाविकः। अत एवेन्द्रियादीनामर्थवत्त्वमितरथा वैयर्थ्यमिन्द्रियाणां भवेत्। नित्यचैतन्यश्रुतयश्च शक्त्यभिप्रायेण व्याख्येयाः। अस्ति हि ज्ञानोत्पादनशक्तिर्निजा जीवानां, न तु व्योम्न इवेन्द्रियादिसन्निकर्षेऽप्येषां ज्ञानं न भवतीति। तस्माज्जडा एव जीवा इति प्राप्ते, अभिधीयते। यदागन्तुकज्ञानं जडस्वभावं तत्कदाचित् प्रमाणं कदाचित् सन्दिग्धं कदाचिद्विपर्यस्तं, यथा घटादि, न चैवमात्मा। तथाह्यनुमिमानोऽप्यपरोक्षः स्मरन्नप्यनुभविता सन्दिहानोऽप्यसन्दिग्धो विपर्यस्यन्नप्यविपरीतः सर्वस्यात्मा तथाच तत्स्वभावः। न च तत्स्वभावस्य चैतन्यस्याभावः तस्य नित्यत्वात्। तस्माद् वृत्तयः क्रियारूपाः सकर्मिकाः कर्माभावे सुषुप्त्यादौ निवर्त्तन्ते। न चैतन्यमात्मस्वभाव इति सिद्धम्। तथाच नित्यचैतन्यवादिन्यः श्रुतयो न कथञ्चित् क्लेशेन व्याख्यातव्या भवन्ति। गन्धादिविषयवृत्त्युपजने चेन्द्रियाणामर्थवत्त्वमिति सर्वमवदातम्॥

## उत्क्रान्तिगत्यागतीनाम्॥ १९॥

यद्यप्यविकृतस्यैव परमात्मनो जीवभावस्तथा चानणुपरिमाणत्वं, तथाप्युत्क्रान्तिगत्यागतीनां श्रुतेः साक्षादणुपरिमाणश्रवणस्य चाविरोधायेदमधिकरणमित्याक्षेपसमाधानाभ्यामाह। "ननु च" इति। पूर्वपक्षं गृह्णाति। "तत्र प्राप्तं तावत्" इति। विभागसंयोगोत्पादौ हि उत्क्रान्त्यादीनां फलं, न च सर्वगतस्य तौ स्तः। सर्वत्र नित्यप्राप्तस्य वा सर्वात्मकस्य वा तदसम्भवादिति।

## स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रमणं हि मरणे निरूढम्। तच्चाचलतोऽपि तत्र सतो देहस्वाम्यनिवृत्त्याप्युपपद्यते न तु गत्यागती। तयोश्चलनं निरूढयोः कर्तृस्थभावयोर्व्यापिन्यसम्भवादिति मध्यमं परिमाणं महत्त्वं शरीरस्यैव, तच्चार्हतपरीक्षायां प्रत्युक्तम्। गत्यागती च परममहति न सम्भवतोऽतः पारिशेष्यादणुत्वसिद्धिः। गत्यागतिभ्यां च प्रादेशिकत्वसिद्धौ मरणमपि देहादपसर्पणमेव जीवस्य न तु तत्र सतः स्वाम्यनिवृत्तिमात्रमिति सिद्धमित्याह। "स्वात्मना च गत्यागत्योः" इति। इतश्च देहादपसर्पणमेव जीवस्य मरणमित्याह। "देहप्रदेशानाम्" इति। तस्माद्गत्यागत्यपेक्षोत्क्रान्तिरपि सापादानाणुत्वसाधनमित्यर्थः। न केवलमपादानश्रुतिस्तच्छरीरप्रदेशगमनश्रुत्यत्वश्रुते-रप्येवमित्याह। "स एतास्तेजोमात्राः" इति॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

यत उत्क्रान्त्यादिश्रुतिभिर्जीवानामणुत्वं प्रसाधितं ततो व्यापकात्परमात्मनस्तेषां तद्विकारतया भेदः। तथा च महत्त्वाम्नायादिश्रुतयः परमात्मविषया न जीवविषया इत्यविरोध इत्यर्थः। यदि जीवा अणवस्ततो योऽयं विज्ञानमयः प्राणेष्विति कथं शारीरो महत्त्वसम्बन्धित्वेन प्रतिनिर्दिश्यते इति चोदयति। "ननु" इति। परिहरति। "शास्त्रदृष्ट्या" पारमार्थिकदृष्ट्या निर्देशो वामदेववत्। यथा हि गर्भस्थ एव वामदेवो जीवः परमार्थदृष्ट्यात्मनो ब्रह्मत्वं प्रतिपेदे। एवं विकाराणां प्रकृतेर्वास्तवादभेदात्तत्परिमाणत्वव्यपदेश इत्यर्थः।

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

स्वशब्दं विभजते। "साक्षादेव" इति। उन्मानं विभजते।

"तथोन्मानमपि" इति। उद्धृत्य मानमुन्मानं, वालाग्रादुद्धृतः शततमो भागस्तस्मादपि शततमादुद्धृतः शततमो भाग इति तदिदमुन्मानम्। वालाग्रादुद्धृतं मानमाराग्रमात्रमिति सूत्रान्तरमवतारयितुं चोदयति। "नन्वणुत्वे सति" इति। अणुरात्मा न शरीरव्यापीति न सर्वाङ्गीणशैत्योपलब्धिः स्यादित्यर्थः॥

## अविरोधश्चन्दनवत्॥ २३॥

त्वक्संयुक्तो हि जीवस्त्वक् च सकलशरीरव्यापिनीति त्वग्व्याप्त्यात्मसम्बन्धः सकलशरीरोपलब्धौ समर्थ इत्यर्थः॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि॥ २४॥

चन्दनबिन्दोः प्रत्यक्षतोऽल्पीयस्त्वं बुद्ध्वा युक्ता कल्पना भवति, यस्य तु सन्दिग्धमणुत्वं सर्वाङ्गीणं च कार्यमुपलभ्यते तस्य व्यापित्वमौत्सर्गिकमपहाय नेयं कल्पनावकाशं लभत इति शङ्कार्थः। न च हरिचन्दनबिन्दुदृष्टान्तमात्रादणुत्वानुमानं जीवस्य, प्रतिदृष्टान्तसम्भवेनानैकान्तिकत्वादित्याह। "न चात्रानुमानम्" इति। शङ्कामिमामपाकरोति। "अत्रोच्यते" इति। यद्यपि पूर्वोक्ताभिः श्रुतिभिरणुत्वं सिद्धमात्मनस्तथापि वैभवाच्छ्रुत्यन्तरमुपन्यस्तम्॥

## गुणाद्वा लोकवत्॥ २५॥

ये तु सावयवत्वाच्चन्दनबिन्दोरणुसञ्चारेण देहव्याप्तिरुपपद्यते न त्वात्मनोऽनवयवस्याणुसञ्चारः सम्भवी, तस्माद्वैषम्यमिति मन्यन्ते तान् प्रतीदमुच्यते, "गुणाद्वा लोकवत्" इति। तद्विभजते। "चैतन्य" इति। यद्यप्यणुर्जीवस्तथापि तद्गुण-

चैतन्यं सकलदेहव्यापि। यथा प्रदीपस्याल्पत्वेऽपि तद्गुणः प्रभा सकलमन्दिरोदरव्यापिनीति। एतदपि शङ्काद्वारेण दूषयित्वा दृष्टान्तान्तरमाह॥

## व्यतिरेको गन्धवत् ॥ २६ ॥

"प्रतीयमाणमपि तत्" इति। अवयवानां सूक्ष्मतयाऽनुपलभ्यमानत्वमिति। शङ्कते। "स्यादेतत्" इति। विश्लिष्टानामल्पत्वादिल्युपलक्षणं द्रव्यान्तरपरमाणूनामनुप्रवेशादिष्वपि दृष्टम्। विश्लेषानुप्रवेशाभ्यां च सत्यपि विश्लेषः सूक्ष्मत्वान्नोपलक्ष्यते इति। निराकरोति। "न" इति। "अतीन्द्रियत्वात्" इति। परमाणूनां परमसूक्ष्मत्वात्तद्गतरूपादिवद्गन्धोऽपि नोपलभ्येतोपलभ्यमानो वा सूक्ष्म उपलभ्येत न स्थूल इत्यर्थः। शेषमतिरोहितार्थम्॥

## पृथगुपदेशात् ॥ २८ ॥

निगदव्याख्यातमस्य भाष्यम्॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

"कण्टकतोदनेऽपि" इति। सकृदल्पयोः संयोगोऽल्पमवक्राशं न सकलान्, न जातु घटकरकादिसंयोगा नभसो नभो व्याप्नुवन्त्यपि त्वल्पानेव घटकरकादीन् इतरथा यत्र नभस्तत्र सर्वत्र घटकरकाद्युपलब्धि इति तेऽपि नभःपरिमाणाः प्रसज्येरन्निति। न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते। यद्यप्यन्तःकरणमणु तथापि तस्य त्वचा सम्बद्धत्वात्त्वचश्च समस्तशरीरव्यापित्वादेकदेशेऽप्यधिष्ठिता त्वगधिष्ठितैवेति शरीरव्यापी जीवः शक्नोति सर्वाङ्गीणं शैत्यमनुभवितुं त्वगिन्द्रियेण गङ्गायाम्, अणुस्तु जीवो यत्रास्ति तस्मिन्नेव शरीरप्रदेशे

तदनुभवेन सर्वाङ्गीणम्, तस्य सर्वाङ्गीणत्वात्। कण्टकतोदनस्य तु प्रादेशिकतया न सर्वाङ्गीणोपलब्धिरिति वैषम्यम्। "गुणत्वमेव हि" इति। इदमेव हि गुणानां गुणत्वं यद्द्रव्यदेशत्वमत एव हि हिमस्य शिशिरावयवाप्यद्रव्यगतेऽतिमान्द्ये शीतस्पर्शेऽनुभूयमानेऽप्यनुद्भूतं रूपं नोपलभ्यते यथा, तथा मृगमदादीनां गन्धवाहविप्रकीर्णसूक्ष्मावयवानामतिमान्द्ये गन्धेऽनुभूयमाने रूपस्पर्शौ नानुभूयेते, तत्कस्य हेतोरनुद्भूतत्वात्तयोर्गन्धस्य चोद्भूतत्वादिति। न च द्रव्यस्य प्रलयप्रसङ्गः द्रव्यान्तरावयवपूरणात्। अत एव कालपरिणामवशादस्य हतगन्धतोपलभ्यते। अपि च चैतन्यं नाम न गुणो जीवस्य गुणिनः, किन्तु स्वभावः। न च स्वभावस्य व्यापित्वे भावस्याव्यापित्वं तत्स्वरूपच्युतेरित्याह। "यदि च चैतन्यम्" इति। तदेवं श्रुतिस्मृतीतिहासपुराणसिद्धे जीवस्याविकारितया परमात्मत्वे तथा श्रुत्यादितः परममहत्त्वे च या नामाणुत्वश्रुतयस्तास्तदनुरोधेन बुद्धिगुणसारतया व्याख्येया इत्याह। "तद्गुणसारत्वात्" इति। तद्व्याचष्टे। "तस्या बुद्धेः" इति। आत्मनः स्वसम्बन्धिन्या बुद्धरूपव्यापितत्वात् तदा परामर्शः। नहि शुद्धबुद्धमुक्तस्वभावस्यात्मनस्तत्त्वं संसारिभिरनुभूयते। अपि तु योऽयं मिथ्याज्ञानदर्शनाद्युपपन्नः स एव प्रत्यात्ममनुभवगोचरः। न च ब्रह्मस्वभावस्य जीवात्मनः कूटस्थनित्यस्य सत इत्याह चानुपपन्नश्च इति। बुद्धिगुणानां तेषां तदभेदाध्यासेन तद्गतत्वाध्यास उदशरावाध्यस्तस्येव चन्द्रमसो बिम्बस्य तोयकम्पे कम्पवत्त्वाध्यास इत्युपपादितमध्यासभाष्ये। तथा च बुद्ध्याद्युपाधिकृतमस्य जीवत्वमिति बुद्धेरन्तःकरणस्याणुतया सोऽप्यणुर्व्यपदेशभाग्भवति नभ इव करकोपहितं करकपरिमाणम्। तथा चोत्क्रान्त्यादीनामुपपत्तिरिति। निगदव्याख्यातमितरत्।

प्रायणेऽसत्त्वमसंसारित्वं वा ततश्च कृतविप्रणाशाकृताभ्यागमप्रसङ्गः ॥

**यावदात्मभावित्वात्तु न दोषस्तद्दर्शनात् ॥ ३० ॥**

यावत्संसार्य्यात्मभावित्वादित्यर्थः । समानः सन्निति बुद्ध्या समानः तद्गुणसारत्वादिति । "अपि च मिथ्या ज्ञान" इति । न केवलं यावत्संसार्य्यात्मभावित्वमागमेन उपपादितमेवेत्यर्थः । "आदित्यवर्णम्" इति । प्रकाशरूपमित्यर्थः । "तमसः" इति । अविद्याया इत्यर्थः । तमेव विदित्वा साक्षात्कृत्य मृत्युमविद्यामत्येतीति योजना । अनुशयबीजं पूर्वपक्षी प्रकटयति । "ननु सुषुप्तप्रलययोः" इति । "सता" परमात्मना । अनुशयबीजपरिहारः । स्पष्टोऽर्थः ॥

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥**

निगदव्याख्यानमस्य भाष्यम् ॥

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३२ ॥**

स्यादेतत् । अन्तःकरणेऽपि सति तस्य नित्यसन्निधानात् कस्मान्नित्योपलब्ध्यनुपलब्धी न प्रसज्येते । अथादृष्टविपाककादाचित्कत्वात् सामर्थ्यप्रतिबन्धाप्रतिबन्धाभ्यामन्तःकरणस्य नायं प्रसङ्गः । तावसत्येवान्तःकरणे आत्मनो वेन्द्रियाणां वास्तां, तत्किमन्तर्गड़ुनान्तःकरणेनेति चोदयति । "अथवान्यतरस्यात्मनः" इति । अथवेति सिद्धान्तं निवर्त्तयति । सिद्धान्तो ब्रूते । "न चात्मनः" इति । अवधानं खल्वनुबुभूषा शुश्रूषा वा । न चैते आत्मनो धर्मौ, तस्याविक्रियत्वात् । न चेन्द्रियाणामिकैकेन्द्रियव्यतिरेकेऽप्यन्धादीनां दर्शनात् । न च ते

भ्यन्तरत्वेनानुभूयमाने बाह्ये सम्भवतः। तस्मादस्ति तदाभ्यन्तरं किमपि यस्य चैते तदन्तःकरणम्। तदिदमुक्तं "यस्याभावन" इति। अत्रैवार्थे श्रुतिं दर्शयति। "तथा च" इति।

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

ननु तद्गुणसारत्वादित्यनेनैव जीवस्य कर्तृत्वं भोक्तृत्वं च लब्धमेवेति तदुपपादनमनर्थकमित्यत आह। "तद्गुणसारत्वाधिकारेण" इति। तस्यैव प्रपञ्चो ये पश्यन्त्यात्मा भोक्तैव न कर्तेति तन्निराकरणार्थः। शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादित्याह स्म भगवान् जैमिनिः। प्रयोक्त्यनुष्ठातरि कर्तरीति यावत्। शास्त्रफलं स्वर्गादि, कुतः, प्रयोक्तृफलसाधनतालक्षणत्वात् शास्त्रस्य विधेः, कर्तव्यतोपायता हि विधिः, बुद्धिरेव कर्त्री भोक्ता चात्मा ततो यस्यापेक्षितोपायो भोक्तुर्न तस्य कर्तृत्वं यस्य कर्तृत्वं न च तस्यापेक्षितोपाय इति किं केन सङ्गतमिति शास्त्रस्यानर्थकत्वमविद्यमानाभिधेयत्वं तथा चाप्रयोजनत्वं स्यात्। यथा च तद्गुणसारतयास्य वस्तु सदपि भोक्तृत्वं सांव्यवहारिकमेव कर्तृत्वमपि सांव्यवहारिकं न तु भाविकम्। अविद्यावद्विषयत्वञ्च शास्त्रस्योपपादितमध्यासभाष्य इति सर्वमवदातम् ॥

## विहारोपदेशात् ॥ ३४ ॥

विहारः सञ्चारः, क्रिया, तत्र स्वातन्त्र्यं नाकर्तुः सम्भवति, तस्मादपि कर्त्ता जीवः ॥

## उपादानात् ॥ ३५ ॥

तदेतेषां प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं ग्रहणशक्तिमादायोपादायेत्युपादाने स्वातन्त्र्यं नाकर्तुः सम्भवति ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः ॥३६॥

अभ्युच्चयमात्रमेतत्र सम्यगुपपत्तिः। विज्ञानं कर्तृ यत्र तत्रोक्तं सर्वत्र हि बुद्धिः करणरूपा करणत्वेनैव व्यपदिश्यते न कर्त्तृत्वेन इह तु कर्त्तृत्वेन तस्या व्यपदेशे विपर्य्ययः स्यात्तस्मादात्मैव विज्ञानमिति व्यपदिष्टः। तेन कर्त्तेति। सूत्रान्तरमवतारयितुं चोदयति। अत्राह। "यदि" इति। प्रज्ञावान् स्वतन्त्र इष्टमेवात्मनः सम्पादयेत्।।नष्टमानिष्टमप्यानिरप्यस्योपलभ्यते, तस्माच्च स्वतन्त्रस्तथा च न कर्त्ता तल्लक्षणत्वात्तत्प्रत्ययः। अस्योत्तरम् ॥

## उपलब्धिवदनियमः ॥ ३७ ॥

करणादीनि कारकान्तराणि कर्त्ता प्रयुङ्क्ते न त्वयं कारकान्तरैः प्रयुज्यत इत्येतावन्मात्रमस्य स्वातन्त्र्यं न तु कार्य्यक्रियायां न कारकान्तराण्यपेक्षत इति। ईदृशं हि स्वातन्त्र्यं नेश्वरस्याप्यत्रभवतोऽस्तीत्यसमर्थः कथं कर्त्ता स्यात्। तथा चायमदृष्टपरिपाकगणादिष्टमभिप्रेप्सुस्तत्साधनविभ्रमणादनिष्टोपायं व्यापारयन्ननिष्टं प्राप्नुयादित्यनियमः कर्त्तृत्वचेति न विरोधः विषयप्रकल्पनमात्रप्रयोजनत्वादिति। नित्यचैतन्यस्वभावस्य खल्वात्मन इन्द्रियादीनि करणानि स्वविषयमुपनयन्ति, तेन विषयावच्छिन्नमेव चैतन्यं वृत्तिरिति विज्ञानमिति चाख्यायते तत्र चास्यास्ति स्वातन्त्र्यमित्यर्थः॥

## शक्तिविपर्य्ययात् ॥ ३८ ॥

पूर्वं कारकविभक्तिविपर्य्यय उक्तः सम्प्रति कारकशक्तिविपर्य्यय इत्यपुनरुक्तम्। अविपर्य्ययाय तु करणान्तरकल्पनायां नास्ति विसंवाद इति॥

## समाध्यभावाच्च ॥ ३९ ॥

समाधिरिति संयममुपलक्षयति। धारणाध्यानसमाधयो हि संयमपदवेदनीयाः। यथाहुः। त्रयमेकत्र संयम इति। तत्र श्रोतव्यो मन्तव्य इति धारणोपदेशः। निदिध्यासितव्य इति ध्यानोपदेशः। द्रष्टव्य इति समाध्युपदेशः। यथाहुः, तदेव ध्यानमर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति सोऽयमिह कर्तात्मा समाधावुपदिश्यमान आत्मनः कर्तृत्वमवेतीति सूत्रार्थः॥

## यथा च तक्षोभयथा ॥ ४० ॥

अवान्तरसङ्गतिमाह। "एवं तावत्" इति। विभजति। "तत् पुनः" इति। पूर्वपक्षं गृह्णाति। "तत्र" इति। शास्त्रार्थवत्त्वादयो हि हेतव आत्मनः कर्तृत्वमापादयन्ति। न च स्वाभाविके कर्तृत्वे सम्भवति असत्यपवादे तदौपाधिकं युक्तम्, अतिप्रसङ्गात्। न च मुक्त्यभावप्रसङ्गोऽस्यापवादकः, यथा ज्ञानस्वभावो ज्ञेयाभावेऽपि नाज्ञो भवत्येवं कर्तृस्वभावोऽपि क्रियावेशाभावेऽपि नाकर्ता। तस्मात् स्वाभाविकमेवास्य कर्तृत्वमिति प्राप्ते, अभिधीयते। नित्यशुद्धबुद्धमुक्तस्वभावं हि ब्रह्म भूयोभूयः श्रूयते तदस्य बद्धत्वमसत्यपि बाधके युक्तं वह्नेरिवासत्यपि दाह्ये दग्धृत्वं, तच्चौपनिषदस्य तस्यावगमात्। कर्तृत्वं त्वस्य क्रियावेशादवगन्तव्यम्। न च नित्योदासीनस्य कूटस्थस्य नित्यस्यासङ्गस्य तस्य सम्भवति, तस्य च कदाचिदपि असंसर्गे कथं तत्क्रियायोगो निर्विषयायाः शक्तेरसम्भवात्। तथा च यदि तन्निवृत्त्यर्थं तद्विषयः क्रियावेशोऽभ्युपेयते तथा सति तत्स्वभावस्य स्वभावोच्छेदाभावाद् भावनाशप्रसङ्गो न च मुक्तस्यास्ति क्रियायोग इति। क्रियाया

दुःखत्वात् । न विगलितसकलदुःखपरमानन्दावस्था मोक्षः स्यादित्याशयवानाह । "न स्वाभाविकं कर्त्तृत्वमात्मन" इति । अभिप्रायमबुद्धा चोदयति । "ननु स्थितायामपि" इति । परिहरति । "न निमित्तानामपि" इति । शक्त-शक्याश्रया शक्तिः स्वसत्तयाऽवश्यं शक्यमाक्षिपति । तथा च तयाऽऽक्षिप्तं शक्यं सदैव स्यादिति भावः । चोदयति । "ननु मोक्षसाधनविधानात्" इति । परिहरति । "न साध-नायत्तस्य" इति । अस्माकन्तु न मोक्षः साध्यः, अपितु ब्रह्म-स्वरूपं तच्च नित्यमिति । उक्तमभिप्रायमाविष्करोति । "अपि च नित्यशुद्ध" इति । चोदयति । "पर एव तर्हि संसारी" इति । अयमर्थः । परश्चेत्संसारी तस्याविद्याप्रविलये मुक्तौ सर्वं मुच्येताविशेषात् । ततश्च सर्वसंसारोच्छेदप्रसङ्गः । पर-स्मादन्यश्चेत्स बुद्ध्यादिसङ्घात एवेति तस्यैव तर्हि मुक्तिसंसारौ नात्मन इति । परिहरति । "नाविद्या प्रत्युपस्थापितत्वात्" इति । न परमात्मनो मुक्तिसंसारौ तस्य नित्यमुक्तत्वान्नापि बुद्ध्यादिसङ्घातस्य, तस्याचेतनत्वादपि त्वविद्योपस्थापितानां बुद्ध्यादिसङ्घातानां भेदात्तत्तद्बुद्ध्यादिसङ्घातभेदोपधान आत्मै-कोऽपि भिन्न इव विशुद्धोऽप्यविशुद्ध इव ततश्चैकबुद्ध्यादिसङ्घाता-पगमे तत्र मुक्त इवेतरत्र बद्ध इव यथा मणिकृपाणाद्युपधान-भेदादेकमेव मुखं नानेव दीर्घमिव वृत्तमिव श्याममिवावदात-मिवाऽन्यतमोपधानविगमे तत्र मुक्तमिवान्यत्रोपहितमिवेति नैकमुक्तौ सर्वमुक्तिप्रसङ्गः, तस्मान्न परमात्मनो मोक्षसंसारौ नापि बुद्ध्यादिसङ्घातस्य किन्तु बुद्ध्याद्युपहितस्यात्मस्वभावस्य जीवभावमापन्नस्येति परमार्थः । अत्रैवान्वयव्यतिरेकौ श्रुति-भिरादर्शयति । "तथा च" इति । इतरोपाधिकं यदुपाध्य-भिमर्शकृताभ्यामस्याभिमर्शाद्वौ दर्शयति श्रुतिरित्याह । "तथा

स्वप्नजागरितयोः" इति। एतमेवार्थं सूत्रं व्याचष्टे। "तदेतदाह" इति। सम्प्रसादः सुषुप्तिः। स्यादेतत्। तक्ष्णः वास्यादयः सन्ति तेनायं वास्यादीन् व्यापारयन् भवतु दुःखी, परमात्मा त्वनवयवः केन मनःप्रभृतीनि व्यापारयेदिति वैधर्म्यं तक्ष्णो दृष्टान्तेनेत्यत आह। "तक्षदृष्टान्तश्च" इति। यथा स्वशरीरेणोदासीनस्तक्षा सुखी वास्यादीनि तु करणानि व्यापारयन् दुःखी, तथा स्वात्मनोदासीनः सुखी मनःप्रभृतीनि तु करणानि व्यापारयन् दुःखीत्येतावताऽस्य साम्यं न तु सर्वथा। यथाऽऽत्मा च जीवोऽनवयवोऽन्तरानपेक्षः स्वशरीरं व्यापारयत्येवं मनःप्रभृतीनि तु करणान्तराणि व्यापारयतीति प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तिः। पूर्वपक्षहेतुमनुभाष्य दूषयति। "यत्तूक्तम्" इति। यत्परं हि शास्त्रं स एव शास्त्रार्थः। कर्त्रपेक्षितोपायभावनापरं तत् न कर्तृस्वरूपपरम्। तेन यथा लौकिकमेव कर्तारमपेक्ष्य स्वविषये प्रवर्त्तमानं न पुंसः स्वाभाविकं कर्तृत्वमवगमयितुमुत्सहते, तस्मात्तत्त्वमस्याद्युपदेशविरोधाद्व्याकृतं तद्दर्शितमेव। चोदयति। "ननु सन्ध्ये स्थाने" इति। औपाधिकं हि कर्तृत्वं नोपाध्यपगमेऽनुवर्तेतेति स्वाभाविकमेव युज्यत इत्यर्थः। अपि च यत्रापि करणमस्ति तत्रापि केवलस्यात्मनः कर्तृत्वश्रवणात् स्वाभाविकमेव युक्तमित्याह। "तथोपादानेऽपि" इति। तदेतत् परिहरति। "न तावदस्य" इति। उपाध्यपगमोऽसिद्धोऽन्तःकरणस्योपाधेः सन्ध्येऽप्यवस्थानादित्यर्थः। अपि च स्वप्ने यादृशं ज्ञानं तादृशो विहारोऽपीत्याह। "विहारोऽपि च तत्र" इति। "तथोपादानेऽपि" इति। यद्यपि कर्तृविभक्तिः केवले कर्तरि श्रूयते तथापि कर्मकरणोपधानकृतमस्य कर्तृत्वं न स्वस्य, नहि परशुसहायश्छेत्ता केवलश्छेत्ता

भवति । ननु यदि न केवलस्य कर्त्तृत्वमपि तु करणादिसहितस्यैव, तथा सति करणादिष्वपि कर्त्तृविभक्तिः स्यात् चैतदस्तीत्याह । "भवति च लोके" इति । करणादिष्वपि कर्त्तृविभक्तिः कदा चिदस्त्येव विवक्षावशादित्यर्थः । अपि चेयमुपादानश्रुतिः करणव्यापारोपरममात्रपरा न स्वातन्त्र्यपरा कर्त्तृविभक्तिस्तु भाक्ती कूलं पिपतिषतीतिवदबुद्धिपूर्वकस्य करणव्यापारोपरमस्य दृष्टत्वादित्याह । "अपि चास्मिन्नुपादान" इति । यस्त्वयं व्यपदेश इति यदुक्तमस्माभिरभ्युपगममात्रमेतदिति तदितः समुत्थितम् । "सर्वकारकाणामि" इति । छिनत्त्यसिः? तण्डुला ज्वलन्ति काष्ठानि बिभर्ति स्थालीति हि स्वव्यापारे सर्वेषां कर्त्तृत्वं, तत्किं बुद्ध्यादीनां कर्त्तृत्वमेव न करणत्वमित्यत आह । "उपलब्ध्यपेक्षं त्वेषां करणत्वम्" । नन्वेवं सति तस्यामेवात्मनः स्वाभाविकं कर्त्तृत्वमस्त्वित्यत आह । "न च तस्या" मुपलब्ध्यावप्यस्य स्वाभाविकं "कर्त्तृत्वमस्ति" कस्मात् "नित्योपलब्धिस्वरूपत्वात्" आत्मनो नहि नित्यं स्वभावं चास्ति भावस्य व्यापार इत्यर्थः । तदेव नास्त्युपलब्ध्यां स्वाभाविकं कर्त्तृत्वमस्तीत्युक्तम् । नापि बुद्ध्यादेरुपलब्धिकर्त्तृत्वमात्मन्यध्यस्तं यथा तद्गतमध्यवसायादिकर्त्तृत्वमित्याह । "अहङ्कारपूर्वकमपि कर्त्तृत्वं नोपलब्धुर्भवितुमर्हति" । कुतः । "अहङ्कारस्याप्युपलभ्यमानत्वात्" । नहि शरीरादि यस्यां क्रियायां गम्यं तस्यामेव गन्तृ भवति । एतदुक्तं भवति । यदि बुद्धिरुपलब्ध्री भवेत् ततस्तस्या उपलब्धृत्वमात्मन्यध्यस्येत । न चैतदस्ति, तस्या जडत्वेनोपलभ्यमानतयोपलब्धिकर्त्तृत्वानुपपत्तेः । यदा चोपलब्धो बुद्धेरकर्त्तृत्वं तदा यदुक्तं बुद्धेरुपलब्धृत्वे करणान्तरं कल्पनीयं तथा च नाममात्रे विसंवाद इति तन्न भवतीत्याह । "न चैवं

सति करणान्तरकल्पना" बुद्धेरुपलब्धृत्वाभावात्। तदिदमिदानीमकरणं बुद्धिरुपलब्ध्री चात्मा चानुपलब्धेत्युक्तं स्यात्। "बुद्धेः करणत्वाभ्युपगमात्"। अयमभिसन्धिः। चैतन्यमुपलब्धिरात्मस्वभावो नित्य इति न तदात्मनः कर्तृत्वम्, नापि बुद्धेः करणत्वं, किन्तु चैतन्यमेव विषयावच्छिन्नं वृत्तिरिति चोपलब्धिरिति चाख्यायते। तस्य तु तत्तद्विषयावच्छेदे बुद्धीन्द्रियादीनां करणत्वमात्मनश्च तदुपधानेनाहङ्कारपूर्वकं कर्तृत्वं युज्यत इति॥

## परात्तु तच्छ्रुतेः॥ ४१॥

यदेतज्जीवानामौपाधिकं कर्तृत्वं तत्स्वतन्त्राणामेव रागादिषु सत्सु नेश्वरमपरं प्रवर्तकं कल्पयितुमर्हति, अतिप्रसङ्गात्। न चेश्वरो हेयोपादेयविरहितो जीवान् साध्वसाधूनि कर्माणि प्रवर्तयितुमर्हति येन धर्माधर्मापेक्षया जगद्वैचित्र्यमुपपद्येत। स हि स्वतन्त्रः कारुणिको धर्म एव जन्तून् प्रवर्तयेन्नाधर्मे, ततश्च तत्प्रेरिता जन्तवः सर्वे धार्मिका एवेति सुखिन एव स्युर्न दुःखिनः। स्वतन्त्रास्तु रागादिप्रयुक्ताः प्रवर्तमाना धर्माधर्मप्रचयवन्तो वैचित्र्यमनुभवन्तीति युक्तम्। एवञ्च विधिनिषेधयोरर्थवत्त्वमितरथा तु सर्वथा जीवा अस्वतन्त्रा ईश्वरेणैव प्रवर्त्यन्त इति कृतं विधिनिषेधाभ्यां, नहि बलवदनिलसलिलौघनुद्यमानं प्रत्युपदेशोऽर्थवान्। तस्मादेष ह्येव साधु कर्म कारयतीत्यादयः श्रुतयः समस्तविधिनिषेधश्रुतिविरोधाल्लोकविरोधाच्चेश्वरस्य प्रशंसापरतया नेया इति प्राप्तेऽभिधीयते। एष ह्येव साधु कर्म कारयतीत्यादयस्तावच्छ्रुतयः सर्वव्यापारेषु जन्तूनामीश्वरतन्त्रतामाहुः। तदसति बाधके न प्रशंसापरतया व्याख्यातुमुचि-

तम्। न च श्रुतिसिद्धस्य कल्पनीयता, येन प्रवर्त्तकेषु रागादिषु सत्सु तत्कल्पना विरुध्येत। न चेश्वरतन्त्रत्वे धर्म एव जन्तूनां प्रवृत्तेः सुस्थितत्वमेव न वैचित्र्यमिति युक्तम्। यद्यप्ययमीश्वरो वीतरागस्तथापि पूर्वपूर्वजन्तुःकर्मापेक्षया जन्तून् धर्माधर्मयोः प्रवर्त्तयन् न द्वेषपक्षपाताभ्यां विषमो नापि निर्घृणः। न च कर्मप्रचयस्यादिरस्त्यनादित्वात्संसारस्य। न चेश्वरतन्त्रस्य कृतं विधिनिषेधाभ्यामिति साम्प्रतम्। नहीश्वरः प्रबलतरपवन इव जन्तून् प्रवर्त्तयत्यपि तु तत्स्वातन्त्र्यमनुकथ्यमाना रागाद्युपहारमुखेनैव चेष्टानिष्टप्राप्तिपरिहारार्थिनो विधिनिषेधावर्थवन्तौ भवतः। तदनेनाभिसन्धिनोक्तं "परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः" इति। तस्माद्विधिनिषेधशास्त्राविरोधात्कार्यस्य श्रुतिदर्शित्वात् 'एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतेः।

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा' ॥ इति।

स्मृतेश्चेश्वरतन्त्राणामेव जन्तूनां कर्तृत्वं, न तु स्वतन्त्राणामिति सिद्धम्। ईश्वर एव विधिनिषेधयोः स्थाने नियुज्यते यद्विधिनिषेधयोः फलं तदीश्वरेण तत्प्रतिपादितधर्माधर्मनिरपेक्षेण कृतमिति विधिनिषेधयोरानर्थक्यम्। न केवलमानर्थक्यं विपरीतं चापद्यत इत्याह। "तथा विहितकारिणाम्" इति। पूर्वोक्तश्च दोषः कृतनाशाकृताभ्यागमः प्रसज्येत। अतिरोहितार्थमन्यत्॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥**

अवान्तरसङ्गतिमाह। "जीवेश्वरयोः" इति। उपकार-

र्थोपकारकभावः प्रयोज्यप्रयोजकभावः। अत्रापाततो विनि-
गमनाहेतोरभावादनियमो नियम इत्यंशो नियमहेत्व-
भावदर्शनेन भेदपक्षमालम्ब्याह। "अथवा" इति। ईशितव्ये-
शितृभावश्चान्वेष्यान्वेष्टृभावश्च सृज्यस्रष्टृभावश्च नियम्यनियन्तृ-
भावश्चाधाराधेयभावश्च न जीवपरमात्मनोरभेदेऽवकल्पते। न
च 'ब्रह्मदाशा ब्रह्मकितवाः' इत्याद्याश्च श्रुतयो दाशा ब्रह्मकि-
तवा ब्रह्मेत्यादिप्रतिपादनपरा जीवानां ब्रह्मणो भेदेऽवक-
ल्पन्ते। न चैताभिर्भेदाभेदप्रतिपादनपराभिः श्रुतिभिः
साक्षादंशत्वप्रतिपादकाश्च मन्त्रवर्णादयो,ऽस्य विश्वा भूतानी-
त्यादिः, स्मृतेश्च ममैवांश इत्यादेर्जीवानामीश्वरांशत्वसिद्धिः
निरतिशयोपाधिसम्पदा च विभूतियोगेनेश्वरः स्वांशानामपि
निकृष्टोपाधीनामीष्ट इति युज्यते। नहि तादृगनवयवेश्वरस्य
जीवा भवितुमर्हन्त्यंशाः। अपि च जीवानां ब्रह्मांशत्वं
तद्गता वेदना ब्रह्मणो भवेत्। पादादिगता इव वेदना देव-
दत्तस्य। ततश्च ब्रह्मभूयंगतस्य समस्तजीवगतवेदनानुभव-
प्रसङ्ग इति वरं संसार एव मुक्तेस्तत्र हि स्वगतवेदनामात्रानु-
भवात् न भूरि दुःखमनुभवति। मुक्तस्तु सर्वजीववेदनाभा-
गिति प्रयत्नेन मुक्तिरनर्थबहुलतया परिहर्तव्या स्यादिति।
तथा भेदाभेदयोः परस्परविरोधिनोरेकत्रासम्भवान्नांशत्वं
जीवानाम्। न च ब्रह्मैव सदसन्तस्तु जीवा इति युक्तं सुखदुः-
खमुक्तिसंसारव्यवस्थाभावप्रसङ्गादनुष्ठापरिहाराभावप्रसङ्गाच्च।
तस्माज्जीवा एव परमार्थसन्तो न ब्रह्मैकमद्वयम्। अद्वैतश्रुत-
यस्तु जातिदेशकालाभेदनिमित्तोपचारादिति पार्श्वेऽभिधी-
यते। अनधिगतार्थावबोधनानि प्रमाणानि विशेषतः शब्दः।
तत्र भेदो लोकसिद्धत्वान्न शब्देन प्रतिपाद्यः। अभेदस्त्वनधि-
गतत्वादधिगतभेदानुवादेन प्रतिपादनमर्हति। येन च वाक्य-

मुपक्रम्यते मध्ये च परामृश्यते अन्ते चोपसंह्रियते तत्रैव तस्य तात्पर्यमुपनिषदश्चाद्वैतोपक्रमतत्परामर्शतदुपसंहारा अद्वैतपरा एव युज्यन्ते। न च यत्परास्तदौपचारिकं युक्तम्, अभ्यासे हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि प्रागेवोपचरितत्वमित्युक्तम्। तस्मादद्वैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीयाविद्योपधानभेदादेकस्येव बिम्बस्य दर्पणाद्युपाधिभेदात्प्रतिबिम्बभेदाः। एवं चानुज्ञापरिहारौ लौकिकवैदिकौ सुखदुःखमुक्तिसंसारव्यवस्था चोपपद्यते। न च मोक्षस्यानर्थबहुलता, यतः प्रतिबिम्बानामिव श्यामतावदाततादिर्जीवानामिव नानावेदनाभिसम्बन्धो ब्रह्मणस्तु बिम्बस्येव न तदभिसम्बन्धः। यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावेऽवतिष्ठते, न कृपाणे प्रतिबिम्बितमन्येवमविद्योपधानविगमे जीवो ब्रह्मभाव इति सिद्धं जीवो ब्रह्मांश इव तत्त्वान्यतया न त्वंश इति तात्पर्यार्थः। सप्तदशसंख्यापरिमितो राशिगणः सप्तदशकः। तद्यथा, बुद्धिकर्मेन्द्रियाणि बाह्यानि दश बुद्धिमनसी वृत्तिभेदमात्रेण भिन्ने अप्येकीकृत्यैकमन्तःकरणं शरीरं पञ्च विषया इति सप्तदशको राशिः। अनुज्ञाविधिरभिमतो न तु प्रवृत्तप्रवर्त्तना। अपौरुषेये प्रवर्त्तयितुरभिप्रायानवगमासम्भवात्। ऋत्वर्थायामग्नीषोमीयहिंसायां प्रवृत्तप्रवर्त्तनानुपपत्तेश्च। पुरुषार्थेऽपि नियमार्थेऽप्रवृत्तेः। "कः पुनर्देहसम्बन्धः" इति। नहि कूटस्थनित्यस्याप्रतोपरिणामिनोऽस्ति देहेन संयोगः समवायो वाऽन्यो वा कश्चित् सम्बन्धः सकलधर्मातिगत्वादित्यभिसन्धिः। उत्तरं "देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः"। अयमर्थः। सत्यं नास्ति कश्चिदात्मनो देहादिभिः पारमार्थिकः सम्बन्धः, किन्तु बुद्ध्यादिजनितात्मविषया विप-

रोता इत्तिरहमेव देहादिसङ्घात इत्येवंरूपा। यथा देहादिसङ्घात आत्मतादात्म्येन भासते। सोऽयं सांहतसङ्घादात्मलक्षण: सम्बन्धो न पारमार्थिक इत्यर्थ:। गूढाभिसन्धिश्चोदयति। "सम्यग्दर्शिनस्तर्हि" इति। उत्तरं "न तस्य" इति। यदि सूक्ष्मस्थूलदेहादिसङ्घातोऽविद्योपदर्शित एकमेवाद्वितीयं ब्रह्माप्नोति सम्यग्दर्शनमभिमतम्, यद्वा तदन्तं प्रति विधिनिषेधयोरानर्थक्यमेव। एतदेव विशदयति। "हेयोपादेययो:" इति। चोदको निगूढाभिसन्धिमाविष्करोति। "शरीरव्यतिरेकदर्शिन एव" आमुष्मिकफलेषु कर्मसु दर्शपूर्णमासादिषु नियोज्यत्वमिति चेन्निराकरोति। "न, तत्संहतत्वाभिमानात्"। एतद्विभजते। "सत्यम्" इति। यो ह्यात्मन: पाट्कौशिकाद्देहादुपपत्त्या व्यतिरेकं वेद, न तु समस्तबुद्ध्यादिसंघातव्यतिरेकं, तस्यामुष्मिकफलेष्वधिकार:। समस्तबुद्ध्यादिव्यतिरेकवेदिनस्तु कर्तृभोक्तृत्वाभिमानरहितस्य नाधिकार: कर्मणि। तथा च न यथेष्टचेष्टा, अभिमानविकलस्य तस्या अप्यभावादिति। येषां तु सांख्यानां वैशेषिकाणां च सुखदु:खव्यवस्थां पारमार्थिकीमिच्छतां बहव आत्मान: सर्वगतास्तेषामेवैष व्यतिकर: प्राप्नोति। तत्र प्रश्नपूर्वकं सांख्यान् प्रति व्यतिकरं तावदाह। "कथम्" इति। यादृशस्तादृशो गुणसम्बन्ध: सर्वान् पुरुषान् प्रत्यविशिष्ट इति तत्कृतं सुखदु:खे सर्वान् प्रत्यविशिष्टे। न च कर्मनिबन्धना व्यवस्था, कर्मण: प्राकृतत्वेन प्रकृतेश्च साधारणत्वेनाव्यवस्थातादवस्थ्यात्' चोदयति। "स्यादेतत्" इति। अयमर्थ:। न प्रधानं स्वविभूतिख्यापनाय प्रवर्तते, किन्तु पुरुषार्थम्। यं च पुरुषं प्रत्यनेन भोगापवर्गौ पुरुषार्थौ साधितौ तं प्रति समाप्ताधिकारतया निवर्तते, पुरुषान्तरं तु प्रत्यसमाप्ताधि-

कार्ये प्रवर्त्तते। एवं च मुक्तसंसारिव्यवस्थोपपत्तेः सुख-दुःखव्यवस्थापि भविष्यति, इति निराकरोति। "नहि" इति। सर्वेषां पुरुषाणां विभुत्वात् प्रधानस्य च साधारण्यादमुं पुरुषं प्रत्यनेनार्थः साधित इत्येतदेव नास्ति। तस्मात् प्रयोजनवशेन विना हेतुं व्यवस्थाऽऽस्थेया। सा चायुक्ता, हेत्वभावादित्यर्थः। भवतु सांख्यानामव्यवस्था प्रधानसमवायाददृष्टस्य प्रधानस्य च साधारण्यात्। काणादादीनां त्वात्मसमवाय्यदृष्टं प्रत्यात्मसाधारणं तत्कृतश्च मनसा महात्मनः स्वस्वामिभावलक्षणः सम्बन्धोऽनादिरदृष्टभेदानामनादित्वात्, तथा चात्ममनःसंयोगस्य साधारण्येऽपि स्वस्वामिभावस्यासाधारण्यात् भिसन्ध्यादिव्यवस्थोपपद्यत एव। न च संयोगोऽपि साधारणः। नहि तस्य मनस आत्मान्तरेण संयोगः स एव स्वामिनाप्यात्मसंयोगस्य प्रतिसंयोगिभेदेन भेदात्। तस्मादात्मैकत्वस्यागमसिद्धत्वाद्व्यवस्थायाश्चैकत्वेऽपि उपपत्ते र्नानेकात्मकल्पनागौरवादागमविरोधाच्चान्यविशेषवत्त्वेन च भेदकल्पनायामन्योन्याश्रयापत्तेः। भेदे हि तत्कल्पना ततश्च भेद इति। एतदेव काणादमतदूषणं भाष्यकृता तु प्रौढवादितया काणादान् प्रत्यप्यदृष्टानियमादित्यादीनि सूत्राणि योजितानि सांख्यमतदूषणपराण्येवेति तु रोचयन्ते केचित्तदास्तां तावत् ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयाध्यायस्य तृतीयः पादः ॥

---

## तथा प्राणाः ॥ १ ॥

यद्यपि ब्रह्मविदने सर्ववेदनप्रतिज्ञानानुपपादनश्रुतिविरोधाद्बहुतराद्वैतश्रुतिविरोधाच्च प्राणानां सर्गादौ सद्भावश्रुतिवि-

तत्त्वान्तरतयैषामनुत्पत्तिराशङ्क्येया। तथाच ब्रह्मवेदनेन सर्ववेदनप्रतिज्ञाव्याहतिः समस्तवेदान्तव्याकोपश्च स्यात् तदाह। “वियदधिकरणे हि” इति ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

निगदव्याख्यानमस्य भाष्यम् ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

वाच इति वाक्प्राणमनसामुपलक्षणम्। अयमर्थः। यत्रापि तेजःप्रभृतीनां सृष्टौ प्राणसृष्टिर्नोक्तेति ब्रूषे। तत्राप्युक्तेति ब्रूमहे। तथाहि, यस्मिन् प्रकरणे तेजोऽबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायतेऽन्नमयं हीत्यादिना, तद्यदि मुख्यार्थं ततस्तत्सामान्यात्सर्वेषामेव प्राणानां सृष्टिरुक्ता। अथ गौणं, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायामुपक्रमोपसंहार-पर्यालोचनया श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चार्थमेव प्राणादीनामापोमयत्वाद्यभिधानमित्युक्तैव तत्रापि प्राणसृष्टिरिति सिद्धम् ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

अवान्तरसङ्गतिमाह। उत्पत्तिविषयः” इति। संशयकारणमाह। “श्रुतिविप्रतिषेधात्” इति। “विषयः” संशयः। क्वचित् सप्त प्राणाः। तद्यथा। चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति। क्वचिदष्टौ प्राणा ग्रहत्वेन बन्धनेन गुणेन सङ्कीर्त्यन्ते। तद्यथा, घ्राणरसनवाक्चक्षुःश्रोत्रमनोहस्तत्वगिति त एते ग्रहाः, एषां तु विषया अतिग्रहास्त्वष्टावेव प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धान् जिघ्रतीत्यादिना सन्दर्भेणोक्ताः। क्वचिन्नव। तद्यथा, सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चाविति, द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका

वागिति सप्त। पायूपस्थौ बुद्धिमनसी वा द्वावधिकाविति नव। क्वचिद्दश। नव वै पुरुषे प्राणास्तथा नाभिर्दशमीति। क्वचिदेकादश, दशेमे पुरुषे प्राणाः। तद्यथा, बुद्धीन्द्रियाणि घ्राणादीनि पञ्च कर्मेन्द्रियाण्यपि हस्तादीनि पञ्च आत्मैकादश, आप्नोति व्याप्नोत्यधिष्ठानेनेत्यात्मा मनः स एकादश इति। क्वचिद् द्वादश। सर्वेषां स्पर्शानां त्वगेकायनमित्यत्र। तद्यथा, त्वङ्नासिका-रसन-चक्षुः-श्रोत्र-मनो-हृदय-हस्त-पाद-उपस्थ-पायु-वागिति। क्वचिदेत एव प्राणा अहङ्काराधिकास्त्रयोदश। एवं विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः। अत्र प्रश्नपूर्वं पूर्वपक्षं गृह्णाति किं तावत् प्राप्तं, "सप्तैव" इति। सप्तैव प्राणाः। कुतः। "गतेः"। अवगतेः। "श्रुतिभ्यः" सप्त प्राणाः प्रभवन्तीत्यादिभ्यः। न केवलं श्रुतितोऽवगतिर्विशेषणादप्येवमवेत्याह। "विशेषितत्वाच्च"। "सप्त वै शीर्षण्याः प्राणाः" इति। ये सप्त शीर्षण्याः श्रोत्रादयस्ते प्राणा इत्युक्ते इतरेषामशीर्षण्यानां हस्तादीनामप्राणत्वं गम्यते। यथा दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीति गम्यते। एतदुक्तं भवति। यद्यपि श्रुतिविप्रतिषेधो यद्यपि च पूर्वसंख्यासु न परासां संख्यानां निषेधस्तथाऽप्यवच्छेदकत्वेन बह्वीनां संख्यानामसम्भवादेकस्यां कल्प्यमानायां सप्तत्वमेव युक्तं प्राथम्याल्लाघवाच्च, वृत्तिभेदमात्रविवक्षया त्वष्टत्वादयो गमयितव्या इति प्राप्तम्। एवं प्राप्ते, उच्यते।

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति न सप्तैव, किन्तु हस्तादयोऽपि प्राणाः। प्रमाणान्तरादेकदेशत्वे प्राणानां स्थितेऽतोऽस्मिन् सति सार्थविभक्तिकस्तसिः। नैवम्। लाघवात् प्राथम्याच्च

समस्तत्वमित्यर्थः। एतदुक्तं भवति। यद्यपि श्रुतयः स्वतः प्रमाणतयाऽनपेक्षास्तथापि परस्परविरोधाभावार्थतत्त्वपरिच्छेदायालम्। न च सिद्धे वस्तुनि अनुष्ठान इव विकल्पः सम्भवति। तस्मात् प्रमाणान्तरोपनीतार्थवशेन व्यवस्थाप्यन्ते। यथा स्रुवेणावद्यतीति मांसपुरोडाशावदानासम्भवात् सम्भवाच्च द्रवावदानस्य स्रुवावदाने द्रवाणीति व्यवस्थाप्यते। एवमिहापि रूपादिबुद्धिपञ्चककार्य्यव्यवस्थानाच्चक्षुरादिबुद्धीन्द्रियकरणपञ्चकव्यवस्था। नह्यन्धादयः सत्स्वपीतरेषु घ्राणादिषु गन्धाद्युपलभ्यानुमितसद्भावेषु रूपादीनुपलभन्ते। तथा वचनादिलक्षणकार्य्यपञ्चकव्यवस्थातो वाक्पाण्यादिलक्षणकर्मेन्द्रियपञ्चकव्यवस्था। न हि जातु मूकादयः सत्स्वपि विहरणाद्यवगतसद्भावेषु पादादिषु बुद्धीन्द्रियेषु वा वचनादिसमर्था भवन्ति। एवं कर्मबुद्धीन्द्रियासम्भाविन्या सङ्कल्पादिक्रियाव्यवस्थयान्तःकरणव्यवस्थानुमानम्। एकमपि चान्तःकरणमनेकक्रियाकारि भविष्यति, यथा प्रदीप एको रूपप्रकाशवर्तिविकारस्नेहशोषणहेतुः। तस्मान्नान्तःकरणभेदः। एकमेव त्वन्तःकरणं मननान्मन इति चाभिमानादहङ्कार इति चाध्यवसायाद् बुद्धिरिति चाख्यायते। वृत्तिभेदाच्चाभिन्नमपि भिन्नमिवोपचर्य्यते त्रयमिति, तत्त्वेन त्वेकमेव भेदे प्रमाणाभावात्। तदेवमेकादशानां कार्य्याणां व्यवस्थानादेकादश प्राणा इति श्रुतिराञ्जसी। तदनुगुणतया त्वितराः श्रुतयो नेतव्याः। तथावयुत्यनुवादेन सप्ताष्टनवदशसंख्याश्रुतयो यथैकं वृणीते द्वौ वृणीते इति त्रीन् वृणीत इत्येतदानुगुण्यात्। द्वादशत्रयोदशसंख्याश्रुती तु कथञ्चिद् वृत्तिभेदेन भेदं विवक्षित्वोपासनादिपरतया नेतव्ये। तस्मादेकादशैव प्राणा नेतर इति सिद्धम्। अपि च [illegible]संख्यानां प्राणानां

यच्चासत्त्वाभिधानं तदपि चक्षुर्वत् व्यवस्थापनीयम्, प्रमाणान्तरविरोधात्। न खलु द्वे चक्षुषी, रूपोपलब्धिलक्षणस्य कार्यस्याभेदात्। पिहितैकचक्षुषस्तु न तादृशी रूपोपलब्धिर्भवति यादृशी समस्तचक्षुषः, तस्मादेकमेव चक्षुरधिष्ठानभेदेन तु भिन्नमिवोपचर्यते। कर्णस्याप्येकशलाकागमनेन चक्षुर्वदवेनापलम्भः। एतेन घ्राणश्रोत्रे अपि व्याख्याते। इयमपरा सूत्रद्वययोजना। "सप्तैव प्राणाः" चक्षुर्घ्राणरसनत्वक्श्रोत्रमनांस्येव उत्क्रान्तिमन्तः स्युः। सप्तानामेव गतिश्रुतेर्विशेषितत्वादिति व्याख्यातुं शङ्कते। "ननु सर्वशब्दोऽप्यत्र" इति। अर्थान्तरं "विशेषितत्वात्" इति। चक्षुरादयस्त्वक्पर्यन्ता उत्क्रान्तौ विशेषिताः। तस्मात्सर्वशब्दस्य प्रकृतापेक्षत्वात् सप्तैव प्राणा उत्क्रामन्ति न पाण्यादय इति प्राप्तम्। चोदयति। "नन्वत्र विज्ञानमष्टमम्" इति। न विज्ञानानीन्द्रियवृत्तित्वेनानुत्क्रान्तं परिहरति। "नैष दोषः"। सिद्धान्तमाह। "हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः" उत्क्रान्तिभाजोऽवगम्यन्ते प्रकृतत्वश्रुतेर्हस्तादीनाम्। एवं खल्वेषां पृथगाम्नानमुपपद्यते। यद्यामुष्मिकात्मानं जीवोयुरितरथा षाट्कौशिकशरीरवदेषां ग्रहणं नाम्नायेत। अत एव च श्रुतिरेषां सूक्ष्मवाधनामाह। "पुर्यष्टकेन" इति। तथाथर्वणश्रुतिरप्येषामेकादशानामुत्क्रान्तिमभिवदति। तस्माच्छ्रुत्यन्तरेभ्यः स्मृतेश्च सर्वशब्दार्थासंकोचाच्च सर्वेषामुत्क्रमणे सिद्धेऽसिद्धमेव यदुक्तं सप्तैवेति, किन्तु प्रदर्शनार्थं सप्तत्वसंख्येति सिद्धम्॥

## अणवश्च ॥ ७ ॥

अथ सांख्यानामाहङ्कारिकत्वादिन्द्रियाणामहङ्कारस्य च जगत्सकलव्यापित्वात्सर्वगताः प्राणाः। वृत्तिस्त्वेषां शरीरदे-

अनया प्रादेशिकी तद्विलक्षणा च गत्या गतिश्रुतिरिति मन्यन्ते, तान् प्रत्याह । “अणवश्च” प्राणा अणुत्वं तद्रूपपर्यन्तता चाक्षुषत्वं दुरधिगमत्वान्न तु परमाणुत्वं देहव्यापिकार्यानुपपत्तिप्रसङ्गात्तापदूनस्य शिशिरह्रदनिमग्नस्य सर्वाङ्गीणशीतस्पर्शोपलब्धिरस्तीत्युक्तम् । एतदुक्तं भवति । यदि सर्वगतानीन्द्रियाणि भवेयुस्ततो व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्गः । सर्वगतत्वेऽपि देहावच्छिन्नानामेव करणत्वं तेन न व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्ग इति चेत्, हन्त प्राप्ताप्राप्तविवेकेन शरीरावच्छिन्नानामेव तेषां करणत्वमिन्द्रियत्वमिति न व्यापिनामिन्द्रियभावः । तथा च नाममात्रे विसंवादो नार्थेऽस्माभिस्तदिन्द्रियमुच्यते भवद्भिस्तु वृत्तिरिति सिद्धमणवः प्राणा इति ॥

श्रेष्ठश्च ॥ ८ ॥

न केवलमितरे प्राणा ब्रह्मविकाराः श्रेष्ठश्च प्राणो ब्रह्मविकारः । नासदासीदित्यधिकृत्य प्रवृत्ते ब्रह्मसूक्ते नासदासीये सर्गात्प्रागानीदिति प्राणव्यापारश्रवणादसति च व्यापारवति व्यापारानुपपत्तेः प्राणसद्भावावगतेरुत्पत्तिश्रुतेश्च न ब्रह्मविकारः प्राण इति मन्वानस्य बहुश्रुतिविरोधेऽपि च श्रुत्योरेतयोर्गतिमपश्यतः पूर्वपक्षः । राद्धान्तस्तु । बहुश्रुतिविरोधादानीदिति न प्राणव्यापारप्रतिपादिनी, किन्तु सृष्टिकारणमासीत् जीवति स्म, आसीदिति यावत्, तेन तत्सद्भावप्रतिपादनपरा । ज्येष्ठत्वं च श्रोत्राद्यपेक्षमिति गमयितव्यम् । तस्माद्बहुश्रुत्यनुरोधान्मुख्यस्यापि प्राणस्य ब्रह्मविकारत्वमिति सिद्धम् ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

सम्प्रति मुख्यप्राणस्वरूपं निरूप्यते। यत्र हि यः प्राणः स वायुरिति श्रुतेर्वायुरेव प्राण इति प्रतिभाति। अथवा प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषेति वायोर्भेदेन प्राणस्य श्रवणात्तद्विरोधाद्वरं तन्त्रान्तरीयमेव प्राणस्य स्वरूपमस्तु श्रुती च विरुद्धार्थे कथञ्चिन्नेष्येते इति सामान्यकरणवृत्तिरेव प्राणोऽस्तु। न चात्रापि करणेभ्यः पृथक् प्राणस्यानुक्रमणश्रुतिविरोधो वृत्तिवृत्तिमतोर्भेदादिति पूर्वः पक्षः। सिद्धान्तस्तु। न सामान्येन्द्रियवृत्तिः प्राणः। स हि मिलितानां वेन्द्रियाणां वृत्तिर्भवेत् प्रत्येकं वा। न तावन्मिलितानाम्, एकद्वित्रिचतुरिन्द्रियाभावे तदभावप्रसङ्गात्। नो खलु चूर्णहरिद्रासंयोगजन्माऽरुणगुणस्तयोरन्यतराभावे भवितुमर्हति। न च बहुविष्टिसाध्यं शिबिकोद्वहनं द्वित्रिविष्टिसाध्यं भवति। न चैककसाध्यं, तथा सति सामान्यवृत्तित्वानुपपत्तेः। अपि च यत्सम्भूय कारकाणि निष्पादयन्ति तत्प्रधानव्यापारानुगुणावान्तरव्यापारेणैव यथा वयसां प्रातिस्विको व्यापारः पञ्जरचालनानुगुणः। न चेन्द्रियाणां प्राणे प्रधानव्यापारे जनयितव्येऽस्ति तादृशः कश्चिदवान्तरव्यापारस्तदनुगुणः। ये च रूपादिप्रत्यया न ते तदनुगुणाः, तस्मान्नेन्द्रियाणां सामान्यवृत्तिः प्राणस्तथा च वृत्तिवृत्तिमतोः कथञ्चिद्भेदविवक्षया न पृथगुपदेशो गमयितव्यः। तस्मान्न क्रिया, नापि वायुमात्रं प्राणः, किन्तु वायुभेद एवाध्यात्ममापन्नः पञ्चव्यूहः प्राण इति। स्यादेतत्। यथा चक्षुरादीनां जीवं प्रति गुणभूतत्वाज्जीवस्य च श्रेष्ठत्वाज्जीवः स्वतन्त्र एवं प्राणोऽपि प्राधान्यात् श्रेष्ठत्वाच्च स्वतन्त्रः प्राप्नोति। न च द्वयोः स्वतन्त्रयो-

ऽस्मिन् शरीरे एकवाक्यत्वमुपपद्यत इत्यपर्य्यायं विज्ञाने-कादिक्रियतया देह उपपद्येतेति प्राप्ते, उच्यते ।

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥**

यद्यपि चक्षुराद्यपेक्षया श्रेष्ठत्वं प्राधान्यं च प्राणस्य तथापि संहतत्वादचेतनत्वाद् भौतिकत्वाच्चक्षुरादिभिः सह शिष्टत्वाच्च पुरुषार्थत्वात् पुरुषं प्रति पारतन्त्र्यं शयनासनादिवद्भवेत् । तथा च यथा मन्त्रीतरेषु नैयोगिकेषु प्रधानमपि राजानमपेक्ष्यास्वतन्त्र एवं प्राणोऽपि चक्षुरादिषु प्रधानमपि जीवेऽस्वतन्त्र इति । स्यादेतत् । चक्षुरादिभिः सह शासनेन करणं चेत् प्राण एवं सति चक्षुरादिविषयरूपादिवदस्यापि विषयान्तरं वक्तव्यम् । न च तच्छक्यं वक्तुम् । एकादशकरणगणनव्याकोपश्चेति दोषं परिहरति ।

**अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥**

न प्राणः परिच्छेदधारणादिकरणमस्माभिरभ्युपेयते येनास्य विषयान्तरमन्विष्येत एकादशत्वं च करणानां व्याकुप्येतापि तु प्राणान्तरासम्भवि देहेन्द्रियविधारणकारणं प्राणः । तच्च श्रुतिप्रबन्धेन दर्शितं न केवलं शरीरेन्द्रियधारणमस्य कार्यम् । अपि च

**पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ १२ ॥**

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् । यथा मरुमरीचिकादिषु सलिलादिबुद्धयः । अतद्रूपप्रतिष्ठता च संशयेऽप्यस्ति तस्यैकाप्रतिष्ठानात् । अतः सोऽपि संगृहीतः । शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । यद्यपि मिथ्याज्ञानेऽप्यस्ति वस्तुशून्यता तथापि न तस्य व्यवहारहेतुतास्ति । अस्य तु पण्डितरविचारासहस्यापि शब्दज्ञानमाहात्म्याद् व्यवहारहेतु-

भावोऽस्त्येव। यथा पुरुषस्य चैतन्यमिति। न चात्र षष्ठ्यर्थः सम्बन्धोऽस्ति तस्य भेदाधिष्ठानत्वात्। चैतन्यस्य पुरुषादत्यन्ताभेदात्। यद्यपि चाभावप्रत्ययालम्बना वृत्तिर्भवति तथापि विक्षेपसंस्कारलक्षणा मनोवृत्तिरित्याशयेनेति सर्वमवदातम्॥

## अणुश्च ॥ १३ ॥

समस्त्रिभिर्लोकैरिति विभुत्वश्रवणाद्विभुः प्राणः समः प्लुषिणेत्याद्यास्तु श्रुतयो विभोरप्यवच्छेदादुपपद्यन्ते। यथा विभुन आकाशस्य कुटकरकाद्यवच्छेदात् कुटादिमात्रत्वमिति प्राप्त आह। "अणुश्च"। उत्क्रान्तिगत्यागतिश्रुतिभ्य आध्यात्मिकस्य प्राणस्यावच्छिन्नता न विभुत्वम्। दुरधिगमतामात्रेण च शरीरव्यापिनोऽप्यणुत्वमुपपद्यते न त्वणुत्वमित्युक्तमधस्तात्। यत्त्वस्य विभुत्वाम्नानं तदाधिदैविकेन सूत्रात्मना समष्टिव्यष्टिरूपेण, न त्वाध्यात्मिकेन रूपेण तदाश्रयाश्च समःप्लुषिणेत्येवमाद्याः श्रुतयो देहसाम्यमेव प्राणस्याहुः स्वरूपतो न तु करकाकाशवत्परोपाधिकतया कथञ्चित्तथा इति॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

यदि यत्कार्यं कुर्वद् दृष्टं तत् स्वमहिम्नैव करोतीत्येव तावदुत्सर्गः पराधिष्ठानन्तु तस्य बलवत्प्रमाणान्तरवशात्। स्यादेतत्। वास्यादीनां तक्षाद्यधिष्ठितानामचेतनानां कार्यकारित्व-दर्शनादचेतनत्वेनेन्द्रियाणामप्यधिष्ठातृ देवता-कल्पनेति चेत्, न, जीवस्यैवाधिष्ठातुश्चेतनस्य विद्यमानत्वात्। 'न वाग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिश्रुतिभ्यो देवतानामप्यधिष्ठातृत्वमभ्युपगन्तुं युक्तम्। अनेकाधिष्ठात्रभ्युपगमे हि तेषामेकाभिप्रायनियमनिमित्ताभावाच्च विसंवादात्कार्यं नोत्पद्येत

विरोधात्। अपि च य इन्द्रियाणामधिष्ठाता स एव भोक्तेति देवतानां भोक्तृत्वेन स्वामित्वं शरीर इति न जीवः स्वामी स्याद् भोक्ता च। तस्मादग्न्याद्युपचारो वागादिषु प्रकाशकत्वादिना केनचित्रिमित्तेन गमयितव्यो न तु स्वरूपेणाग्न्यादिदेवतानां मुखाद्यनुप्रवेश इति प्राप्तम्। एवं प्राप्ते उच्यते। नानाविधासु तावच्छ्रुतिषु स्मृतिषु च तत्र तत्र वागादिष्वग्न्यादिदेवताधिष्ठानमवगम्यते। न च तदसत्यामनुपपत्तौ क्लेशेन व्याख्यातुमुचितम्। न च स्वरूपोपयोगभेदज्ञानाविरहिणो जीवस्येन्द्रियाधिष्ठातृत्वमभ्यव. सम्भवति तु देवतानामिन्द्रियाण्यपि ज्ञानेन साक्षात्कृतवतीनां तत्स्वरूपभेदतदुपयोगभेदविज्ञानम्। तस्मात्तास्ता एव देवतास्तत्तत्करणाधिष्ठात्र्य इति युक्तं न तु जीवः। भवतु वा जीवोऽप्यधिष्ठाता तथाप्यदोषः। अनेकेषामधिष्ठातृणामेकः परमेश्वरोऽस्ति नियन्तान्तर्यामी तद्वशाद् विप्रतिपित्सवोऽपि न विप्रतिपत्तुमर्हन्ति। तथा चैकवाक्यतया न तत्कार्योत्पत्तिप्रत्यूहः। न चैतावता देवतानामत्र शरीरे भोक्तृत्वम्। नहि यन्ता रथमधितिष्ठन्नपि तत्साध्यविजयादेर्भोक्ताऽपि तु स्वाम्येव। एवं देवता अधिष्ठात्र्योऽपि न भोक्त्र्यस्तासां तावन्मात्रस्य श्रुतत्वात्। भोक्ता तु जीव एव। न च नरादिशरीरोचितं दुःखबहुलमुपभोगं सुखमय्यो देवता अर्हन्ति। तस्मात् प्राणानामधिष्ठात्र्यो देवता इति सिद्धम्। श्रेषमतिरोहितार्थम्॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥१७॥

मा भूत् प्राणो वृत्तिरिन्द्रियाणामिन्द्रियाण्येवास्य तत्त्वं तस्य चैतस्य च प्राणस्य वृत्तयो भविष्यन्ति। तद्भावानुविधायि-

भावाभावत्वमिन्द्रियाणां श्रुत्यनुभवसिद्धं, तथाच प्राणशब्दस्यै-
कस्यान्याय्यमनेकार्थत्वं न भविष्यति। वृत्तीनां वृत्तिमतस्त-
त्त्वान्तरत्वाभावात्। तत्त्वान्तरत्वे त्विन्द्रियाणां प्राणशब्दस्या-
नेकार्थत्वं प्रसज्येत। इन्द्रियेषु लाक्षणिकत्वं वा। न च
मुख्यसम्भवे लक्षणा युक्ता अन्याय्यत्वात्। न च भेदेन व्यप-
देशो भेदसाधनमेतस्माज्जायते प्राण इत्यादिः मनसोऽपीन्द्रि-
येभ्योऽस्ति भेदेन व्यपदेश इत्यनिन्द्रियत्वप्रसङ्गः। स्मृतिव-
शात्तु तस्येन्द्रियत्वे इन्द्रियाणामपि प्राणाद्भेदेन व्यपदिष्टाना-
मप्यस्ति प्राणस्वभावत्वं हन्तास्यैव रूपमसामेति श्रुतिः।
तस्मादुपपत्तेः श्रुतेश्च प्राणस्यैव वृत्तय एकादशेन्द्रियाणि न
तत्त्वान्तराणीति प्राप्तम्। एवं प्राप्त उच्यते। मुख्यात् प्राणा-
त्तत्त्वान्तराणीन्द्रियाणि तत्र तत्र भेदेन व्यपदेशात्। श्रुत्यु
प्राणाप्राणत्वलक्षणविरुद्धधर्मसंसर्गश्रुतेः। कार्यक्रियाभेदाच्च देह-
धारणं हि प्राणस्य क्रियाऽर्थालोचनमनने चेन्द्रियाणां न च
तद्भावाभावानुविधानं तद्वृत्तितामावहति। देहेन व्यभिचा-
रात् प्राणादयो हि देहान्वयव्यतिरेकानुविधायिनो न च
देहात्मानः। याऽपि च प्राणरूपतामिन्द्रियाणामभिदधाति
श्रुतिः। तत्रापि पौर्वापर्यालोचनायां भेद एव प्रतीयत इत्युक्तं
भाष्यकृता। तस्माच्छ्रुतिविरोधात् पूर्वापरविरोधाच्च प्राण-
रूपताभिधानमिन्द्रियाणां प्राणायत्ततया भाक्तं गमयितव्यम्।
मनसस्त्विन्द्रियत्वे स्मृतेरवगते क्वाचिदिन्द्रियेभ्यो भेदेनोपादानं
गोबलीवर्दन्यायेन। अथवा इन्द्रियाणां वर्तमानमात्रविषय-
त्वान्मनसस्तु त्रैकाल्यगोचरत्वाद्भेदेनाभिधानम्। न च प्राणे
व्यपदेशभेदवाक्यं तथा नेतुं युक्तम्। प्राणरूपताश्रुतेश्च गति-
र्दर्शिता तथा च यदि प्राणशब्दस्य मुख्यत्वादिन्द्रियेषु ततस्त-
त्त्वान्तरेषु लाक्षणिकः प्राणशब्द इति युक्तम्। न च मुख्य-

त्वानुरोधेनावगतभेदयोरैक्यं युक्तं मा भूत्प्राणादीनां नौका-
दिभिरैक्यमिति । अन्ये तु भेदव्यपदेशाधिकरणाभिधया भेदश्रुते-
रिति पौनरुक्त्याभिया च तच्छब्दस्य वागन्तरीतपरामर्श-
कत्वादन्यथा वर्णयाञ्चक्रुः । किमेकादशैव वागादय इन्द्रि-
याण्याहो प्राणोऽपीति विषये इन्द्रस्यात्मनो लिङ्गमिन्द्रियं
तथा च वागादिवत्प्राणस्यापीन्द्रलिङ्गतास्ति । न च रूपादि-
विषयालोचनकरणत्वेनेन्द्रियता, आलोकस्यापीन्द्रियत्वप्रसङ्गात् ।
तस्माल्लौकिकमिन्द्रलिङ्गमिन्द्रियमिति वागादिवत्प्राणोऽपीन्द्रिय-
मिति प्राप्तम् । एवं प्राप्तेऽभिधीयते । इन्द्रियाणि वागादीनि
श्रेष्ठात् प्राणादन्यत्र । कुतः । तेनेन्द्रियशब्देन तेषामेव वागा-
दीनां व्यपदेशात् । नहि मुख्ये प्राण इन्द्रियशब्दो दृष्टचरः ।
इन्द्रलिङ्गता तु व्युत्पत्तिमात्रनिमित्तं यथा गच्छतीति गौरिति
प्रवृत्तिनिमित्तं तु देहाधिष्ठानत्वे सति रूपाद्यालोचनकरण-
त्वम् । इदं चास्य देहाधिष्ठानत्वं यद्देहानुग्रहोपघाताभ्यां
तदनुग्रहोपघातौ । तथा च नालोकस्येन्द्रियत्वप्रसङ्गः । तस्मा-
द्वैवागादय एवेन्द्रियाणि न प्राण इति सिद्धम् । भाष्यकारीयं
त्वधिकरणं भेदश्रुतेरित्यादिषु सूत्रेषु नेयम् ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

सत्प्रक्रियायां तत्तेज ऐक्षतेत्यादिना सन्दर्भेण तेजोऽबन्नानां
सृष्टिं विधायोपदिश्यते । सेयं देवतैक्षत हन्ताहमिमास्तिस्रो
देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि
तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति । अस्यार्थः । पूर्वोक्तं
बहुभवनमीक्षणप्रयोजनमद्यापि सर्वथा न निष्पन्नमिति
पुनरीक्षां कृतवती बहुभवनमेव प्रयोजनमुद्दिश्य कथं हन्तेदा-
नीमहमिमा यथोक्तास्तेजोबन्नाख्यास्तिस्रो देवताः पूर्वसृष्टाननु-

भूतेन सम्प्रति अस्मत्सविधापितेन जीवेन प्राणधारणकर्त्रात्म-
नानुप्रविश्य बुद्ध्यादिभूतमात्रायामादर्श इव सूर्यबिम्बं तोय
इव चन्द्रमसो बिम्बं छायामात्रतयानुप्रविश्य नाम च रूपं च
ते व्याकरवाणि विस्पष्टं करवाणीदमस्य नामेदं च रूपमिति
तासां तिसृणां देवतानां त्रिवृतं त्रिवृतं तेजोऽबन्नात्मना त्र्यात्मि-
कां त्र्यात्मिकामेकैकां देवतां करवाणीति । तत्र संशयः । किं
जीवकर्तृकमिदं नामरूपव्याकरणमाहो परमेश्वरकर्तृक-
मिति । यदि जीवकर्तृकं तत आकाशो वै नामरूपयोर्निर्वहि-
तेत्यादिश्रुतिविरोधादनध्यवसायः । अथ परमेश्वरकर्तृकं, ततो
न विरोधः । तत्र डित्थडवित्थादिनामकरणे च घटपटादिरूप-
करणे च जीवकर्तृत्वदर्शनात् । इहापि त्रिवृत्करणे नामरूपक-
रणे चास्ति सम्भावना जीवस्य तथा च योग्यत्वादनेन जीवेनेति
व्याकरवाणीति प्राधानक्रियया सम्बध्यते, न त्वानन्तर्यादनु-
प्रविश्येत्यनेन सम्बध्यते । प्रधानपदार्थसम्बन्धो हि साकाङ्क्ष-
त्वेषां गुणभूतानां पदार्थानामौत्सर्गिकप्राधान्यात् तेषाम् । तस्य
तु साचिव्यादनन्तरात् परस्परान्वयेन, साक्षा । अथवा
योग्यतया दर्शितः । ननु सेयं देवतेति परमेश्वरकर्तृत्वं
श्रूयते, सत्यं, प्रयोजकतया तु तद्भविष्यति । यथा लोके चार-
णाहं परसैन्यमनुप्रविश्य सङ्कलयामीति । यदि पुनरस्य
साक्षात्कर्तृभावो भवेदनेन जीवेनेत्यनर्थकं स्यात् । नहि
जीवस्यान्यथाकरणभावो भवितुमर्हति । प्रयोजककर्तुश्च स्व-
व्यापारेऽकर्मा करणं भवति प्रधानक्रियोद्देशेन प्रयोजकेन
प्रयोज्यकर्तुर्व्यापनात् । तस्मादत्र जीवस्य कर्तृत्वं नामरूप-
व्याकरणेऽन्यत्र तु परमेश्वरस्येति विरोधादनध्यवसाय इति
प्राप्तम् । एवं प्राप्त उच्यते । परमेश्वरस्यैवेयमपि नामरूपव्या-
कर्तृत्वमुपदिश्यते न तु जीवस्य, तत्र प्रधानक्रियासम्बन्ध

प्रत्ययोग्यत्वात् । नन्वन्यत्र छिन्द्धविन्द्यादिनामकर्मणि घटशरावादिरूपकर्मणि च कर्त्तृत्वदर्शनादिहापि योग्यता यथाश्रुत इति चेत् । न । गिरिनदीसमुद्रादिनिर्माणसामर्थ्यस्यापरिच्छिन्नावधिक न तथावगायपत्यपाधनात् । तस्मात्परमेश्वरस्यैवात्र साक्षात्कर्तृत्वमुपदिश्यते न जीवस्यानुप्रविष्टत्वेन तु मध्यवर्तिनास्य सम्बन्धो योग्यत्वात् । न चानर्थक्यं त्रिवृत्करणस्य भोक्तृजीवार्थतया तदनुप्रवेशाभिधानस्यार्थवत्त्वात् । स्यादेतत् । अनुप्रविश्य व्याकरवाणीति समानकर्तृत्वे क्त्वः स्मरणात् प्रवेशनकर्तुर्जीवस्यैव व्याकर्तृत्वमुपदिश्यतेऽन्यथा तु परमेश्वरस्य व्याकर्तृत्वे जीवस्य प्रवेष्टृत्वे भिन्नकर्तृकत्वेन क्त्वः प्रयोगो व्याहन्येतेत्यत आह । "न च जीवो नाम" इति । अनिराकृतार्थमन्यत् ॥

## मांसादिभौमं यथा शब्दमितरयोश्च ॥ २१ ॥

अत्र भाष्यकृतोत्तरसूत्रशेषतया सूत्रमितद्विषयापदर्शनपरतया व्याख्यातं शङ्कानिराकरणार्थत्वमप्यस्य शक्यं वक्तुम् । तथाहि, योऽणिष्ठो भागस्तन्मनस्तेजसस्तु योऽणिष्ठो भागः स वागित्यत्र हि काणादानां सांख्यानां चास्ति विप्रतिपत्तिस्तत्र काणादा मनो नित्यमाचक्षते । सांख्यास्त्वाहङ्कारिके वाङ्मनसे । अन्नभागतावचनं त्वन्नस्याप्यायनलक्षणार्थम् । अन्नोपयोगे हि मनः स्वस्थं भवति । एवं वागपि पाटवेन तेजः साम्यमभ्युपगमनीयम् । तत्रेदमुपतिष्ठते । "मांसादीनि" । वाङ्मनस इति वक्तव्ये मांसाद्यभिधानं लिङ्गेन सह साध्यस्योपन्यासो दृष्टान्तलाभाय । यथा मांसादिभौममेवं वाङ्मनसे अपि तैजसभौमे इत्यर्थः । एतदुक्तं भवति । न तावद् ब्रह्मव्यतिरिक्तमस्ति किञ्चिन्नित्यम् । ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञा-

व्याघातात्, बहुश्रुतिविरोधाच्च। नाप्याहङ्कारिकमहङ्कारस्य सांख्याभिमतस्य तत्त्वस्याप्रामाणिकत्वात्। तस्मादसति बाधके श्रुतिराञ्जसी नान्यथा कथञ्चिन्नेतुमर्हतीति कार्यदोषमित्युक्तं तद्दोषवत्तां दर्शयन्नाह पूर्वपक्षी। "यदि सर्वमेव" इति।

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

त्रिवृत्करणाविशेषेऽपि यस्य च यत्र भूयस्त्वं तेन तस्य व्यपदेश इत्यर्थः ॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमद्भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य चतुर्थः पादः।

समाप्तश्चायमध्यायः ॥ शुभम् ॥

---

# तृतीयोऽध्यायः।

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

द्वितीयतृतीयाध्याययोर्हेतुहेतुमद्भावलक्षणं सम्बन्धं दर्शयन् सुखावबोधायार्थसंक्षेपमाह। "द्वितीयेऽध्याये" इति। स्मृतिन्यायश्रुतिविरोधपरिहारेण हि यदध्यवसायलक्षणमप्रामाण्यं परिहृतं तथा च प्रामाण्यं निश्चलीकृतं तार्तीयो विचारो भवत्यन्यथा तु निर्बीजतया न सिध्येदिति। अवान्तरसङ्गतिं दर्शयितुं तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि चेत्युक्तम्। अध्यायार्थसंक्षेपमुक्त्वा पादार्थसंक्षेपमाह। "तत्र प्रथमे तावत् पादे" इति। तस्य प्रयोजनमाह। "वैराग्य" इति। पूर्वापरपरिशोधनाय भूमिकामारचयति। "जीवो मुख्यप्राणसचिवः" इति। "करणोपादानवद्

एतदेतस्मिन्नग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदैवम्। श्रद्धां जुह्वति श्रद्धा चोक्ता। पर्जन्यो वाव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषस्तस्य वायुरेव समित् वायुना हि पर्जन्योऽग्निः समिध्यते पुरोवातादिप्राबल्ये वृष्टिदर्शनात्। अभ्रं धूमः धूमकार्य्यत्वात् धूमसादृश्याच्च विद्युदर्चिः प्रकाशसामान्यात्। अशनिरङ्गाराः काठिन्यादि-द्युत्सम्बन्धाच्च। गर्जितं मेघानां विस्फुलिङ्गाः विप्रकीर्णतासामान्यात्। तस्मिन्देवा यजमानप्राणा अग्निरूपाः सोमं राजानं जुह्वति तस्य सोमस्याहुतेर्वर्षं भवति। एतदुक्तं भवति। श्रद्धाख्या आपो द्युलोकमाहुतित्वेन प्रविश्य चन्द्राकारेण परिणताः सत्यो द्वितीये पर्य्याये पर्जन्याग्नौ हुता वृष्टित्वेन परिणमन्त इति। पृथिवी वाव गौतमाग्निस्तस्य पृथिव्याख्यस्याग्नेः संवत्सर एव समित्संवत्सरेण कालेन हि समिद्धा भूमिर्व्रीह्यादिनिष्पत्तये कल्पते। आकाशो धूमः पृथिव्यग्नेरुत्थित इवाकाशो दृश्यते रात्रिरर्चिः पृथिव्याः श्यामाया अनुरूपा श्यामतया रात्रिरग्नेरिवानुरूपमर्चिर्दिशोऽङ्गारा प्रशे रात्रिरूपार्चिर्गमने उपशान्तानां प्रसन्नानां दिशां दर्शनात्। अवान्तरदिशो विस्फुलिङ्गाः क्षुद्रत्वसाम्यात्तस्मिन्नग्नौ श्रद्धासोमपरिणामक्रमेणागता आपो वृष्टिरूपेण परिणता देवा जुह्वति तस्या आहुतेरन्नं व्रीहियवादि भवति। पुरुषो वाव गौतमाग्निस्तस्य वागेव समिद्वाचा खल्वयं ताल्वाद्यष्टस्थानस्थितया वर्णपदवाक्याभिव्यक्तिक्रमेणार्थजातं प्रकाशयन् समिध्यते। प्राणो धूमः धूमवन्मुखान्निर्गमाज्जिह्वार्चिर्लोहितत्वसाम्याच्चक्षुरङ्गाराः प्रभाश्रयत्वात्। श्रोत्रं विस्फुलिङ्गाः विप्रकीर्णत्वात्। ता एवापः श्रद्धादिपरिणामक्रमेणागताः व्रीह्यादिरूपैः परिणताः सत्यः पुरुषेऽग्नौ हुतास्तासां परिणामो रेतः

सम्भवति। योषा वाव गौतमाग्निस्तस्या उपस्थ एव समित् तेन हि सा पुत्राद्युत्पादनाय समिध्यते यदुपमन्त्रयते स धूमः स्त्रीसम्भवादुपमन्त्रणस्य लोमानि वा धूमः योनिरर्चिर्लोहितत्वाद् यदन्तः करोति मैथुनं तेऽङ्गारा अभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति। एवं श्रद्धासोमवर्षान्न रेतो हवनक्रमेण योषाग्निं प्राप्यापो गर्भाख्या भवन्ति। तत्रापूर्वसमवायित्वादापः पुरुषवचसो भवन्ति पञ्चम्यामाहुताविति। यतः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति तस्मादद्भिः परिवेष्टितो जीवो रंहतीति गम्यते। एतदुक्तं भवति। श्रद्धाशब्दवाच्या आप इत्यग्रे वक्ष्यति तासां त्रिवृत्कृततया तेजोऽन्नाविनाभावेनाब्ग्रहणेन तेजोऽन्नयोरपि संग्रह इत्येतदपि वक्ष्यते। यद्यप्येतावतापि भूतवेष्टितस्य जीवस्य रंहणं नावगम्यते तेजोऽन्नानां पञ्चम्यामाहुतौ पुरुषवचस्त्वमात्रश्रवणात्, तथापीष्टादिकारिणां धूमादिना पितृयाणेन यथा चन्द्रलोकप्राप्तिकथनपरयाऽऽकाशाच्चन्द्रमसमेष सोमो राजेति श्रुत्या सह श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवतीत्यस्याः श्रुतेः समानत्वाद्गम्यते भूतपरिष्वक्तो रंहतीति। तथाहि। या एवापो हुता द्वितीयस्यामाहुतौ सोमभावं गतास्ताभिरेव परिष्वक्तो जीव इष्टादिकारी चन्द्रभूयं गतश्चन्द्रलोकं प्राप्त इति। ननु स्वतन्त्रा आपः श्रद्धादिक्रमेण सोमभावमाप्नुवन्तु ताभिरपरिष्वक्त एव तु जीवः संविद्रूपमार्गो गत्वा सोमभावमनुभवतु को दोषः। अयं दोषः। यतः श्रुतिसामान्यातिक्रम इति। एवं हि श्रुतिसामान्यं कल्पेत यदि येन रूपेण येन च क्रमेणापां सोमभावस्तेनैव जीवस्यापि सोमभावो भवेत्। अन्यथा तु

न श्रुतिसामान्यं स्यात्। तस्मात्परिष्वक्तापरिष्वक्तरंहणविषये श्रुतिसामान्यानुरोधेन परिष्वक्तरंहणं निश्चीयते। अतो दधिपयःप्रभृतयो द्रवभूयस्त्वादापो हुताः सूक्ष्मीभूता इष्टादिकारिणमाश्रिता नेत्थनेन विधिना देहे दह्यमाने हुताः सत्य आहुतिमय्य इष्टादिकारिणं परिवेष्ट्य स्वर्गं लोकं नयन्तीति। चोदयति। "नन्वन्या श्रुतिः" इति। अयमर्थः। एवं हि सूक्ष्मदेहपरिष्वक्तो रंहेत् यद्यस्य स्थूलं शरीरं रंहतो न भवेत्। अस्ति त्वस्य वर्त्तमानस्थूलशरीरयोगः आदेहान्तरप्राप्तेः तृणजलायुकानिदर्शनेन, तस्माच्चिदर्शनश्रुतिविरोधात् अदेहपरिष्वक्तो रंहतीति, परिहरति। "तत्रापि" इति। न तावत् परमात्मनः संसरणसम्भवः। तस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वात् किन्तु जीवानाम्। परमात्मैव चोपाधिकल्पितावच्छेदो जीव इत्याख्यायते, तस्य च देहेन्द्रियादिकपाधेः प्रादेशिकत्वात्तत्रैव सन्देहान्तरं गन्तुमर्हति। तस्मात्सूक्ष्मदेहपरिष्वक्तो रंहतिकर्मोपस्थापितः प्रतिपत्तव्यः। प्रागभ्या यो भाविविषयाया भावनाया उत्पादनाया दीर्घीभावमात्रं जलूकयोपमीयते। सांख्यानां कल्पनामाह। "व्यापिनां करणानाम्" इति। आहङ्कारिकत्वात्करणानामहङ्कारस्य च जगद्व्याप्नत्वव्यापित्वात्करणानामपि व्यापित्वम्यः। बौद्धानां कल्पनामाह। "केवलस्यैवात्मनः" इति। आलयविज्ञानसन्तान आत्मा तस्य वृत्तिः षट्प्रवृत्तिविज्ञानानि पञ्चेन्द्रियाणि तु चक्षुरादीनि अभिनवानि जायन्ते। कणभुक्कल्पनामाह। "मन एव च" इति। भोगस्थानं भोगायतनं शरीरमभिनवमिति यावत्। दिगम्बरकल्पनामाह। "जीव एवोत्प्लुत्य" इति। आदिग्रहणेन लोकायतिकानां कल्पनां संगृह्णाति ते हि शरीरारम्भवादिनो भस्मीभावमात्मन आहुर्न कस्यचिद्गमन-

मिति। चोदयति। "मनूदाहृताभ्याम्" इति। अत्र सूत्रेणोत्तरमाह।

## आत्मकत्वात् तु भूयस्त्वात् ॥ २ ॥

तैजसः कार्य्यमशितपीताहारपरिपाकः। अपां कार्य्यं क्लेदस्वेदादि। पृथिव्याः कार्य्यं गन्धादि। यस्तु गन्धक्लेदपाकप्राणावकाशदानदर्शनाद्देहस्य पाञ्चभौतिकत्वं पश्यंस्त्र्यात्मकत्वेन त्र्यात्मकत्वेन परितुष्यति। तं प्रत्याह। "पुनश्च त्र्यात्मकः" इति। वातपित्तश्लेष्मभिस्त्रिभिर्धातुभिः शरीरधारणात्मकैस्त्रिधातुत्वात्। अतो न स देहो भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते। अव्यवहृतनियमस्तर्हि कस्मादित्यत आह। "तस्माद्भूयस्त्वापेक्षः" इति। पृथिवीधातुवर्जमितरतेज आद्यपेक्षया कार्य्यस्य शरीरस्य लोहितादिद्रवभूयस्त्वात्तत्कारणयोरपोपादाननिमित्तयोर्द्रवभूयस्त्वादपां पृथग्व्यपदेशोऽत्रिवृत्पञ्चभूतान्तरानिराकरणार्थो ॥

## प्राणगतेश्च ॥ ३ ॥

प्राणानां जीवद्देहे साश्रयत्वमवगतं गच्छति जीवद्देहे तदनुविधायिनः प्राणा अपि गच्छन्तीति दृष्टम्, अतः षाट्कौशिका देहादुत्क्रामन्तः कश्चिदुत्क्रामत्युत्क्रामन्ति। न चैषामनुविधेयः सूक्ष्मो देहो भूतेन्द्रियमय इति गम्यते। नहीन्द्रियमात्राश्रयत्वमेषां दृष्टं यतस्तन्मात्राश्रयाणां गतिरुपपद्येतेति ॥

## अग्न्यादिगतिश्रुतिरिति चेन्न भाक्तत्वात् ॥ ४॥

श्राविनेऽपि अष्टे जीवस्य प्राणैः सह गमनेऽग्न्यादिगतिश्रुता श्रुतिविरोधोत्थापनार्था। अत्र हि लोमकेशयोरोषधिवनस्पतिगमनं दृष्टविरोधाद्भाक्तं तावदभ्युपेयम्। एवं च

तन्मध्यपतितत्वेन तेषामपि श्रुतिविरोधाद्वाक्यत्वमेवोचित-मिति। भक्तिरुपोपकारनिवृत्तिरुक्ता ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रथमायामा-हुतौ अनपां श्रद्धाया होतव्यताभिधानमसम्बद्धमनुपपन्नञ्च। नहि यथा पश्वादिभ्यो हृदयादयोऽवयवा अवदाय निष्कृष्य हूयन्ते। एवं श्रद्धा बुद्धिप्रसादलक्षणा निष्कृष्टुं वा होतुं वा शक्यते। न चाप्येवमौत्सर्गिकी कारणानुरूपता कार्य्यस्य युज्यते। तस्मादुक्तन्यायमपां श्रद्धाशब्दः प्रयुक्त इति। अतएव श्रुतिः "आपोहा" इति ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥**

अस्यार्थः पूर्वमेवोक्तः। अग्निहोत्रं घटसूत्रकाभिग्नतिप्र-तिष्ठार्थमपुनरावृत्तिलोकं प्रत्युत्थायिन्यामसमिद्धूमाचिरङ्गार-विस्फुलिङ्गेषु प्रश्नाः षट्, तेषां यः समाकारः यस्यां सा षट्-प्रश्नी, तस्या निरूपणं प्रतिवचनम्। सूत्रान्तरमवतारयितुं शङ्कते। "कथं पुनः" इति। सोमं राजानमाप्यायस्वापक्षी-यस्वेति। एवमेतांस्तत्र भक्षयन्तीति क्रियासमभिव्याहारेणा-प्यायनापक्षयौ यथा सोमस्य तथा भक्षयन्ति। सोममयान् लोकानित्यर्थः। अत उत्तरं पठति।

**भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥**

कर्मजनितफलोपभोगकामी अधिकारी न पुनरुपभोग्य-

स्वर्गमाचन्द्रसालोक्यमुपगतानां देवादिभक्ष्यत्वं स्वर्गकामो यजेतेति यागभावनायाः कर्तृपेक्षितोपायताक्ष्पविधिश्रुतिविरोधादक्षमश्चो भोक्तृणामिव सतां देवोपजीवितामात्रेण भाक्तो गमयितव्यो न तु चर्वणनिगरणाभ्यां मुख्य इति। अतैवार्थे श्रुत्यन्तरं सङ्गच्छत इत्याह। 'तथा हि दर्शयति' श्रुतिरनात्मविदामनात्मवित्त्वादेव पशुवद्देवोपभोग्यतां न तु चर्वणीयतया। यथा हि बलीवर्दादयो भुञ्जाना अपि स्वफलस्वामिनो हलादिवहनेनोपकुर्वाणा भोग्याः, एवं परमतत्त्वमविद्वांस इष्टादिकारिण इह दधिपयःपुरोडाशादिनाऽमुष्मिंश्च लोके परिचारकतया देवानामुपभोग्या इति श्रुत्यर्थः। अथवा 'अनात्मवित्त्वात्तथा हि दर्शयतीत्यस्यान्या व्याख्या'। आत्मवित् पञ्चाग्निविद्यावित्, न आत्मवित् अनात्मवित्। यो हि पञ्चाग्निविद्यां न वेद तं देवा भक्षयन्ती निन्द्यते पञ्चाग्निविद्यां स्तोतुं तस्या एव प्रकृतत्वात्। तदनेनोपचारस्य प्रयोजनमुक्तम्। उपचारनिमित्तमनुपपत्तिमाह। "तथा हि" "दर्शयति"। श्रुतिर्भाक्तत्वम्। "स सोमलोके विभूतिमनुभूय" इति। शेषमतिरोहितार्थम्॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च॥ ८॥

"यावत्सम्पातमुषित्वा" इति। यावदुपबन्धाद्यत्किञ्चेह करोत्ययमिति च यत्किञ्चेह कर्म कृतं तस्यान्तं प्राप्येति श्रवणात्। प्रायणस्य चैकप्रघट्टकेन सकलकर्माभिव्यञ्जकत्वात्। न खल्वभिव्यक्तिनिमित्तस्य साधारण्येऽभिव्यक्तिनियमो युक्तः। फलदानाभिमुखीकरणं चाभिव्यक्तिस्तस्मात्समस्तमेव कर्मफलमुपभोजितवत् स्वफलविरोधि च कर्म। तस्मात्तु तदुपपत्तेश्च निरनु-

शयानामेव चरणादाचारादवरोहो न कर्मणः आचारकर्मणो च श्रुतेः प्रसिद्धभेदे। यथाकारी यथाचारी तथा भवतीति। तथा च रमणीयचरणाः कपूयचरणा इत्याचारमेव योनिनिमित्तमुपदिशति। न तु कर्म इतरां वा कर्मणो वै चाविशेषेणानुशय-स्तथापि यद्यप्ययमिष्टापूर्त्तकारी स्वयं निरनुशयो भुक्तभोगत्वा-त्तथापि पित्रादिगतानुशयवशाद्विपाकान् आत्मायुर्भोगांश्च-न्द्रलोकादवरुह्यानुभविष्यति। स्मर्यते ह्यन्यस्य सुकृतदुष्कृता-भ्यामन्यस्य तत्सम्बन्धिनस्तत्फलभागिता। 'पतत्यर्द्धं शरीरस्य यस्य भार्या सुरां पिबेत्' इत्यादि। तथा श्राद्धवैश्वानरीयेष्ट्यादेः पितापुत्रादिगामिफलश्रुतिः। तस्माद्यावत् सम्पातमित्युपक्र-मानुरोधाद्यत् किञ्चेह करोतीति च श्रुत्यन्तरानुसाराद्रमणीय-चरणत्वं सम्बन्ध्यन्तरगतमिष्टापूर्त्तकारिणि भाक्तं गमयित-व्यम्। तथा च निरनुशयानामेव भुक्तभोगानामवरोह इति प्राप्ते, उच्यते। येन कर्मकलापेन फलमुपभोजितं तस्मिन्नतीते-तेऽपि सानुशया एव चन्द्रमण्डलादवरोहन्ति। कुतः। दृष्टस्मृति-भ्याम्। प्रत्यक्षदृष्टा श्रुतिर्दृष्टशब्दवाच्या। स्मृतिश्चोपन्यस्ता। अथवा दृष्टशब्देनोच्चावचरूपो भोग उच्यते। अयमभिसन्धिः। कपूयचरणा रमणीयचरणा इत्यवरोहतामेतद्विशेषणम्। न च सति मुख्यार्थसम्भवे सम्बन्धिमात्रेणोपचरितार्थत्वं न्याय्यम्। न चोपक्रमविरोधाच्छ्रुत्यन्तरविरोधाच्च मुख्यार्थासम्भव इति साम्प्रतम्। दत्तफलेष्टापूर्त्तकर्मापेक्षयाऽपि यावत्पदस्य यत्कि-ञ्चेतिपदस्य चोपपत्तेः। नहि यावज्जीवमग्निहोत्रं जुहुयादिति यावज्जीवमाहारविहारादिसमयेऽपि होमं विधत्ते, नापि मध्याह्नादावपि तु सायम्प्रातःकालापेक्षया। सायम्प्रातःका-लविधानसामर्थ्यात् कालस्य चानुपादेयतयानङ्गस्यापि निमि-त्तानुप्रवेशात्तथैवमिति चेत्। न। इहापि रमणीयचरणा

इत्यादेर्मुख्यार्थत्वानुरोधात्तदुपपत्तेः। तत् किमिदानीमुपसंहारानुरोधेनोपक्रमः सङ्कोचयितव्यः। नेत्युच्यते। नह्यसावुपसंहारानुरोधेऽप्यसङ्कुचद्वृत्तिरुपपत्तुमर्हति। नहि यावन्तः सम्पाता यावतां वा पुंसां सम्पातास्ते सर्वे तच्चेष्टादिकारिणा भोगेन क्षयं नीयन्ते। पुरुषान्तराश्रयाणां कर्माशयानां तद्भोगेन क्षयेऽतिप्रसङ्गात्। चिरोपभुक्तानाञ्च कर्माशयानामसतां चन्द्रमण्डलोपभोगेनानपनयनात्। तथा च स्वयं सङ्कुचन्ती यावच्छ्रुतिरुपसंहारानुरोधप्राप्तमपि सङ्कोचनमनुमन्यते। एतेन यत् किञ्चेह करोतीत्यपि व्याख्यातम्। अपि चेष्टापूर्त्तकारीह जन्मनि केवलं न तत्रासमकार्षीत्। अपि तु गोदोहनेनापः प्रणयन् पशुफलमप्यपूर्वं समचैषीदेवमहर्निशं च वाङ्मनःशरीरचेष्टाभिः पुण्यापुण्यमिहामुत्रोपभोग्यं मचिनुतवतो न सत्यलोकादिभोग्यं चन्द्रलोके भोग्यं भवितुमर्हति। न च स्वफलाभोगिनोऽनुशयस्य ऋते प्रायश्चित्तादात्मज्ञानाद्वाऽदत्तफलस्य ध्वंसः सम्भवति। तस्मात्ते नानुशयेनायमनुशयवान् परावर्त्तत इति स्थितम्। न चैकभविकः कर्माशय इत्ययं भाष्यकृद्वक्ष्यति। अन्ये तु सकलकर्मक्षये पराप्राप्तिशङ्का निर्वीजेति मन्यमाना अन्यथाधिकरणं वर्णयाञ्चक्रुरित्याह। "केचित्तावदाहुः" इति। अनुशयोऽत्र दत्तफलस्य कर्मणः शेष उच्यते। तत्रेदमिह विचार्यते, किं दत्तफलानामिष्टापूर्त्तकर्मणामवशेषादिहावर्त्तन्ते उत तान्युपभोगेन निरवशेषं क्षपयित्वाऽनुपभुक्तकर्मवशादिहावर्त्तन्त इति। तत्रेष्टादीनां भोगेन समूलकाषं कषितत्वान्निरनुशया एवानुभुक्तकर्मवशादावर्त्तन्त इति प्राप्त उच्यते। "सानुशया एवावर्त्तन्ते" इति। कुतः। दृष्टानुसारात्। यथा भाण्डस्थे मधुनि सर्पिषि वा क्षालितेऽपि भाण्डलेपकं तच्छेषं मधु वा

सपिर्शो न चालयितुं शक्यमिति दृष्टमेवं तदनुसारादेतदपि प्रतिपत्तव्यम्। न चावशेषमात्राच्चन्द्रमण्डले तिष्ठासन्नपि स्थातुं पारयति। यथा सेवको हास्तिकाश्वीयपदातिव्रातपरिवृतो महाराजं सेवमानः कालवशाच्छत्रपादुकावशेषो न सेवितुमर्हतीति दृष्टं तन्मूला च लौकिकी स्मृतिरिति दृष्टस्मृतिभ्यां सानुशया एवावर्त्तन्त इति। तदेतद्दूषयति। "न चैतदिति"। एवकारे प्रयोक्तव्ये इवकारो गुडजिह्विकया प्रयुक्तः शास्त्रैकगम्येऽर्थे न सामान्यतोऽदृष्टानुमानावसर इत्यर्थः। शेषमतिरोहितार्थम्। पूर्वपक्षहेतुमनुभाषते। "यदप्युक्तं प्रायणम्" इति। दूषयति। "तदप्यनुशयसद्भावे" इति। रमणीयचरणाः कपूयचरणा इत्यादिकयानुशयप्रतिपादनपरया श्रुत्या विरुद्धमित्यर्थः। "अपि च" इत्यादि। इह जन्मनि हि पर्य्यायेण सुखदुःखे भुज्यमाने दृश्येते युगपच्चैकप्रघट्टकेन। प्रायणेन सुखदुःखफलानि कर्माणि व्यज्येरन्। युगपदेव तत्फलानि भुज्येरन्। तस्मादुपभोगपर्य्यायदर्शनाद्बलीयसा दुर्बलस्याभिभवः कल्पनीयः। एवं विरुद्धजातिनिमित्तोपभोगफलेष्वपि कर्मसु द्रष्टव्यम्। न चाभिव्यक्तस्य कर्मफलं न दत्त इति च सम्भवति। फलोपजननाभिमुख्यं हि कर्मणामभिव्यक्तिः। अपि च प्रायणस्याभिव्यञ्जकत्वे स्वर्गनरकतिर्य्यग्योनिगतानां जन्तूनां तस्मिन् जन्मनि कर्मस्वनधिकारान्नापूर्वकर्मोपजननः पूर्वकृतस्य कर्माशयस्य प्रायणाभिव्यक्ततया फलोपभोगेन प्रक्षयान्नास्ति तेषां कर्माशय इति न ते संसरेयुः। न च मुच्येरन्नात्मज्ञानाभावादिति कष्टामवस्थाविशिष्टां दशाम्। न च स्वसमवेतमेव प्रायणेनाभिव्यज्यतेऽपूर्वं न परसमवेतं येन पित्रादिगतेन कर्मणा वर्त्तेरन्निति। शेषं सुगमम्॥

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥**

अनेन निरनुशया एवावरोहन्तीति पूर्वपक्षबीजं निगूढमुद्भाव्य निरस्यति। यद्यपि

'अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च ज्ञानञ्च शीलमेतद्विदुर्बुधाः॥' इति।

स्मृतेः शीलमाचारोऽनुशयाद्भिन्नस्तथाप्यस्यानुशयात्मनयाऽनुशयोपलक्षणत्वं कार्ष्णाजिनिराचार्यो मेने। तथा च रमणीयचरणाः कपूयचरणा इत्यनेनानुशयोपलक्षणात्सिद्धमानुशयानामेवावरोहणमिति॥

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**

'आचारहीनं न पुनन्ति वेदाः' इति हि स्मृत्या वेदपदेन वेदार्थमुपलक्षयन्त्या वेदार्थानुष्ठानशेषत्वमाचारस्योक्तं न तु स्वतन्त्र आचारः फलस्य साधनं, तेन वेदार्थानुष्ठानोपकारकतयाऽऽचारस्य नानर्थक्यं क्रत्वर्थस्य। तदनेन समिदादिवदाचारस्य क्रत्वर्थमुक्तं, सम्प्रति स्नानादिवत्पुरुषार्थत्वे पुरुषसंस्कारत्वेऽप्यदोष इत्याह। "पुरुषार्थत्वेऽप्याचारस्य" इति। तदेव चरणशब्देनाचारवाचिना सर्वोऽनुशयो लक्षित इत्युक्तम्॥ बादरिस्तु मुख्य एव चरणशब्दः कर्मणीत्याह।

**सुकृतदुष्कृते एवेति बादरिः ॥ ११ ॥**

ब्राह्मणपरिव्राजकन्यायो गोबलीवर्दन्यायः। शेषमतिरोहितार्थम्॥

**अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥**

ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति कौषीतकिनां समाम्नानाद्‌ द्वारान्तरस्य च चन्द्रलोकगमनमन्तरेणानुपपत्तेः। पञ्चम्यामाहुतावित्याहुतिसंख्यानियमात्।

तथाहि द्युसोमवृष्ट्यन्नरेतःपरिणामक्रमेण ता एवापो योषि-
दग्नौ हुताः पुरुषवचसो भवन्तीत्यविशेषेण श्रुतम्। न
चैतदनुष्ठाभिप्रायं कपूयचरणाः श्वयोनिमित्यननुष्ठस्यापि
श्रवणात्। गमनागमनाय च देवयानपितृयाणयोरेव मार्ग-
योराम्नानात् पथ्यन्तरस्याश्रुतेर्जायस्वम्रियस्वेति तृतीयं स्थान-
मिति च स्थानत्वमात्रेणावगमात् पथित्वेनाप्रतीतेः। चन्द्र-
लोकादवतीर्णानामपि च तत्स्थानत्वमप्यवादसम्पूरणेन प्रति-
वचनोपपत्तेः। अनन्यमार्गतया च तद्योगविरहिणामपि
ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवत् संयमनादिषु यम-
वश्यतायै चन्द्रलोकगमनोपपत्तेः। न कतरेण च नैतस्या-
संपूरणप्रतिपादनपरतया मार्गद्वयनिषेधपरत्वाभावात्। अनि-
ष्टादिकारिणामपि चन्द्रलोकगमने प्राप्तेऽभिधीयते। सत्यं
स्थानतयाऽवगतस्य न मार्गत्वं तथापि वेत्थ यथाऽसौ लोको न
संपूर्यत इत्यस्य प्रतिवचनावसरे मार्गद्वयनिषेधपूर्वं तृतीयं
स्थानमभिवदन् असम्पूरणाय तत्प्रतिपत्तिमाचष्टेत। यदि पुन-
स्तेनैव मार्गेणागत्य जन्ममरणप्रबन्धवत् स्थानमध्यासीत् नैतत्तृ-
तीयं स्थानं भवेत्। नचेष्टादिकारिणश्चन्द्रमण्डलादवरुह्य
रमणीयां निन्दितां वा योनिं प्रतिपद्यमानास्तृतीयं स्थानं
प्रतिपद्यन्ते तत् कस्य हेतोः पितृयाणेन पथाऽवरोहणात्। तद्यदि
क्षुद्रजन्तवोऽप्यनेनैव पथाऽवरोहेयुः। नैतदेषां जन्ममरणप्रबन्ध-
वत् तृतीयं स्थानं भवेत्। ततोऽवगच्छामः, संयमनं सप्त च
यातना भूमीर्यमवश्यतया प्रतिपद्यमाना अनिष्टादिकारिणो
न चन्द्रमण्डलादवरोहन्तीति। तस्माद्ये वैके चेतीष्टादिकारि-
विषयं न सर्वविषयं पञ्चम्यामाहुताविति च स्वार्थविधानपरं न
पुनरपञ्चम्याहुतिप्रतिषेधपरमपि, वाक्यभेदप्रसङ्गात्। संयमने
त्वनुभूयेति सूत्रेणावरोहापादानतया संयमनस्योपादानाच्चन्द्र-

मशकत्वापादाननिषेध प्राप्तमः। तथा च सिद्धान्तसूत्रमेव। पूर्वपक्षसूत्रत्वे तु शङ्कान्तराध्याहारेण कथञ्चिद्गमयितव्यम्। जीवजं जरायुजम्। संशोकजं संस्वेदजम्॥

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

यद्यपि यथैतमाकाशमाकाशाद्वायुमित्यतो न तादात्म्यं स्फुटमवगम्यते तथापि वायुर्भूत्वेत्यादेः स्फुटतरतादात्म्यावगमाद् यथैतमाकाशमित्यत्रापि तादात्म्य एवावतिष्ठते। न चान्यस्यान्यभावानुपपत्तिः। मनुष्यशरीरस्य नन्दिकेश्वरस्य देवदेहरूपपरिणामस्मरणाद्देवदेहस्य च नहुषस्य तिर्यक्त्वस्मरणात्। तस्मान्मुख्यार्थपरित्यागेन न गौणी वृत्तिराश्रयणीया। गौण्यां च वृत्तौ लक्षणाशब्दः प्रयुक्तो गुणे लक्षणायाः सम्भवात्। यथाहुः॥

'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता'। इति। एवं प्राप्ते ब्रूमः। "साभाव्यापत्तिः"। समाना भावो रूपं येषां ते समाभावास्तेषां भावः साभाव्यं सारूप्यं सादृश्यमिति यावत्। कुतः। उपपत्तेः। एतदेव व्यतिरेकमुखेन व्याचष्टे। "न ह्यन्यस्यान्यभाव उपपद्यते"। युक्तमेतद्यदेव शरीरमजगरभावेन परिणमते देवदेहसमयेऽजगरशरीरस्याभावात्। यदि तु देवाजगरशरीरे समसमये स्यातां न देवशरीरमजगरशरीरं शिल्पिशतेनापि क्रियते। नहि दधिपयसी समसमये परस्परात्मनी शक्ये सम्पादयितुं, तथेहापि सूक्ष्मशरीराकाशयोर्युगपद्भावान्न परस्परात्मत्वं भवितुमर्हति। एवं वाय्वादिष्वपि योज्यं, तथा च तद्भावस्तत्सादृश्येनौपचारिको व्याख्येयः। नन्वाकाशभवेन संयोगमात्रं लक्ष्यतां किं सादृश्येनेत्यत आह। "विभुत्वाद्वाकाशेन" इति॥

## नातिचिरेण विशेषात् ॥ २३ ॥

दुर्निष्प्रपततरमिति दुःखेन निस्सरणं सूते न तु विलम्बेनेति मन्यते पूर्वपक्षी। विना स्थूलशरीरं न सूक्ष्मशरीरे दुःखभागीति दुर्निष्प्रपतरं विलम्बं लक्षयतीति राद्धान्तः।

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

आकाशसारूप्यं वायुधूमादिसम्पर्कोऽनुशयिनामुक्तः इदं-दानीं व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त इति श्रूयते। तत्र संशयः। किमनुशयिनां भोगाधिष्ठानं व्रीहियवादयः स्थावरा भवन्ति, आहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेष्वेषु संसर्गमात्रमनुभवन्तीति। तत्र मनुष्यो जायते, देवो जायते इत्यादौ प्रयोगे जनेः शरीरपरिग्रहे प्रसिद्धत्वादत्रापि व्रीह्यादिशरीरपरिग्रह एव जनिमुख्यार्थ इति व्रीह्यादिशरीरा एवानुशयिन इति युक्तम्। न च रमणीयचरणाः कपूयचरणा इतिवत् कर्मविशेषासङ्कीर्तनात्तदभावे व्रीह्यादीनां शरीरभावाभावात् क्षेत्रज्ञान्तराधिष्ठितानामेव यत्सम्पर्कमात्रमिति साम्प्रतम्। इष्टादिकारिणामिष्टादिकर्मसंकीर्तनादिष्टादेश्च हिंसादोषदूषितत्वेन सावद्यफलतया चन्द्रलोकभोगानन्तरं स्थावरशरीरभोग्यदुःखफलस्याप्युपपत्तेः। न च न हिंस्यात्सर्वा भूतानीति सामान्यशास्त्रस्याग्नीषोमीयपशुहिंसाविषयविशेषशास्त्रेण बाधनं सामान्यशास्त्रस्य हिंसासामान्यद्वारेण विशेषोपसर्पणं विलम्बेनेति साक्षाद्विशेषस्पृशः शास्त्रात् शीघ्रतरप्रवृत्ताद् दुर्बलत्वादिति साम्प्रतम्। नहि बलवदित्येव दुर्बलं बाधते, किन्तु सति विरोधे। न चेहास्ति विरोधः, भिन्नगोचरचारित्वात्। अग्नीषोमीयं पशुमालभेतेति हि क्रतुप्रकरणे समाम्नातं क्रत्वर्थतामस्य गमयति न त्वपनयति निषेधापादि-

तामस्य पुरुषं प्रत्यनर्थहेतुतां तेनास्तु निषेधादस्य पुरुषं प्रत्यनर्थहेतुता विधेश्च क्रत्वर्थता को विरोधः । यथाहुः ।

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् ।

न क्रतोस्तत्र वैगुण्यं यथा चोदितसिद्धितः ॥ इति ।

तस्माज्ज्योतिष्टोमाङ्गहिंसाकारिणो वीह्यादिशरीरा अनुशयिनो जायन्त इति प्राप्तेऽभिधीयते । भवेदेतदेवं यदि रमणीयचरणाः कपूयचरणा इतिवद् व्रीह्यादिष्वनुशयवतां कर्मविशेषः कीर्त्येत । न चैतदस्ति । न चेष्टादेः कर्मणः स्थावरशरीरोपभोग्यद् खफलप्रसवहेतुभावः सम्भवति, तस्य धर्मत्वेन सुखैकहेतुत्वात् । न च तद्गतायाः पशुहिंसाया न हिंस्यादिति निषेधात् क्रत्वर्थाया अपि दुःखफलत्वसम्भवः । पुरुषार्थाया एव न हिंस्यादिति प्रतिषेधात् । तथाहि । न हिंस्यादिति निषेधस्य निषेध्याधीननिरूपणतया तदर्थं निषेध्यं तदर्थ एव निषेधो विज्ञायते । न चैतस्यानृतं वदेन्न तो पशो करोतीतिवत् कस्यचित्प्रकरणे समाम्नातं येनानृतवदनवदस्य निषेधस्य क्रत्वर्थत्वे निषेधोऽपि क्रत्वर्थः स्यात् । यथा निषिद्धयोराज्यभागयोः क्रत्वर्थत्वेन निषेधस्यापि क्रत्वर्थत्वं भवेत् । एवं हि मन्त्राज्यभागरहितैरप्युङ्गान्तरैराज्यभागसाध्यः क्रतूपकारो विज्ञायते । तस्मादनारभ्याधीतेन न हिंस्यादित्यनेनाभिहितस्य विधूपहितस्य पुरुषव्यापारस्य विधिविभक्तिविरोधाद् दुःखात्मकपकृत्यर्थहिंसाकर्मभाव्यत्वपरित्यागेन पुरुषार्थ एव भाव्योऽवतिष्ठते । आख्यातानभिहितस्यापि पुरुषस्य कर्तृव्यापाराभिधानद्वारेणोपस्थापितत्वात् केवलं तस्य रागतः प्राप्तत्वात्तदनुवादेन नञर्थं विधिरूपसंक्रामति, तेन पुरुषार्थो निषेध्य इति तदधीननिरूपणो निषेधोऽपि पुरुषार्थो भवति । तथा चायमर्थः सम्पद्यते यत् पुरुषार्थं हननं तन्न कुर्यादिति ।

क्रत्वर्थस्यापि च निषेधे हिंसायाः क्रतूपकारकत्वमपि कल्पेरत। न च दृष्टे पुरुषोपकारकत्वे प्रत्यर्थिनि सति तत्कल्पनावसरम्। न च स्वातन्त्र्यपारतन्त्र्ये घटतः संयोगपृथक्त्वादिरतादिवदेकत्र सम्भवतः। तस्मात् पुरुषार्थप्रतिषेधो न क्रत्वर्थत्वमप्यास्कन्दतीति शुद्धसुखफलत्वमेवेष्टादीनां न स्थावरशरीरोपभोग्यदुःखफलत्वमपीति। आकाशादिष्विव कर्मव्यापारमन्तरेणाभिलापात्। अनुशयिनां व्रीह्यादिसंयोगमात्रं न तु देहत्वमिति। अयमेवार्थ उक्तार्थापवादकथनेनोपलक्षितः। अपि च मुख्यं ऽनुशयिनां व्रीह्यादिजन्मनीति व्रीह्यादिभावमापन्नाः खल्वनुशयिनः पुरुषैरुपभुक्ता रेतःसिग्भावमनुभवन्तीति श्रूयते। तदेतद् व्रीह्यादिदेहत्वेऽनुशयिनां नोपपद्यते। व्रीह्यादिदेहत्वे हि व्रीह्यादिषु लूनेष्ववहतेष्वात्मना फलीकृतेषु च व्रीह्यादिदेहविनाशादनुशयिनः प्रवसेयुरिति कथमनुशयिनां रेतःसिग्भावः संसर्गमात्रे तु संसर्गिषु व्रीह्यादिषु नष्टेष्वपि न संसर्गिणोऽनुशयिनः प्रवसेयुरिति रेतःसिग्भाव उपपद्यते। शेषमुक्तम्॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

यथो जातो हि बालो न रेतःसिग्भवत्यपि तु चिरजातः प्रौढयौवनस्तस्मादपि संसर्गमात्रमिति गम्यते। तत्किमिदानीं सर्वत्रैवानुशयिनां संसर्गमात्रं तथा च रमणीयचरणा इत्यादिषु तथाभाव आपद्यतेति, नेत्याह॥

## योनेः शरीरम् ॥ २७ ॥

सुगमम्।

इति श्रीवाचस्पतिमिश्रविरचितायां भामत्यां तृतीयस्याध्यायस्य प्रथमः पादः॥

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

इदानीं तु तस्यैव जीवस्यावस्थाभेदः स्वयंज्योतिष्ट्वसिद्ध्यर्थं प्रपञ्च्यते। "किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयी" इति। यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागतयोरुभयोरपि सर्गयोर्मायामयत्वं तथापि यथा जाग्रत् सृष्टिर्ब्रह्मात्मभावसाक्षात्कारात्प्रागनुवर्त्तते। ब्रह्मात्मभावसाक्षात्कारात्तु निवर्त्तते। एवं किं स्वप्नसृष्टिराहोस्वित् प्रतिदिनमेव निवर्त्तत इति विमर्शार्थः। "द्वयोः" इहलोकपरलोकस्थानयोः। सन्धौ भवं सन्ध्यम्। ऐहलौकिकचक्षुराद्यव्यापाराद्रूपादिसाक्षात्कारोपजननाच्चैहलौकिकं पारलौकिकेन्द्रियादिव्यापारस्य च भविष्यतोऽप्रत्युत्पन्नत्वेन न पारलौकिकम्। न च न रूपादिसाक्षात्कारोऽस्ति स्वप्नदृशस्तस्मादुभयोर्लोकयोरस्यान्तरालत्वमिति ब्रह्मात्मभावसाक्षात्कारात्प्राक् तथ्यरूपैव सृष्टिर्भवितुमर्हति। अयमभिसन्धिः। इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणं तेषां सत्यत्वं प्रतिज्ञायते। प्रकृतोपयोगितया तु स्वप्नज्ञानमुदाहृतम्। ज्ञानं यमर्थमवबोधयति स तथैवेति युक्तम्। तथाभावस्य ज्ञानारोहात्। अतथात्वस्य त्वप्रतीयमानस्य तथाभावप्रमेयविरोधेन कल्पनास्पदत्वात्। बाधकप्रत्ययादतथात्वमिति चेत्। न। तस्य बाधकत्वासिद्धेः, समानगोचरे हि विरुद्धार्थोपसंहारिणी ज्ञाने विरुध्येते। बलवदबलवत्त्वानिश्चयाच्च बाध्यबाधकभावं प्रतिपद्येते। न चेह समानविषयत्वं, कालभेदेन व्यवस्थोपपत्तेः। यथा हि क्षीरं दृष्टं कालान्तरे दधि भवति, एवं रजतं दृष्टं कालान्तरे शुक्तिर्भवेत्। नानारूपं वा तद्वस्तु। तत्र च तीव्रातपक्रान्तिदूषितं चक्षुः स तस्य रजतरूपतां गृह्णाति। यस्य तु केवल-

मालोकमात्रोपकृतं, न तस्यैव शुक्तिरूपतां गृह्णाति। एवमुत्पलमपि नीललोहितं दिवा सौरीभिर्भाभिरभिव्यक्तं नीलतया गृह्यते। प्रदीपाभिव्यक्तन्तु तत्तु लोहिततया। एवमस्यां निद्रायां मनोऽपि रथादीन् न गृह्णाति निद्राणन्तु गृह्णातीति सामग्रीभेदाद्वा कालभेदाद्वा विरोधाभावः। नापि पूर्वोत्तरयोर्बलवदबलवत्त्वनिर्णयः। द्वयोरपि स्वगोचरचारितया समानत्वेन विनिगमनाहेतोरभावात्। तस्मादुभयमविरोधो व्यवस्थापनीयः। तत्सिद्धमेतत्। विवादास्पदं प्रत्ययाः सत्याः प्रत्ययत्वाज्जाग्रत्स्तम्भादिप्रत्ययवदिति। इममर्थं श्रुतिरपि दर्शयति। 'अथ रथान् रथयोगान् पथः सृजते' इति। न च न तत्र रथा न रथयोगा न पन्थानो भवन्तीति विरोधादुपचरितार्था सृजत इति श्रुतिर्व्याख्येया। सृजत इति हि श्रुतेः, तच्छ्रुतिसंवादात्प्रमाणान्तरसंवादाच्च। बलीयस्त्वेन तदनुगुणतया न तत्र रथा इत्यस्या भाक्तत्वेन व्याख्यानात्। जाग्रदवस्थादर्शनयोग्या न सन्ति न तु रथा न सन्तीति। अत एव कर्तृश्रुतिः शाखान्तरश्रुतिवदाञ्जसा। प्राज्ञकर्तृकत्वाच्चास्य पारमार्थिकत्वं वियदादिसर्गवत्। न च जीवकर्तृकत्वान्न प्राज्ञकर्तृकत्वमिति साम्प्रतम्। अन्यत्र धर्मादन्यत्राधर्मादिति प्राज्ञस्यैव प्रकृतत्वाज्जीवकर्तृकत्वेऽपि च प्राज्ञादभेदेन जीवस्य प्राज्ञत्वात्। अपि च जाग्रत्प्रत्ययसंवादवन्तोऽपि स्वप्नप्रत्ययाः केचिद् दृश्यन्ते। तद्यथा। स्वप्ने शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणायनः प्रियव्रतं प्रत्याह प्रियव्रत! पञ्चमेऽहनि प्रातरुर्वराप्रायभूमिदानेन नरपतिस्त्वां मानयिष्यतीति, स च जाग्रत्तथाऽऽत्मनो मानमनुभूय स्वप्नप्रत्ययं सत्यमभिमन्यते। तस्मात्सन्ध्ये पारमार्थिकी सृष्टिरिति प्राप्ते, उच्यते।

मायामात्रन्तु कार्त्स्न्येनानभिव्यक्त-
स्वरूपत्वात् ॥ ३ ॥

इदमत्राकूतम् । न तावत् क्षीरस्येव दधि रजतस्य परिणामः शुक्तिः सम्भवति । नहि शालीनगृहे चिरस्थितान्यपि रजतभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते । न चैतस्य रजतानुभवसमयेऽन्योऽनाकुलेन्द्रियो न तस्य शुक्तिभावमनुभवति प्रत्येति च । न चोभयरूपं वस्तु सामग्रीभेदात् कदाचिदस्य तोयभावोऽनुभूयते कदाचिन्मरीचिर्भवतीति साम्प्रतम् । पारमार्थिके ह्यस्य तोयभावे तत्साध्यामुदन्योपशमलक्षणामर्थक्रियां कुर्यान्मरीचिसाध्यामपि रूपप्रकाशलक्षणाम् । न मरीचिभिः कश्चित् तृष्णजा उदन्योपशाम्यति । न च तोयमेव द्विविधमुदन्योपशमनमनदुपशमनञ्चेति युक्तम् । तदर्थक्रियाकारित्वव्याप्तं तोयत्वं माययापि तामकुर्वत्तोयमेव न स्यात् । अपि च तोयप्रत्ययसमीचीनत्वयोरस्य द्वैविध्यमभ्युपेयते तथाभ्युपगमेऽपि न सेद्धुमर्हति । तथाहि समर्थविषया प्रतितोयमेतदिति मन्वानो न तृष्णयापि मरीचितोयमभिधावेत् । यथा मारीचीतनुभवन् । यथाशास्त्रं शास्त्रमभिमन्यमानोऽभिधावति । किमपरावं मरीचिषु तोयविपर्य्यासेन सर्वजनीनेन यत्समतिलङ्घ्य विपर्य्यासान्तरं कल्प्यते । न च क्षीरदधिप्रत्ययवदाचार्य्यमातुलब्राह्मणप्रत्ययवद्वा तोयमरीचिविज्ञाने समुच्चितावगाहिनी स्वानुभवात्परस्परविरुद्धयोर्बाध्यबाधकभावावभासनात् । तथापि रजतज्ञानं पूर्वमुत्पन्नं बाध्यमुत्तरन्तु बाधकं शुक्तिज्ञानं प्राप्तिपूर्वकत्वात् प्रतिषेधस्य । रजतज्ञानात् प्राक् प्रापकाभावेन शुक्ते रजततायाः प्रतिषेधा-

सम्भवात् पूर्वज्ञानप्राप्तं तु रजतं शुक्तिज्ञानमपबाधितुमर्हति । तदपबाधात्मकस्य चानुभवादवसीयते । यथाहुः ।

आगामित्वादबाधित्वा परं पूर्वं हि जायते ।
पूर्वं पुनरबाधित्वा परं नोत्पद्यते क्वचित् ॥

न च वर्त्तमानरजतावभासि ज्ञानं भविष्यत्तामस्या गोचरयद् भविष्यता स्वसमयवर्त्तिनीं शुक्तिं गोचरयता प्रत्यक्षेण बाध्यते कालभेदेन विरोधाभावादिति युक्तम् । न तावदस्य ज्ञानोत्पत्तौ भविष्यत्तां तत्पृष्ठभावि स्वसमानमुपकारहेतुभावमिवानति विनाशप्रत्ययोपनिपाते स्थेमानमाकलयति । असति विनाशप्रत्ययोपनिपाते रजतमिदं स्थिरं रजतत्वादनुभूतप्रत्यभिज्ञातरजतवत् । तथा च रजतगोचरं प्रत्यक्षं वस्तुतः स्थिरमेव रजतं गोचरयेत् । तथा च भविष्यच्छुक्तिकाज्ञानकालं रजतं व्याप्नुयादिति विरोधात् शुक्तिज्ञानेन बाध्यते । यथाहुः ।

रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते ।
भविष्यच्छुक्तिकाज्ञानकालं व्याप्नोति तेन तत् ॥ इति ।

प्रत्यक्षेण चिरस्थायीति गृह्यत इति केचिद् व्याचक्षते । तदयुक्तं, यदि चिरस्थायित्वं योग्यता न सा प्रत्यक्षगोचरः शक्तेरतीन्द्रियत्वात् । अथ कालान्तरव्यापित्वं, तदप्ययुक्तं, कालान्तरेण भविष्यतेन्द्रियस्य संयोगायोगात् तदुपहितस्थैर्यव्यापित्वस्यातीन्द्रियत्वात् । न च प्रत्यभिज्ञाप्रत्ययवदत्रास्ति संस्कारः सहकारी येनावर्त्तमानमप्याकलयेत् । तस्मादत्यन्ताभ्यासवशेन प्रत्यक्षानन्तरं शीघ्रतरोत्पन्नविनश्वदवस्थानुमानसहितप्रत्यक्षाभिप्रायमेव चिरस्थायीति गृह्यत इति मन्तव्यम् । अत एवैतत्सूक्ष्मतरं कालव्यवधानमविवेचयन्तः सौगताः प्राहुः, द्विविधो हि विषयः प्रमाणस्य ग्राह्यश्चाध्यवसेयश्च । ग्राह्यश्च

एकः स्वप्नजयोऽध्यवसीयत स्वप्नाय इति। एतेन स्वप्नप्रत्ययो मिथ्यात्वेन व्याख्यातः। यत्तु, स्वप्नं स्वप्नदर्शनसूत्रं तथाख्या-ख्याता शाङ्करायणेनाख्याते संवादाभावात्। प्रियव्रतस्या-ख्यातसंवादस्तु काकतालीयो न स्वप्नज्ञानं प्रमाणयितुमर्हति। तादृशस्यैव बहुलं विसंवाददर्शनात्। दर्शितश्च विसंवादो भाष्यकृता कालदेशनिमित्तानभिव्यक्तिं विवृण्वता रजन्यां सुप्त इति रजनीसमयेऽपि हि भारताद्वर्षान्तरे केतुमालादौ वासरो भवतीति भारते वर्षे इत्यन्तम्॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ४॥

दर्शनं सूचकं तच्च स्वरूपेण सत्, अमत्तु दृश्यम्। अत एव स्त्रीदर्शनस्वरूपमाध्यावरमधातुविसर्गादयो जाग्रदवस्था-यामनुवर्तन्ते। स्त्रीभाष्यास्तु माल्यविलेपनदन्तक्षतादयो नानुवर्तन्ते। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापार इति। प्राज्ञव्यापारत्वं न पारमार्थिकत्वात्प्रमाणं प्रत्यक्षेण बाधकप्रत्यये-नाविकल्प्यमानं मात्मानं लभत इति भावः। बन्धमोक्षयोरा-न्तरालिकं तृतीयमैश्वर्यमिति। 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'देहयोगाद्वासोऽपि' इति सूत्रद्वयं कृतोपपादनमस्माभिः प्रथमसूत्रे। निगदव्याख्यातं चैतयो-र्भाष्यमिति।

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च॥ ७॥

इह हि नाडीपुरीततपरमात्मानो जीवस्य सुषुप्तावस्थायां स्थानत्वेन श्रूयन्ते। तत्र किमेषां स्थानानां विकल्प आहो-स्वित्समुच्चयः। किमतः, यद्येवम्। एतदतो भवति। यदा नाड्यो वा पुरीतद्वा सुषुप्तस्थानं तदा विपरीतपक्षनिवृत्तावपि न जीवस्य परमात्मभाव इति। अविद्यानिवृत्तावपि जीवस्य

परमात्मभावाय कारणान्तरमपेक्षितव्यं तच्च कर्मैव न तु तत्त्वज्ञानं विपरीतज्ञाननिवृत्तिमात्रेण तस्योपयोगात् विपरीतज्ञाननिवृत्तेश्च विनापि तत्त्वज्ञानं सुषुप्तावपि सम्भवात्। ततश्च कर्मणैवापवर्गो न ज्ञानेन। यथाहुः।

कर्मणैव तु संसिद्धिमास्थिता जनकादयः। इति।

यदि तु परमात्मैव नाड़ी पुरीतत्प्रभृतिद्वारा सुषुप्तिस्थानं ततो विपरीतज्ञाननिवृत्तेरस्ति मात्रया परमात्मभावोपयोगः। तथा हि तावदेव जीवस्तद्व्यवधानो भवति केवलम्। तत्त्वज्ञानाभावेन समूलकाषमविद्याया अकषणात् आपन्नस्वप्नलक्षणं जीवस्य व्युत्थानं भवति। तस्मात् प्रयोजनवत्येषा विचारणेति। किन्तावत्प्राप्तं, नाड़ीपुरीतत्परमात्मसु स्थानेषु सुषुप्तस्य जीवस्य नियमं प्रति विकल्पः। यथा बहुषु प्रासादेष्वेको नरेन्द्रः कदाचित् क्वचिन्निवसति कदाचित् क्वचिदेवमेको जीवः कदाचिन्नाड़ीषु कदाचित् पुरीतति कदाचिद् ब्रह्मणीति। यथा निरपेक्षा व्रीहियवाः क्रतुसाधनीभूतपुरोडाशप्रकृतितया श्रुता एकार्था विकल्पन्ते। एवं समस्तश्रुत्या वाऽऽयतनश्रुत्या वैकनिलयनार्थाः परस्परानपेक्षा नाड्यादयोऽपि विकल्पमर्हन्ति। यत्रापि नाड़ीभिः प्रत्यवसृप्य पुरीतति शेत इति नाड़ीपुरीततोः समुच्चयश्रवणं तथा तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति। अथास्मिन् प्राण एवैकधा भवतीति नाड़ीब्रह्मणोराधारयोः समुच्चयश्रवणम्। प्राणशब्दं च ब्रह्मायास्मिन् प्राणे ब्रह्मणि स जीव एकधा भवतीति वचनात्। तथाप्यासु तदा नाड़ीषु सृप्तो भवतीति च पुरीतति शेत इति च निरपेक्षयोर्नाड़ीपुरीततोराधारत्वेन निर्देशान्निरपेक्षयोरेवाधारत्वम्। इयांस्तु विशेषः। कदाचिन्नाड्य एवाधारः कदाचिन्नाड़ीभिः प्रत्यव-

माणस्य पुरोतदेव। एवं ताभिरेव मन्त्रमात्रस्य कदाचिन्मन्त्रो- वाधार इति सिद्धमाधारत्वं नाडीपुरीतत्परमात्मनामनपे- क्षत्वम्। तथा च विकल्पो व्रीहियववद् ब्रह्मद्वयन्तरवदिति प्राप्तम्। एवं प्राप्तेऽभिधीयते। जीव: समुच्चयेनैवैतानि नाड्या- दीनि स्वापायोपैति न विकल्पेन। अयमभिसन्धि:। नित्य- वदाम्नातानां यत् पाक्षिकत्वं नाम तदत्यन्तराभावे कल्प्यते। यथाहु:।

एवमेवोऽष्टदोषोऽपि यद् व्रीहियववाक्ययो:।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥ इति।

प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया हि परस्प- रानपेक्षौ व्रीहियवौ विहितौ शक्नुतस्तौ प्रत्येकं पुरोडा- शमभिनिर्वर्तयितुं, तत्र यदि मिश्राभ्यां पुरोडाशोऽभिनि- र्वर्त्येत परस्परानपेक्षव्रीहियवविधायकशास्त्रे उभे अपि शास्त्रे बाधेयातां। न चैतौ प्रयोगवचन: समुच्चेतुमर्हति न हि यथाविहितान्यङ्गान्यतिक्रम्य प्रवर्तमानो नैतान्यन्त्र- यितुं शक्नोति मिश्रणे नान्यथात्वमेतेषाम्। न चाङ्गानुरोधेन प्रधानाभ्यासो सोमवत् उभे कुर्यादिति युक्तम्। अयुतो ह्यत्र प्रधानाभ्यासोऽङ्गानुरोधेन च सोऽन्याय्य:। न चाङ्ग- भूतेन्द्रवायवाद्यनुरोधेन यथा प्रधानस्य सोमयागस्य आवृत्तिरेवमत्रापीति युक्तम्। सोमेन यजेतेति हि तत्रापूर्व- यागविधि:। तत्र च दशमुष्टिपरिमितस्य सोमद्रव्यस्य सोममभिषुणोति सोममभिप्लावयतीति च वाक्यान्तरानुलोच- नया इत्युद्धारेण यागसाधनीभूतस्येन्द्रवायवाद्युद्देशेन प्रादेश- मात्रे पृथक्पात्रेषु ग्रहणानि पृथक् प्रकल्पमानि संस्कारा विधीयन्ते न तु सोमयागोद्देशेनेन्द्रवायवादयो देवताश्चो- द्यन्ते येन तासां यागनिष्पत्तिलक्षणैकार्थत्वेन विकल्प:

स्यात्। न च प्रादेशमात्रमेवैकमूर्ध्वपात्रं दशमुष्टिपरिमितसोमरसग्रहणाय कल्पते येन तुल्यार्थतया ग्रहणानि विकल्पेरन्। न च यावन्मात्रमेकमूर्ध्वपात्रं व्याप्नोति तावन्मात्रं गृहीत्वा परिशिष्टं त्यज्येतेति युज्यते। दशमुष्टिपरिमितोपादानस्यादृष्टार्थत्वप्रसङ्गात्। एवं तदृष्टार्थं भवेद्यदि तदर्थं याग उपयुज्येत। न च दृष्टे सम्भवत्यदृष्टकल्पना न्याय्या, तस्मात्सकलस्य सोमरसस्य यागशेषत्वेन संस्कारार्हत्वादेकैकेन च ग्रहणेन सकलस्य संस्कर्तुमशक्यत्वात्तदवयवस्यैकेन संस्कारेऽवयवान्तरस्य ग्रहणान्तरेण संस्कार इति कार्यभेदाद् ग्रहणानि समुच्चीयेरन्। अत एव समुच्चयदर्शनं दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णातीति। समुच्चये च सति क्रमोऽप्युपपद्यते। आश्विनो दशमो गृह्यते तृतीयो हूयते। तथैवैन्द्रवायवादीन् ग्रहान् गृह्णातीति। तेषां च समुच्चये सति यावद्यदुद्देशेन गृहीतं तावत्तस्यै देवतायै त्यक्तव्यमित्यर्थादापन्नं भवितव्यम्। यदि पुनः पृथक्कृतान्यप्येकं सत्य कांचन देवतामुद्दिश्य त्यजेरन् पृथक्करणानि च देवत[illegible]गाद्या दृष्टार्था भवेयुः। न च दृष्टे सम्भवत्यदृष्टकल्पना न्याय्येत्युक्तम्। तस्मात्तत्र समुच्चयस्यावश्यम्भावित्वाद् ग्रहणानुरोधेनापि प्रधानाभ्यास आस्थीयते। इह त्वभ्यासकल्पनाप्रमाणाभावात् पुरोडाशद्रव्यस्य चानियमेन प्रकृतद्रव्ये यस्मिन् कस्मिंश्चित्प्राप्ते एकैका परस्परानपेक्षा व्रीहिश्रुतिर्यवश्रुतिश्च नियामिकैकार्थतया विकल्पमश्नुतः। न तु नाडीपुरीतत्परमात्मनामन्योन्यानपेक्षाणामेकनिलयनार्थसम्भवो येन विकल्पो भवेत्। नह्येकविभक्तिनिर्देशमात्रेणैकार्थता भवति समुच्चितानामप्येकविभक्तिनिर्देशदर्शनात् पर्यङ्के शेते प्रासादे शेत इति। तस्मादेकविभक्तिनिर्देशस्यानैकान्तिकत्वादन्यतो विनि-

गमना वक्तव्या। सा चोक्ता भाष्यकृता "यद्यपि निरपेक्षा इव नाडीः श्रुतिस्थानत्वेन श्रावयति" इत्यादिना। सापेक्षश्रुत्य-नुरोधेन निरपेक्षश्रुतिर्नेतव्या त्वर्थः। शेषमतिरोहितार्थम्। ननु यदि ब्रह्मैव नियमस्थानं तावन्मात्रमुच्यतां कृतं नाड्यु-पन्यासेनेत्यत आह। अपि चात्रेति। अपि चेति समुच्चये न विकल्पे। एतदुपपत्तिसहिता पूर्वोपपत्तिरर्थमाधिनोति। मार्गोपदेशोपयुक्तानां नाडीनां स्तुत्यर्थमत्र नाडीसङ्कीर्तन-मित्यर्थः। पित्तेनाभिव्याप्तकरणो न बाह्यान् विषयान् वेदेति तद्द्वारा सुखदुःखाभावेन तत्कारणपापास्पर्शेन नाडीस्तुतिः। यदा तु तेजो ब्रह्म तदा सुगमम्। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवतीत्ययमर्थः। अभ्युपेत्य जीवस्या-धेयत्वमिदमुक्तम्। परमार्थतस्तु न जीवस्याधेयत्वमस्ति। तथाहि। नाड्यः पुरीतद्वा जीवस्योपाधीनां करणानामाश्रयः। जीवस्तु ब्रह्माव्यतिरेकात् स्वमहिमप्रतिष्ठः। न चापि ब्रह्मजीवस्याधारस्तादात्म्यादिकल्पया तु व्यतिरेकं ब्रह्मण आधा-रत्वमुच्यते जीवं प्रति। तथा च सुषुप्तावस्थायामुपाधीनाम-समुदाचाराज्जीवस्य ब्रह्मात्मत्वमेव ब्रह्माधारत्वं न तु नाडीपुरी-तदाधारत्वम् तदुपाधिकरणमात्राधारतया तु सुषुप्तदशारम्भाय जीवस्य नाडीपुरीतदाधारत्वमित्यतुल्यार्थतया न विकल्प इति। "अपि च न कदाचिज्जीवस्येति"। औत्सर्गिकं ब्रह्मस्वरूपत्वं जीवस्यासति जाग्रत्स्वप्नदशारूपेऽपवादे सुषुप्तावस्थायां नान्य-थयितुं शक्यमित्यर्थः। अपि च येऽपि स्थानविकल्पमा-श्रिषत तैरपि विशेषविज्ञानोपशमलक्षणा सुषुप्त्यवस्था-ऽभ्युपगन्तव्या। न चेयमात्मतादात्म्यं विना नाड्यादिषु पर-मात्मव्यतिरिक्तेषु स्थानेषूपपद्यते। तत्र हि स्थितोऽयं जीव आत्मव्यतिरेकाभिमानी सन्नवश्यं विशेषज्ञानवान् भवेत्।

तथाहि श्रुतिः। 'यत्र वान्यदिव स्यात्तत्रान्योऽन्यत् पश्येत्' इति। आत्मस्थानत्वं त्वदाह। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कम्पश्येद्विजानीयात्' इति श्रुतिः। तस्मादप्यात्मस्थानत्वस्य द्वारं नाड्यादीत्याह। "अपि च स्थानविकल्पाभ्युपगमेऽपि" इति। अत्र चोदयति। "ननु भेदविषयस्यापि" इति। भिद्यत इति भेदः। भिद्यमानस्यापि विषयस्येत्यर्थः। परिहरति। "वाढमेवं स्यात्" इति। न तावज्जीवस्यास्ति स्वतः परिच्छेदस्तस्य ब्रह्मात्मत्वेन विभुत्वात्। औपाधिके तु परिच्छेदे यत्रोपाधिरसन्निहितस्तन्मात्रं न जानीयान्न तु सर्वम्। नह्यनवधानात् सुमेरुमविद्वान् देवदत्तः सन्निहितमपि न वेद। तस्मात्सर्वविशेषविज्ञानप्रत्यस्तमयीं सुषुप्तिं प्रसाधयता तदास्य सर्वोपाध्युपसंहारो वक्तव्यः। तथा च सिद्धमस्य तदा ब्रह्मात्मत्वमित्यर्थः। गुणप्रधानभावेन समुच्चयो न समप्रधानतयाग्नेयादिवदिति वदन् विकल्पमप्यपाकरोति। "न च वयमिह" इति। स्वाध्यायाध्ययनविध्यापादितपुरुषार्थस्य वेदराशेरेकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तम्। न च सुषुप्तावस्थायां जीवस्य स्वरूपेण नाड्यादिस्थानत्वप्रतिपादने किञ्चित् प्रयोजनं ब्रह्मभूयप्रतिपादनं त्वस्ति। तस्मान्न समप्रधानभावेन समुच्चयो नापि विकल्प इति भावः। गतार्थमन्यत्॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः॥ ९॥

यद्यपीश्वरादभिन्नो जीवस्तथाप्युपाध्यवच्छेदेन भेदं विवक्षित्वाऽधिकरणान्तरारम्भः। स एवेति दुःसम्पादमिति स वान्यो वेति ईश्वरो वेति सन्देहमात्रेणोपन्यासः। नहि तस्य शुद्धमुक्तस्वभावस्याविद्याकृतव्यत्यासम्भवः। अत

एव विमर्शविषयस्यानुपन्यासः। यदि हि द्व्यहादिनिर्वर्त्तनीयमेकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्यास्ति स्मृतिरिति वक्तव्येऽनुः प्रत्यभिज्ञानसूचनार्थः। अत एव सोऽहमस्मीत्युक्तम्। "पुनः प्रतिन्यायं प्रतियोन्या द्रवति" इति। अयनम् आयः नियमेन गमनं न्यायः। जीवः प्रतिन्यायं सम्प्रसादे सुषुप्तावस्थायां बुद्धान्ताया द्रवति आगच्छति। प्रतियोनि योऽपि व्याघ्रयोनिः सुषुप्तो बुद्धान्तमागच्छन् स व्याघ्र एव भवति न जात्यन्तरम्। तदिदमुक्तम्, "त इह व्याघ्रो वा सिंहो वा" इति। "अथ तत्र सुप्त उत्तिष्ठति" इति। यो हि जीवः सुप्तः स शरीरान्तर उत्तिष्ठति। शरीरान्तरगतस्तु सुप्तजीवसम्बन्धिनि शरीर उत्तिष्ठति। ततश्च न शरीरान्तरे व्यवहारलोप इत्यर्थः। "अपि च न जीवो नाम परस्मादन्यः" इति। यथा घटाकाशो नाम न परमाकाशादन्यः। अथ चान्य इव यावद्घटमनुवर्त्तते। न चासौ दुर्विवेचस्तदुपाधेर्घटस्य विविक्तत्वात्। एवमनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवो न वस्तुतः परमात्मनो भिद्यते तदुपाध्युद्भवाभिभवाभ्यां चोद्भूत इवाभिभूत इव प्रतीयते। ततश्च सुषुप्तादावपि अभिभूत इव जाग्रदवस्थादिषूद्भूत इव तस्य चाविद्यातद्वासनोपाधेरनादितया कार्य्यकारणभावेन प्रवाहतः सुविवेचतया तदुपहितो जीवः सुविवेच इति ॥

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

विशेषविज्ञानाभावान्मूर्च्छा जाग्रत्स्वप्नावस्थाभ्यां भिद्यते पुनरुत्थानाच्च मरणावस्थायाः। अतः सुषुप्तिरेव मूर्च्छा विशेषविज्ञानाभावाविशेषात्। चिरानुच्छ्वासवेपथुप्रभृतयस्तु सुप्तेरवान्तरप्रभेदाः। तद्यथा। कश्चित्सुप्तोत्थितः प्राह सुखमहमस्वाप्सं

लघूनि मे गात्राणि प्रसन्नं मे मन इति, कश्चित् पुनर्दुःखम-स्वाप्सं गुरूणि मे गात्राणि भ्रमत्यनवस्थितं मे मन इति। न चैतावता सुषुप्तिर्भिद्यते। तथा विकारान्तरेऽपि मूर्च्छा न सुषुप्ताद्भिद्यते। तस्माल्लोकप्रसिद्धभावाच्चेयं पञ्चम्यवस्थेति प्राप्तम्। एवं प्राप्ते, उच्यते। यद्यपि विशेषविज्ञानोपशमेन मोहसुषुप्तयोः साम्यं तथापि नैक्यम्। नहि विशेषविज्ञानसद्भा-वसाम्यमात्रेण स्वप्नजागरयोरभेदः। वाह्येन्द्रियव्यापारभावाभा-वाभ्यां तु भेदे तयोः सुषुप्तमोहयोरपि प्रयोजनभेदात्कारण-भेदाल्लक्षणभेदाच्च भेदः। श्रमापनुत्त्यर्था हि ब्रह्मणा सम्पत्तिः सुषुप्तम्। शरीरत्यागार्था तु ब्रह्मणा सम्पत्तिर्मोहः। यद्यपि सत्यपि मोहे न मरणं तथाप्यसति मोहे न मरणमिति मर-णार्थो मोहः। मुसलसम्पातादिनिमित्तत्वान्मोहस्य श्रमादि-निमित्तत्वाच्च सुषुप्तस्य मुखनेत्रादिविकारलक्षणत्वान्मोहस्य प्रसन्नवदनत्वादिलक्षणभेदाच्च सुषुप्तस्य सुषुप्तस्य त्ववान्तरभेदेऽपि निमित्तप्रयोजनलक्षणाभेदादेकत्वं तस्मात् सुषुप्तमोहावस्थयो-र्ब्रह्मणा सम्पत्तावपि सुषुप्ते यादृशी सम्पत्तिर्न तादृशी मोह इत्यर्द्धसम्पत्तिरुक्ता, साम्यवैषम्याभ्यामर्द्धत्वम्। यदा चैतदव-स्थान्तरं तदा भेदात् तत्प्रविलयाय यत्नान्तरमास्थेयम्। अभेदे तु न यत्नान्तरमिति चिन्ताप्रयोजनम्॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥ ११॥

अवान्तरसङ्गतिमाह। "येन ब्रह्मणा सुषुप्तादिष्विति"। यद्यपि तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र निष्प्रपञ्चमेव ब्रह्मो-पपादितं तथापि प्रपञ्चलिङ्गानां बह्वीनां श्रुतीनां दर्शनाद्भवति पुनर्विचिकित्सा तदपवारणायारम्भस्तस्य च तत्त्वज्ञानमपव-

र्नोपपद्यतेति प्रयोजनवशात् विचारः। तत्रोभयलिङ्गश्रवणादुभयरूपत्वं ब्रह्मणः प्राप्तम्। तत्रापि सविशेषत्वनिर्विशेषत्वयोर्विरोधात् स्वाभाविकत्वानुपपत्तेरेकं स्वतोऽपरं तु परतः। न च यत् परतस्तदपारमार्थिकम्। नहि चक्षुरादीनां स्वतःप्रमाणभूतानां दोषतोऽप्रामाण्यमपारमार्थिकम्। विपर्य्ययज्ञानलक्षणकार्य्यानुत्पादप्रसङ्गात्। तस्मादुभयलिङ्गकशास्त्रप्रामाण्यादुभयरूपता ब्रह्मणः पारमार्थिकीति प्राप्ते, उच्यते। न स्थानत उपाधितोऽपि परस्य ब्रह्मण उभयचिह्नत्वसम्भवः। एकं हि पारमार्थिकमन्यदध्यारोपितं पारमार्थिकत्वे तूपाधिजनितस्य रूपस्य ब्रह्मणः परिणामो भवेत्। स च प्राक् प्रतिषिद्धस्तस्मात्परिशेषात् स्फटिकमणेरिव स्वभावस्वच्छधवलस्य लाक्षारसादिकोपाधेररुणिमा सर्वगन्धत्वादिरौपाधिको ब्रह्मण्यध्यस्त इति पश्यामः, निर्विशेषताप्रतिपादनार्थत्वाच्छ्रुतीनाम्। सविशेषतायामपि यश्चायमस्यां पृथिव्यां तेजोमय इत्यादीनां श्रुतीनां ब्रह्मैकत्वप्रतिपादनपरत्वाद् एकत्वनानात्वयोश्चैकस्मिन्नसम्भवाद् एकत्वाङ्गत्वेनैव नानात्वप्रतिपादनपर्य्यवसानात्। नानात्वस्य प्रमाणान्तरसिद्धतयानुवाद्यत्वादेकत्वस्य चानधिगतेर्विधेयत्वोपपत्तेर्भेददर्शननिन्दया च साक्षाद्भूयसीभिः श्रुतिभिरभेदप्रतिपादनाद् आकारवद् ब्रह्मविषयाणां च कासाञ्चिच्छ्रुतीनामुपासनापरत्वमनति बाधकेऽन्यपराद्वचनात्प्रतीयमानमपि त्यज्यते। यथा देवतानां विग्रहवत्त्वम्। सन्ति चात्र साक्षाद्द्वैतापवादेनाद्वैतप्रतिपादनपराः शतशः श्रुतयः कासाञ्चिच्च द्वैताभिधायिनीनां तत्प्रविलयपरत्वम्। तस्मान्निर्विशेषमेकरूपं चैतन्यैकरसं ब्रह्म परमार्थतोऽविशेषाच्च सर्वगन्धत्ववामनीत्वादय उपाधिवशादध्यस्ता इति सिद्धम्। शेषमतिरोहिता-

र्थम्। अत्र केचिदधिकरणं कल्पयन्तीति किं सत्त्वलक्षणं च प्रकाशलक्षणञ्च ब्रह्म किं सत्त्वलक्षणमेव ब्रह्मोत प्रकाशलक्षणमेवेति। तत्र पूर्वपक्षं गृह्णाति।

### प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

चकारात्सत्त्वं। अवैयर्थ्यात्। ब्रह्मविषयश्रुतेः। सिद्धान्तयति॥

### आह च तन्मात्रम् ॥ १६ ॥

प्रकाशमात्रं, नहि सत्त्वं नाम प्रकाशरूपादन्यत् यथा सर्वगतत्वादयोऽपि तु प्रकाशरूपमेव सदिति नोभयरूपत्वं ब्रह्मण इत्यर्थः। तदेतदनेनोपन्यस्य दूषितम्। सत्ताप्रकाशयोरेकत्वे नोभयलक्षणत्वम्। भेदेन त्वागतोपोऽपि निराकृतमिति नाधिकरणान्तरं प्रयोजयति। परमार्थतस्त्वभेद एव प्रकर्षप्रकाशवदिति। सर्वेषां च साधारणे प्रविलयार्थत्वे सत्यरूपवदेव हि तत्प्रधानत्वादिति विनिगमनकारणवचनमनवकाशं स्यात्। एवं हि तस्यावकाशः स्याद् यदि काश्चिदुपासनापरतया रूपमाचक्षीरन् काश्चिन्नीरूपब्रह्मप्रतिपादनपरा भवेयुः। सर्वासां तु प्रविलयार्थत्वे न नीरूपब्रह्मप्रतिपादनार्थत्वे उक्तो विनिगमनहेतुर्न स्यादित्यर्थः। एकविनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदित्यधिकाराभिप्रायम्। अनुबन्धभेदात्तु भिन्नोऽनयोरपि नियोग इति। "कोऽयं प्रपञ्चप्रविलयः" इति। वास्तवस्य वा प्रपञ्चस्य प्रविलयः सर्पिष इवाग्निसंयोगात्। समारोपितस्य वा रज्ज्वां सर्पभावस्येव रज्जुतत्त्वपरिज्ञानात्। न तावद्वास्तवः सर्वसाधारणः पृथिव्यादिप्रपञ्चः पुरुषमात्रेण शक्यः समुच्छेत्तुम्। अपि च प्रह्लादशुकादिभिः पुरुषधौरेयैः समूलमुन्मूलितः प्रपञ्च इति शून्यं जगद्भवेत्। न च वास्तवं तत्त्वज्ञानेन शक्यं समुच्छेत्तुम्। आरोपितरूपविरो-

धित्वात्तत्त्वज्ञानस्येत्युक्तम्। समारोपितरूपस्तु प्रपञ्चो ब्रह्मतत्त्वज्ञापनपरैरेव वाक्यैर्ब्रह्मतत्त्वमवबोधयद्भिः शक्यः समुच्छेत्तुमिति कृतमत्र विधिना। नहि विधिशतेनापि विना तत्त्वावबोधनम् प्रवर्त्तस्वात्मज्ञान इति वा कुरु प्रपञ्चप्रविलयं वेति प्रवर्त्तितः शक्नोति प्रपञ्चप्रविलयं कर्त्तुम्। न चास्यात्मज्ञानविधिं विना वेदान्तार्थब्रह्मतत्त्वावबोधो न भवति। मौलिकस्य स्वाध्यायाध्ययनविधेरेव विवक्षितार्थतया सकलस्य वेदराशेः फलवदर्थावबोधनपरतामापादयतो विद्यमानत्वादन्यथा कर्मविधिवाक्यान्यपि विध्यन्तरमपेक्षेरन्निति। न च चिन्तामात्रात्कारयोर्विधिरिति तत्त्वसमीक्षायामस्माभिरुपपादितम्। विस्तरेण चायमर्थस्तत्रैव प्रपञ्चितः। तस्माज्जनिलयवाक्या शृणुयादितिवद् विधिसरूपा एते आत्मा वा अरे द्रष्टव्य इत्यादयो न तु विधय इति। तदिदमुक्तं द्रष्टव्यादिशब्दा अपि तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना इति। अपि च ब्रह्मतत्त्वं निष्प्रपञ्चमुक्तं न तत्र नियोज्यः कश्चित् सम्भवति। जीवो हि नियोज्यो भवेत् स चेत् प्रपञ्चपक्षे वर्त्तते को नियोज्यस्तस्योच्छिन्नत्वात्। अथ ब्रह्मपक्षे, तथाप्यनियोज्यो ब्रह्मणोऽनियोज्यत्वात्। अथ ब्रह्मणोऽनन्योऽप्यविद्ययाऽन्य इवेति नियोज्यः। तदयुक्तम्। ब्रह्मभावं पारमार्थिकमवगमयतागमेनाविद्याया निरस्तत्वात्। तस्मान्नियोज्याभावादपि न नियोगः। तदिदमुक्तं "जीवो नाम प्रपञ्चपक्षस्यैव" इति। अपिच ज्ञानविधिपरत्वे तस्यावास्तु ज्ञानस्यानुत्पत्तेस्तत्त्वप्रतिपादनपरत्वमभ्युपगमनीयं तत्र वरं तत्त्वप्रतिपादनपरत्वमेवास्तु तस्यावश्याभ्युपगन्तव्यत्वेनोभयवादिसिद्धत्वात्। एवञ्च कृतं तत्त्वज्ञानविधिनेत्याह। "[illegible]याभिमुख्यस्यापि" इति। न च ज्ञानाधाने प्रमाणान-

द्वे एव ब्रह्मणो रूपे ब्रह्मणः परमार्थतोऽरूपस्याध्यारोपिते द्वे एव रूपे ताभ्यां हि तद्रूप्यते। ते दर्शयति। "मूर्तं चैवामूर्तं च"। समुच्चीयमानावधारणम्। तत्र पृथिव्यप्तेजांसि त्रीणि भूतानि ब्रह्मणो रूपं मूर्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं कठिनमिति यावत्। तस्यैव विशेषणान्तराणि मर्त्यं मरणधर्मकं स्थितमव्यापि परिच्छिन्नमिति यावत्। सदन्येभ्यो विशिष्यमाणमसाधारणधर्मवदिति यावत्। गन्धस्नेहोष्णतास्तान्योन्यव्यवच्छेदहेतवोऽसाधारणधर्मास्तस्यैतस्य ब्रह्मरूपस्य तेजोऽवयवस्य चक्षुर्विशेषणस्यैष रसः सारो य एष सविता तपति। अथामूर्तं वायुश्चान्तरिक्षं च तद्धि न कठिनमित्यमूर्तमेतदमृतममरणधर्मकं मूर्तं हि मूर्तान्तरेणाभिहन्यमानमवयवविश्लेषाद्ध्वंसते न तु तथाभावः सम्भवत्यमूर्तस्य। एतद्यदिति गच्छति व्याप्नोतीति एतत्त्यं नित्यपरोक्षमित्यर्थः। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् सवितृमण्डले पुरुषः। करणात्मको हिरण्यगर्भप्राणाह्वयस्त्यस्य ह्येष रसः सारो नित्यपरोक्षता च साम्यमित्यधिदैवतम्। अथाध्यात्ममिदमेव मूर्तं यदन्यत् प्राणान्तराकाशाभ्यां भूतत्रयं शरीरारम्भकमेतन्मर्त्यमेतत् स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रस इति। अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्याकाशः। एतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषस्त्यस्यैष रसः। लिङ्गस्य हि करणात्मकस्य हिरण्यगर्भस्य दक्षिणमक्ष्यधिष्ठानं श्रुतेरधिगतम्। तदेवं ब्रह्मण औपाधिकयोर्मूर्तामूर्तयोराध्यात्मिकाधिदैविकयोः कार्यकारणभावेन विभागो व्याख्यातः

मत्त्वदृश्यत्वाश्रययोः। अथेदानीं तस्य करणात्मनः पुरुषस्य लिङ्गस्य रूपं वक्तव्यम्। मूर्त्तामूर्त्तवासनाविज्ञानमयं विचित्रं मायामहेन्द्रजालोपमं तद्विचित्रैर्दृष्टान्तैरादर्शयति तद्यथा "माहारजनम्" इत्यादिना। एतदुक्तं भवति। मूर्त्तामूर्त्तवासनाविज्ञानमयस्य विचित्रं रूपं लिङ्गस्येति। तदेवं निरवशेषं सवासनं सत्यद्वयमुक्त्वा यत्तत्सत्यस्य सत्यमुक्तं ब्रह्म तत्स्वरूपावधारणार्थमिदमारभ्यते। यतः सत्यस्य रूपं निःशेषमुक्तमतोऽवशिष्टं सत्यस्य यत्सत्यं तस्यानन्तरं तदुक्ति-हेतुकं स्वरूपं वक्तव्यमित्याह। "अथात आदेशः"। कथ-नम्। सत्यमत्यस्य परमात्मस्तमाह। "नेति नेति"। एत-दर्थकथनार्थमिदमधिकरणम्। ननु किमेतावदेवादेश्यमुतेतः परमन्यदप्यस्तीत्यत आह। "नह्येतस्मादिति नेत्यन्यत्परमस्ति" इति। नेत्यादिष्टादन्यत्परमस्ति यदादेश्यं भवेत्। तस्मादेतावदेवा-देश्यं नापरमस्तीत्यर्थः। अत्रैवमर्थनेतिना यत्सन्निहितं परा-मृष्टं तन्निषिध्यते नत्रा सन्निहितञ्च मूर्त्तामूर्त्तसवासनं रूपद्व-यम्। तदवच्छेदकत्वेन च ब्रह्म। तदेतद्विचार्यते। किं रूपद्वयं सवासनं ब्रह्म च सर्वमेव च प्रतिषिध्यते, उत ब्रह्मैवाथ सवासनं रूपद्वयं ब्रह्म तु परिशिष्यत इति। यद्यपि तत्र तत्र वेदान्तप्रदेशेषु ब्रह्मस्वरूपं प्रतिपादितं तदसद्भावज्ञानञ्च निन्दि-तम्। अस्तीत्येवोपलब्धव्य इति चास्य सत्त्वमवधारितं तथापि सद्बोधरूपं तद्ब्रह्म सवासनमूर्त्तामूर्त्तरूपसाधारणतया। च सामान्यं तस्य चैते विशेषा मूर्त्तामूर्त्तादयो न च सर्वावि-शेषनिषेधे सामान्यमवस्थातुमर्हति निर्विशेषस्य सामान्यस्या-योगात्। यथाहुः।

'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्'। इति।

तस्मात्सर्वविशेषनिषेधेऽपि तत्सामान्यस्य ब्रह्मणोऽनवस्थाना-

सर्वस्यैवायं निषेधः । अतएव नह्येतस्मादिति नेत्यन्यत्पर-मस्तीति निषेधात् परं मास्तीति सर्वनिषेधमेव तत्त्वमाह श्रुतिः । अस्तीत्येवोपलब्धव्य इति योपासनाविधानवचनं यं, न त्वस्तित्वमेवास्य तत्त्वम् । तत्प्रशंसार्थं चासद्भाववादि-निन्दा । यच्चान्यत्र ब्रह्मस्वरूपप्रतिपादनं तदपि मूर्तामूर्त-रूपप्रतिपादनवद्विषेधार्थमनभिहितोऽपि च तत्र निषेधो योग्यत्वात् सम्बन्ध्यते । यथाहुः ।

'येन यस्याभिसम्बन्धो दूरस्थस्यापि तेन सः' । इति ।

तस्मात्सर्वस्यैवाविशेषेण निषेध इति प्रथमः पक्षः । अथवा पृथिव्यादिप्रपञ्चस्य समस्तस्य प्रत्यक्षादिप्रमाणसिद्धत्वाद् ब्रह्म-णस्तु वाङ्मनसागोचरतया सकलप्रमाणविरहात् कतर-स्यास्तु निषेध इति विषये प्रपञ्चप्रतिषेधे समस्तप्रत्यक्षादि-व्याकोपप्रसङ्गाद् ब्रह्मप्रतिषेधे त्वव्याकोपाद्ब्रह्मैव प्रतिषेधेन सम्बध्यते योग्यत्वाच्च प्रपञ्चस्तद्वैपरीत्यात्, वीप्सा तु तदत्यन्ता-भावसूचनायेति मध्यमः पक्षः । तत्र प्रथमं पक्षं निराक-रोति । "न तावदुभयप्रतिषेध उपपद्यते शून्यवादप्रसङ्गात्" इति । अयमभिसन्धिः । उपाधयो ह्यमी पृथिव्यादयो-ऽविद्याकल्पिता न तु शोणकर्कादय इव विशेषा ब्रह्मत्वस्य । न चोपाधिविगमे उपहितस्याभावोऽप्रतीतिर्वा नह्युपा-धीनां दर्पणमणिकृपाणादीनामपगमे मुखस्याभावोऽप्रती-तिर्वा । तस्मादुपाधिनिषेधेऽपि नोपहितस्य प्रतिषेधो-ऽप्रतीतिर्वा । न चेतीति सर्वविधानाविशेषात्स-र्वस्य प्रतिषेध्यत्वमिति युक्तम् । नहि भावमनुपाश्रित्य प्रति-षेध उपपद्यते किञ्चित् क्वचित्प्रतिषिध्यते नह्यनाश्रयः प्रति-षेधः शक्यः प्रतिपत्तुं तदिदमुक्तमपरिशिष्यमाणे चान्यस्मिन् य इतरः प्रतिषेद्धुमारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात्तस्यैव परमा-

र्थत्वापत्तेः प्रतिषेधानुपपत्तिः। मध्यमं पक्षं प्रतिक्षिपति। नापि ब्रह्मनिषेध उपपद्यते। युक्तं यदैवसर्गिकाविद्याप्राप्तः प्रपञ्चः प्रतिषिध्यते प्राप्तिपूर्वकत्वात्प्रतिषेधस्य। ब्रह्म तु नाविद्यासिद्धं नापि प्रमाणान्तरात्। तस्माच्छब्दे न प्राप्तं प्रतिषेधनीयं तथा च यस्तस्य शब्दः प्रापकः स तत्पर इति स ब्रह्मणि प्रमाणमिति कथमस्य निषेधोऽपि प्रमाणवान्। न च पर्य्युदासाधिकरणपूर्वपक्षन्यायेन विकल्पः, वस्तुनि सिद्धस्वभावे तदनुपपत्तेः। न चावाङ्मनसगोचरो बुद्धावालेखितुं शक्यः। अशक्यश्च कथं निषिध्यते। प्रपञ्चस्त्वनाद्यविद्यासिद्धोऽनूद्य ब्रह्मणि प्रतिषिध्यत इति युक्तम्। तदिमामनुपपत्तिमभिप्रेत्योक्तं नापि ब्रह्मप्रतिषेध उपपद्यत इति। हेत्वन्तरमाह। "ब्रह्म ते ब्रवाणि" इति। "उपक्रमविरोधात्" इति। उपक्रमपरामर्शोपसंहारपर्य्यालोचनया हि वेदान्तानां सर्वेषामेव ब्रह्मपरत्वमुपपादितं प्रथमेऽध्याये। न चासत्यामाकाङ्क्षायां दूरतरस्थेन प्रतिषेधेनैषां सम्बन्धः सम्भवति। यच्च वाङ्मनसातीतत्वं ब्रह्मणस्तत्प्रतिषेधस्य न प्रमाणान्तरविरोध इति तत्राह। "वाङ्मनसातीतत्वमपि" इति। प्रतिपादयन्ति वेदान्ता महता प्रयत्नेन ब्रह्म। न च निषेधाय तत्प्रतिपादनम् अनुपपत्तेरित्युक्तमधस्तात्। इदानीं तु निष्प्रयोजनमित्युक्तं प्रक्षालनाद्धि पङ्कस्येति न्यायात्। तस्माद्वेदान्तवाचा मनसि सन्निधानाद्ब्रह्मणो वाङ्मनसातीतत्वं *नाक्षमपि तु प्रतिपादनप्रक्रियोपक्रम एवः। यथा गवादयो विषयाः साक्षाच्छब्दप्रवृत्तिकया प्रतिपाद्यन्ते प्रतीयन्ते च नैवं ब्रह्म। यथाहुः।

भेदप्रपञ्चविलयद्वारेण च निरूपणमिति।

ननु प्रकृतप्रतिषेधे ब्रह्मणोऽपि कस्मान्न प्रतिषेध इत्यत आह। "तद्धि प्रकृतं प्रपञ्चितं च" इति। प्रधानं प्रकृतं प्रप-

ख्व प्रधानं न ब्रह्म तस्य महान्ततया प्रपञ्चावच्छेदकत्वेना-प्रधानत्वादित्यर्थः। "ततोऽन्यद्ब्रवीति" इति। नेति नेतीति प्रतिषेधादन्यद् भूयो ब्रवीतीति। तन्निर्वचनम्। नह्येतस्मा-दित्यस्य यदा नह्येतस्मादिति नेति नेत्यादिष्टाद्ब्रह्मणोऽन्यत्पर-मस्तीति व्याख्यानं तदा प्रपञ्चप्रतिषेधादन्यद्ब्रह्मैव ब्रवीतीति व्याख्येयम्। यदा तु नह्येतस्मादिति सर्वनाम्ना प्रतिषेधो ब्रह्मण आदेशः परामृश्यते तदापि प्रपञ्चप्रतिषेधमात्रं न प्रतिपत्तव्यमपि तु तेन प्रतिषेधेन भावरूपं ब्रह्मोपलक्ष्यते कस्मादित्यत आह। "ततो ब्रवीति च भूयः" इति। यस्मात्प्र-तिषेधस्य परस्तादपि ब्रवीति। अथ ब्रह्मणो नामधेयं नाम सत्यस्य सत्यमिति तद्व्याचष्टे श्रुतिः 'प्राणा वै सत्यम्' इति। माहारजनाद्युपमितं लिङ्गमुपलक्षयति। तत् खलु सत्यमितरा-पेक्षया तस्यापि परं सत्यं ब्रह्म। तदेवं यतः प्रतिषेधस्य पर-स्ताद्ब्रवीति तस्मान्न प्रपञ्चप्रतिषेधमात्रं ब्रह्मापि तु भावरू-पमिति। तदेवं पूर्वस्मिन् व्याख्याने निर्वचनं ब्रवीतीति व्याख्यातम्। पश्चिमे तु सत्यस्य सत्यमिति ब्रवीतीति व्याख्ये-यम्। शेषमतिरोहितार्थम् ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

अनेनाहिरूपेणाभेदः कुण्डलादिरूपेण तु भेद इत्युक्तं तेन विषयभेदाद्भेदाभेदयोरविरोध इत्येकविषयत्वेन वा सर्वदो-पलब्धेरविरोधः। विरुद्धमिति हि नः क्व संप्रत्ययो न यत्प्रमाणेनोपलब्धम्। आममतत्र प्रमाणादेकगोचरावपि भेदा-भेदौ प्रतीयमानौ न विरोधमावहतः सवितृप्रकाशयोरिव प्रत्यक्षप्रमाणाद्भेदाभेदाविति। प्रकारान्तरेण भेदाभेदयो-रविरोधमाह।

# प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

तदेवं परमतमुपन्यस्य स्वमतमाह।

# पूर्ववद्वा ॥ २९ ॥

अयमभिसन्धिः। यस्य मतं वस्तुनोऽहित्वं नामेदः कुण्डलत्वेन भेद इति। स एवं सुवाचः प्रष्टव्यो जायते किमहित्वकुण्डलत्वे वस्तुनो भिन्ने उताभिन्ने इति। यदि भिन्ने अहित्वकुण्डलत्वे भिन्ने इति वक्तव्यं न तु वस्तुनस्ताभ्यां भेदाभेदौ नह्यन्यभेदाभेदाभ्यामन्यद्भिन्नमभिन्नं वा भवितुमर्हति। अतिप्रसङ्गात्। अथ वस्तुनो न भिन्ने ते अहित्वकुण्डलत्वे तथा सति को भेदाभेदयोर्विषयभेदस्तयोर्वस्तुनोऽनन्यत्वेनाभेदात्। न चैकविषयत्वेऽपि सदानुभूयमानत्वाद्भेदाभेदयोरविरोधः। स्वरूपविरुद्धयोरप्यविरोधे क नाम विरोधो व्यवतिष्ठेत। न च सदानुभूयमानं विकारमङ्ग भाविकं भवितुमर्हति। देशान्तभावधापि सदानुभूयमानस्य भाविकत्वप्रसङ्गात्। प्रपञ्चितं चैतदस्माभिः प्रथमसूत्र इति नेह प्रपञ्चितम्। तस्मादनाद्यविद्याविक्रीडितमेवैकस्यात्मनो जीवभावभेदो न भाविकस्तथा च तत्त्वज्ञानादविद्यानिवृत्तावपवर्गसिद्धिः। तात्त्विकत्वे त्वस्य न ज्ञानान्निवृत्तिसम्भवः। न च तत्त्वज्ञानादन्यदपवर्गसाधनमस्ति। यथाह श्रुतिः। 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति। शेषमतिरोहितार्थम् ॥

# परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥

यद्यपि श्रुतिप्रामाण्याद्ब्रह्मव्यतिरिक्तं तत्त्वं नास्तीत्यवधारितं तथापि सेत्वादिश्रुतीनामापाततस्तद्विरोधदर्शनात् तत्प्रतिसमाधानार्थमयमारम्भः। "आपूर्णं" स्वलम्। प्रकाशवदन-

वज्ज्योतिष्मदायतनवदिति पादा ब्रह्मणश्चत्वारस्तेषां पादानामेकैकस्याष्टौ शफाः। तेऽष्टावस्य ब्रह्मण इत्यष्टशफं ब्रह्म। षोडश कला अस्येति षोडशकलम्। तद्यथा प्राचीप्रतीचीदक्षिणोदीचीति चतस्रः कला अवयवा इव कलाः स प्रकाशवान्नाम प्रथमः पादः। एतदुपासनायां प्रकाशवान् मुख्यो भवतीति प्रकाशवान् पादः। अथापराः पृथिव्यन्तरिक्षं द्यौः समुद्र इति चतस्रः कला एव द्वितीयः पादोऽनन्तवान्नाम सोऽयमनन्तत्वेन गुणेनोपास्यमानोऽनन्तत्वमुपासकस्यावहतीति अनन्तवान् पादः। अथाग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः स ज्योतिष्मान्नाम पादस्तृतीयस्तदुपासनाज्ज्योतिष्मान् भवतीति ज्योतिष्मान् पादः। अथ प्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाश्चतुर्थः पाद आयतनवान्नामैते घ्राणादयो हि गन्धादिविषया मन आयतनमाश्रित्य भोगसाधनं भवन्तीत्यायतनवान्नाम पादः। तदेवं चतुष्पाद् ब्रह्माष्टशफं षोडशकलमुपासितं श्रुत्या। अतस्ततो ब्रह्मणः परमन्यदस्ति। स्यादेतत्। अस्ति चेत् परिसंख्यायोच्यतामेतावदित्यत आह "अमितमस्तीति"। प्रमाणसिद्धम्। न त्वेतावदित्यर्थो भेदव्यपदेशश्च त्रिःप्रकारः। आधारतश्चातिदेशतश्चावधितश्च ॥

## सामान्यात्तु ॥ ३२ ॥

जगतस्तन्मर्यादानाञ्च विधारकत्वञ्च सेतुसामान्यम्। यथा हि तन्तवः पटं विधारयन्ति तदुपादानत्वादेवं ब्रह्मापि जगद्विधारयति तदुपादानत्वात्। तन्मर्यादानाञ्च विधारकं ब्रह्म इतरथाऽतिचपलस्वभावकल्लोलमालाकलिलो जल-

निधिरिलापरिमण्डलमवमिलेत्। वडवानलो वा विस्फुर्जि-तज्वालाजटिलो जगद्भस्मसाद्भावयेत्। पवनः प्रचण्डो वाऽका-ण्डमेव ब्रह्माण्डं विघटयेदिति। तथा च श्रुतिः। भीषा-स्माद्वातः पवते इत्यादिका। मनसो ब्रह्मप्रतीकस्य समा-रोपितब्रह्मभावस्य वाग्प्राणचक्षुः श्रोत्रमिति चत्वारः पादाः। मनो हि वक्तव्यघ्रातव्यद्रष्टव्यश्रोतव्यान् गोचरान् वागादिभि-सञ्चरतीति सञ्चरणसाधारणतया मनसः पादास्तदिदमध्या-त्मम्। आकाशस्य ब्रह्मप्रतीकस्याग्निर्वायुरादित्यो दिश इति चत्वारः पादाः। ते हि व्यापिनो नभस उदर इव गोः पादा विलग्ना उपलभ्यन्त इति पादाः। तदिदमधिदैवतम्। तदनेन पादवदिति वैदिकं निदर्शनं व्याख्याय लौकिकं वेदं निद-र्शनमित्याह। "अथवा पादवदिति। "तद्वत्" इति इहापि मन्दबुद्धीनामाध्यानव्यवहारार्थेत्यर्थः॥

## स्थानविशेषात् प्रकाशादिवत्॥ ३४॥

बुद्धाद्युपाधिस्थानविशेषयोगादुद्भूतस्य जायत् थोर्वि-शेषविज्ञानस्योपाध्युपशमेऽभिभवे सुषुप्तावस्थानमिति। तथा भेदव्यपदेशोऽपि विविधो ब्रह्मण उपाधिभेदापेक्षयेति। यथा सौधजालमार्गनिवेशिन्यः सवितृभासो जालमार्गोपाधिभेदा-द्भिन्ना भासन्ते तद्विगमे तु गभस्तिमण्डलेनैकीभवन्त्यतस्तेन सम्बध्यन्त एवमिहापीति। स्यादेतत्। एकीभावः कथा-ञ्चित् सम्बन्धः कथञ्चिद्व्याख्यायते न मुख्य एवेत्यत आह सूत्रेण परिहरति॥

## उपपत्तेश्च॥ ३५॥

स्वमपीत इति हि स्वरूपसम्बन्धं श्रुतिः। स्वमावच्छे-देन सम्बन्धत्वेन स्पष्टमतः स्वाभाविकस्यादात्म्याभातिरिच्यत

इति तर्कपादे उपपादितमित्यर्थः । तथा भेदोऽपि विविधो नाम्नाद्यः स्वाभाविक इत्यर्थः ॥

तथान्यप्रतिषेधात् ॥ ३६ ॥

सुगमेन भाष्येण व्याख्यातम् ।

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

ब्रह्माद्वैतसिद्धावपि न सर्वगतत्वं सर्वव्यापिता सर्वस्य ब्रह्मणा स्वरूपेण रूपवत्त्व मिष्यतेऽत्यत आह । "अनेन सेत्वादिनिराकरणेन" परहेतुनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सामाधनोपन्यासेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति । अद्वैते सिद्धे सर्वोऽयमनिर्वचनीयः प्रपञ्चावभासो ब्रह्माधिष्ठान इति सर्वस्य ब्रह्मसम्बन्धाद्ब्रह्म सर्वगतमिति सिद्धम् ॥

फलमत उपपत्तेः ॥ ३८ ॥

सिद्धान्तोपक्रममिदमधिकरणम् । स्यादेतत् । नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः कुत ईश्वरत्वं कुतश्च फलहेतुत्वमपीत्यत आह । "तस्यैव ब्रह्मणो व्यावहारिक्याम्" इति । नास्य पारमार्थिकं रूपमाश्रित्यैतच्चिन्त्यते किन्तु सांव्यवहारिकमेतच्च तपसा चीयते ब्रह्मेति व्याचक्षाणैरस्माभिरुपपादितम् । इष्टं फलं स्वर्गः । यथाहुः ।

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।

अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्' ॥ इति ।

अनिष्टमवीच्यादिस्थानभोग्यं व्यामिश्रं मनुष्यभोग्यम् । तत्र तावत्प्रतिपाद्यते । फलमत ईश्वरात्कर्मभिराराधिताद्भवितुमर्हति । अथ कर्मण एव फलं स्वभावाद्भवतीत्यत आह । "कर्मणश्चानन्यविनाशिनः प्रत्ययविनाशिनः" इति । चोदयति ।

"स्यादेतत् कर्म विनश्यत्" इति। उपात्तमपि फलं भोक्तृमयोग्यत्वाद्वा कर्मान्तरप्रतिबन्धाद्वा न भुज्यत इत्यर्थः। परिहरति। "तदपि न परिशुध्यति" इति। नहि स्वर्गं स्वात्मानं लभतामित्यधिकारिणः कामयन्ते किन्तु भोग्योऽस्माकं भवत्विति। तेन यादृशमेभिः काम्यते तादृशस्य फलत्वमिति भोग्यत्वमेव सत्फलमिति। न च तादृशं कर्मानन्तरमिति कथं फलं सदपि स्वरूपेण। अपि च स्वर्गनरकौ तीव्रतमे सुखदुःखे इति तद्विषयेणानुभवेन भोगापरनाम्नावश्यं भवितव्यम्। तस्मादनुभवयोग्ये अननुभूयमाने शशशृङ्गवत्स्त इति निश्चीयते। चोदयति। "अथोच्येत मा भूत्कर्मानन्तरं फलोत्पादः कर्मकार्यादपूर्वाद्भवेत्" इति। परिहरति। "तदपि न" इति। यद्यदचेतनं तत्सर्वं चेतनाधिष्ठितं प्रवर्त्तत इति प्रत्यक्षागमाभ्यामवधारितम्। तस्मादपूर्वेणाप्यचेतनेन चेतनाधिष्ठितेनैव प्रवर्त्तितव्यं नान्यथेत्यर्थः। न चापूर्वं प्रामाणिकमपीत्याह। "तदस्ति च" इति॥

## श्रुतत्वाच्च ॥ ३९ ॥

"अवादः" अपप्रदः। सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति॥

## धर्मं जैमिनिरत एव ॥ ४० ॥

श्रुतिमाह। "श्रूयते तावत्" इति। ननु स्वर्गकामो यजेतेत्यादयः श्रुतयः फलं प्रति न साधनतया यागं विदधति। तथाहि। यदि यागादय एव क्रिया न तदतिरिक्ता भावना तथापि त एव स्वपदेभ्यः पूर्वापरीभूताः साध्यस्वभावा अवगम्यन्त इति न साध्यान्तरमपेक्षन्त इति न स्वर्गेण साध्यान्तरेण सम्बन्धुमर्हन्ति। अथापि तदतिरिक्तो भावनास्ति तथाप्यसौ भाव्यापेक्षापि स्वपदोपात्तं पूर्वावगतं च भाव्यं धात्वर्थमपहाय

न भिन्नपदोपात्तं पुरुषविशेषणं च स्वर्गादि भाव्यतया लोक्तुमर्हति न चैकस्मिन् वाक्ये साध्यद्वयसम्बन्धसम्भवः। वाक्यभेदप्रसङ्गात्। न केवलं शब्दतो वस्तुतश्च पुरुषप्रयत्नस्य भावनायाः साक्षाद्धात्वर्थ एव साध्यो न तु स्वर्गादिस्तस्य तदसाध्यत्वात्। स्वर्गादिस्तु नामपदाभिधेयतया सिद्धरूपस्याख्यातवाच्यं साध्यं धात्वर्थं प्रति भूतं भव्यायोपदिश्यत इति न्यायात्साधनतया गुणत्वेनाभिसम्बन्धः। तथाच पारमर्षं सूत्रम्। 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' इति। तथा च कर्मणो यागादेर्दुःखत्वेन पुरुषेणासमीहितत्वात् समीहितस्य च स्वर्गादेरसाध्यत्वात् यागादयः पुरुषार्थादकृतत्वानुपकारिणां चैषां न पुरुष इष्ट 'अनीशानश्च न तेषु सम्भवत्यधिकारी'त्यधिकाराभावप्रतिपादितानर्थक्यपरिहाराय कृत्स्नस्यैवाम्नायस्य निसृष्टनिखिलदुःखानुषङ्गनित्यसुखमयब्रह्मज्ञानपरत्वं भेदप्रपञ्चविलयनद्वारेण। तथाहि। सर्वत्रैवाम्नाये क्वचित्कस्यचिद्भेदस्य प्रविलयो गम्यते यथा स्वर्गकामो यजेतेति शरीरात्मभावप्रविलयः। इह खल्वापाततो देहातिरिक्त आमुष्मिकफलोपभोगसमर्थोऽधिकारी गम्यते। तत्राधिकार्यंशे क्रमेण निराकरणात् असतोऽपि प्रतीयमानस्य विचारासहस्योपायतामात्रेणावस्थानादनेन वाक्येन देहात्मभावप्रविलयस्तत्परेण क्रियते। गोदोहनेन पशुकामस्य प्रणयेदित्यत्राप्यापाततोऽधिकृताधिकारावगमादधिकारिभेदप्रविलयः। निषेधवाक्यानि च साक्षादेव प्रवृत्तिनिषेधेन विधिवाक्यानि काम्यानि सांग्रहण्या यजेत ग्रामकाम इत्यादीनि न सांग्रहण्यादिप्रवृत्तिपराण्यपि तूपायान्तरोपदेशेन सेवादिदृष्टोपायप्रतिषेधार्थानि। यथा विषं भुङ्क्ष्व माऽस्य गृहे भुङ्क्ष्वेति। तथा च रागाद्याक्षिप्तप्रवृत्तिप्रतिषेधेन शास्त्रस्य

शास्त्रत्वमप्युपपद्यते रागनिबन्धनां तूपायोपदेशद्वारेण प्रवृत्तिमनुजानतो रागसंवर्द्धनादशास्त्रत्वप्रसङ्गः। तन्निषेधेन तु ब्रह्मणि प्रणिधानमादधत् शास्त्रं शास्त्रं भवेत्। तस्मात्कर्म-फल-सम्बन्धस्याप्रमाणिकत्वादनादिविचित्राविद्या-सहकारिण ईश्वरादेव कर्मानपेक्षाद्विचित्रफलोत्पत्तिरिति। कथं तर्हि विधिः किमत्र कथं प्रवर्त्तनामात्रत्वाद्विधेस्तस्य चाधिकारमन्तरेणाप्युपपत्तेः। नहि योयः प्रवर्त्तयति स सर्वोऽधिकृतमपेक्षते। पवनादेः प्रवर्त्तकस्य तदनपेक्षत्वादिति शङ्कामपाचिकीर्षुराह। "तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते"। अन्यथा ह्यननुष्ठातृको याग आपद्येत। अयमभिसन्धिः। उपदेशो हि विधिः। यथोक्तं तस्य ज्ञानमुपदेश इति। उपदेशश्च नियोज्यप्रयोजने कर्मणि लोकशास्त्रयोः प्रसिद्धः। तद्यथाऽऽरोग्यकामो जीर्णे भुञ्जीत। एष सुपन्था गच्छतु भवाननेनेति। न त्वाशादिरिव नियोक्तृप्रयोजनस्तत्राभिप्रायस्य प्रवर्त्तकत्वात् तस्य चापौरुषेयेऽसम्भवात्। अस्य चोपदेशस्य नियोज्यप्रयोजनव्यापारविषयत्वमनुष्ठात्रपेक्षितानुकूलव्यापारगोचरत्वमस्माभिरुपपादितं न्यायकणिकायाम्। तथाच स्वर्गकामो यजेतेत्यादिषु स्वर्गकामादेः समीहितोपाया गम्यन्ते यागादयः। इतरथा तु न साधयितारमनुगच्छेयुः। तदुक्तमृषिणा। असाधकन्तु तादर्थ्यादिति। अनुष्ठात्रपेक्षितोपायतारहितप्रवर्त्तनामात्रार्थत्वे यजेतेत्यादीनामसाधकं कर्म यागादि स्यात् साधयितारं नाधिगच्छेदित्यर्थः। न चैते साक्षाद्भावनाभाव्या अपि कालान्तरभाविफलसाधनताविध्युपहितमर्य्यादा भावनाभाव्या भवितुमर्हन्ति। येन पुंसामनुपकारकाः सन्तो नाधिकारभाजो भवेयुः। दुःखत्वेन कर्मणां चेतनसमीहानास्पदत्वात्।

स्वर्गादीनान्तु भावनापूर्वकरूपकामनोपधानाच्च। प्रीत्यात्मकत्वाच्च। नामपदाभिधेयानामपि पुरुषविशेषणानामपि भावनाद्देश्यतालक्षणभाव्यत्वप्रतीतेः। फलार्थप्रवृत्तभावनाभाव्यत्वलक्षणेन च यागादिसाध्यत्वेन फलार्थप्रवृत्तभावनाभाव्यत्वरूपस्य फलसाध्यत्वस्य समप्रधानत्वाभावेनैकवाक्यसमवायसम्भवात् भावनाभाव्यत्वमात्रस्य च यागादिसाध्यत्वस्य करणेऽप्यविरोधात्। अन्यथा सर्वत्र तदुच्छेदात्। परश्वादेरपि छिदादिषु तथाभावात् फलस्य साक्षाद्भावनाव्याप्यत्वविरहिणोऽपि तदुद्देश्यतया सर्वत्र व्यापितया व्यवस्थानात् स्वर्गसाधने यागादौ स्वर्गकामादेरधिकार इति सिद्धम्। न चाप्रामाण्यविषयाः मांसभक्षणादियागविधयः परिसंख्यायका नियामका वा भवितुमर्हन्ति। न चाधिकाराभावे देहात्मप्रविलयो वाधिकारिभेदप्रविलयो वा शक्य उपपादयितुम्। आपाततः प्रतिभाने चास्य तत्परत्वमेव नार्थायातपरत्वं स्वरसतः प्रतीयमानेऽर्थे वाक्यस्य तादर्थ्यं सम्भवति न सम्पातायातपरत्वमुचितम्। न चैतावता शास्त्रत्वव्याघातः। तस्य स्वर्गाद्युपायशासनेऽपि शास्त्रत्वोपपत्तेः। पुरुषश्रेयोऽभिधायकत्वं हि शास्त्रत्वं सरागवीतरागपुरुषश्रेयोऽभिधायकत्वेन सर्वपारिषदतया न तद्व्याघातः। तस्माद्विधिविषयभावोपगमाद् यागः स्वर्गस्योत्पादक इति सिद्धम्। "कर्मणो वा काचिदवस्था" इति। कर्मणोऽवान्तरव्यापारः। एतदुक्तं भवति। कर्मणो हि फलं प्रति तत्साधनत्वं श्रुतं तन्निर्वाहयितृ तस्यैवावान्तरव्यापारो भवति। न च व्यापारवति सत्येव व्यापारो नास्तीति युक्तम्। अमतृस्याग्नेयादिषु तदुत्पत्त्यपूर्वाणां परमापूर्वं जनयितव्ये तदवान्तरव्यापारत्वात्। असत्यपि च तैलपानकर्मणि तेन पुष्टौ कर्त्तव्यायामन्तरा

तैलपरिणामभेदानां तदवान्तरव्यापारत्वात्। तस्मात् कर्मकार्य्यमपूर्वं कर्मणा फले कर्त्तव्ये तदवान्तरव्यापार इति युक्तम्। यदा पुनः फलोपजननान्यथानुपपत्त्या किञ्चित् कल्प्यते तदा फलस्य वा पूर्वावस्था। "अविचिन्त्यस्य कारणस्येति"। यदीश्वरादेव केवलादिति शेषः। कर्मभिर्वा शुभाशुभैः कार्य्यद्वैधोत्पादे रागादिमत्त्वप्रसङ्ग इत्याशयः॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात्॥ ४१॥

दृष्टानुसारिणी हि कल्पना युक्ता नान्यथा। नहि जातु मृत्पिण्डदण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय विभवन्तो दृष्टाः। न च विद्युत्पवनादिभिरप्रयत्नपूर्वैर्व्यभिचारः, तेषामपि कल्पनास्पदतया व्यभिचारनिदर्शनत्वानुपपत्तेः। तस्मादचेतनं कर्म वाऽपूर्वं वा न चेतनानधिष्ठितं स्वतन्त्रं स्वकार्य्ये प्रवर्त्तितुमुत्सहते। न च चैतन्यमात्रं कर्म स्वरूपसामान्यविनियोगादिविशेषविज्ञानशून्यमुपयुज्यते येन तदधिष्ठितचैतन्यमात्राधिष्ठानेन सिद्धसाध्यत्वमुद्भाव्येत, तस्मात् तत्तत्प्रासादाट्टालकगोपुरतोरणाद्युपजननिदर्शनमुखेन सुपरिनिश्चितं यथा चेतनाधिष्ठानादचेतनानां कार्य्यारम्भकत्वमिति तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुमित्यपि स्पष्टं निरटङ्कि देवताधिकरणे। लौकिकश्चेश्वरो दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति विरोधितश्चापक्रियाभिर्विरोधकायाहितमित्यपि सुप्रसिद्धं, तदिह केवलं कर्म वाऽपूर्वं वा चेतनानधिष्ठितमचेतनं फलं प्रसूत इति दृष्टविरुद्धम्। यथा विनष्टं कर्म न फलं प्रसूत इति कल्प्यते दृष्टविरोधादेवमिहा-

पीति। तथा देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूत इत्यपि दृष्टविरुद्धम्। न हि राजपूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते। तस्मात् दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुत्पाद्यते। तथाच देवताप्रसादादेव स्वायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण। एवमशुभेनापि कर्मणा देवताविराधनं श्रुतिस्मृतिप्रसिद्धम्। ततः स्वायिनोऽनिष्टफलप्रसवः। न च शुभाशुभकारिणां तदनुरूपं फलं प्रसुवाना देवता पक्षपातवतीति युज्यते। नहि राजा साधुकारिणमनुगृह्णन्निगृह्णन् वा पापकारिणं भवति द्विष्टो रक्तो वा तद्वदलौकिकोऽपीश्वरः। यथा च परमापूर्वे कर्त्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः। एवं प्रधानाराधनेऽङ्गाराधनानामुत्पत्त्याराधनानां चोपयोगः। स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति सर्वं समानमन्यत्राभिनिवेशात्। तस्मात् दृष्टाविरोधेन देवताराधनात् फलं न त्वपूर्वात्कर्मणो वा केवलाद्विरोधतो हेतुव्यपदेशश्च श्रौतः स्मार्त्तश्च व्याख्यातः। ये पुनरन्तर्यामिव्यापाराया फलोत्पादनाया नित्यत्वं सर्वसाधारणत्वमिति मन्यमाना भाष्यकारीयमधिकरणं दूषयाम्बभूवुः। तेभ्यो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामिति भाष्यं व्याचक्षीत॥

इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां
तृतीयस्याध्यायस्य द्वितीयः पादः॥

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥ १॥

पूर्वेण सङ्गतिमाह। "व्याख्यातं विज्ञेयस्य ब्रह्मणः" इति। निरुपाधिब्रह्मतत्त्वगोचरं विज्ञानं मन्वान आक्षिपति। "ननु विज्ञेयं ब्रह्म" इति। सावयवस्य ह्यवयवानां भेदात्तदव-

यत्रविशिष्टब्रह्मगोचराणि विज्ञानानि गोचरभेदाद्भिद्येरन्नि-त्यवयवा ब्रह्मणो निराकृताः पूर्वपक्षोक्तेन । न च नाना-स्वभावं ब्रह्म यतः स्वभावभेदाद्भिन्नानि ज्ञानानीत्युक्तमेकर-समिति । "घनं" कठिनम् । नन्वेकमप्यनेकरूपं लोके दृष्टं यथा सोमशर्मैकोऽप्याचार्यो मातुलः पिता पुत्रो भ्राता भर्ता जामाता द्विजोत्तम इत्यनेकरूप इत्यत उक्तं "एकरूपत्वं च"। एकस्मिन् गोचरे सम्भवन्ति बहूनि विज्ञानानि न त्वनेकाका-राणीत्युक्तम् । "अनेकरूपाणि" । रूपमाकारः । समाधत्ते । "उच्यते । सगुणेति" । तत्तद्गुणोपाधानब्रह्मविषया उपासनाः प्राणादिविषयाश्च दृष्टादृष्टक्रममुक्तिफला विषयभेदाद्भिद्यन्त इत्यर्थः । तत्र चपपत्तौ विमर्श इत्याह । "तस्यैषा चिन्ता" । पूर्वपक्षं गृह्णाति । "तत्र" इति । "नाम्नस्तावत्" इति । अस्त्यथैष ज्योति रेतेन सहस्रदक्षिणेन यजेतेति । तत्र संशयः । किं यजेतेति सन्निहितज्योतिष्टोमानुवादेन सहस्रदक्षिणा-लक्षणगुणविधानम्, उतैतद्गुणविशिष्टकर्मान्तरविधानमिति । किं तावत् प्राप्तं, ज्योतिष्टोमस्य प्रकान्तत्वाद्यजेतेति तदनुवा-दाज्ज्योतिरिति प्रातिपदिकमात्रं पठित्वा एतेनेत्यनुक्तस्य कर्मसामानाधिकरण्येन कर्मनामव्यवस्थापनात् कर्मणश्चानु-वाद्यत्वेन तत्तन्नस्य नाम्नोऽपि तथैव व्यवस्थापनात् ज्योतिः-शब्दस्य वसन्ते वसन्ते ज्योतिषेति च ज्योतिष्टोमे योगदर्शनात् नामैकदेशेन च नामोपलक्षणस्य लोकसिद्धत्वात् भीमसेनोप-लक्षणभीमपदवद् अथशब्दस्य चानन्तर्यार्थस्यासम्भवित्वेऽनु-पपत्तेर्गुणविशिष्टकर्मान्तरविधेश्च गुणमात्रविधानस्य लाघवाद् द्वादशशतदक्षिणायाश्चोत्पत्त्यशिष्टतया समशिष्टतया सहस्र-दक्षिणया सह विकल्पोपपत्तेः प्रकृतस्यैव ज्योतिष्टोमस्य सहस्रदक्षिणालक्षणगुणविधानार्थमयमनुवादो न तु कर्मान्त-

रमिति प्राप्तम्। एवं प्राप्त उच्यते। भवेत् पूर्वस्मिन् गुणविधिर्यदि तदेव प्रकरणं स्यात्। विच्छिन्नं तु तत् तथाहि। सविभावपि पूर्वासम्बद्धार्थं संज्ञान्तरं प्रतीयमानमन्याययश्चानेकार्थत्वमिति न्यायाद् उक्तगतोऽर्थान्तरार्थत्वात् पूर्वबुद्धिं व्यवच्छिन्दत्यपूर्वबुद्धिं च प्रसूत इति लोकसिद्धम्। न जातु देहि देवदत्ताय गामथ देवाय वाजिनमिति देवशब्दाद्देवदत्तं वाजिभाजमवस्यति लौकिकाः। तथा चोपरिष्टाद् यजेतेति श्रूयमाणमनवसार्थपदव्यवायात् तत्कर्मबुद्धिमनादधत् नत्र गुणविधानमात्रामसमर्थं कर्मान्तरमेव विधत्ते। न चैकत्वानुपपत्त्या लक्षणया ज्योतिःशब्दो ज्योतिष्टोमे प्रवृत्त इत्युपपत्त्यामनुपपत्तौ लाक्षणिको युक्तः। नहि गङ्गायां घोष इत्यत्र गङ्गापदं लाक्षणिकमिति मीना गङ्गायामित्यत्रापि लाक्षणिकं भवति। भेदेऽपि च प्रथमं संज्ञान्तरेणोल्लिखिते यजिशब्दसामानाधिकरण्यं कर्मनामधेयतामात्रतामावहति न तु संज्ञान्तरोपजनितां भेदधियमपनेतुमुत्सहते। तथा चाथशब्दोऽधिकारार्थः प्रकरणान्तरतामवद्योतयति। एषशब्दश्चाधिक्रियमाणपरामर्शक इति सोऽयं संज्ञान्तराद्भेद इति। भवतु संज्ञान्तरात्कर्मभेदः प्रस्तुते तु किमायातमित्यत आह। "अस्ति चात्र वेदान्तान्तरविहितेषु" इति। यथैव काठकादिसमाख्यामन्ये प्रयुञ्जत एवं ग्रामेऽपि लौकिकाः। न चास्ति विशेषो यतो मन्त्रे मुख्या विज्ञाने गौणी भवेत्। प्रणयनं च मन्त्रज्ञानयोरभिन्नं प्रवृत्तिनिमित्तं तस्माज्ज्ञानस्यापि वाचिका समाख्या। तथा च यदा ज्योतिष्टोमसंनिधौ श्रूयमाणं समाख्यान्तरं तत्प्रतीकमपि कर्मणो भेदकं तदा कैव कथा शाखान्तरीये विप्रकृष्टतमेऽतत्प्रतीकभूतसमाख्यान्तराभिधेये स्यात इति। तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपा-

टक: प्रसिद्धो यथा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्येव-मादिषु। इदमाम्नायते। तप्ते पयसि दध्यानयति सा वैश्व-देव्यामिक्षेति। अत्र हि द्रव्यदेवतासम्बन्धानुमितो यागो विधीयते तदनन्तरं चेदमाम्नायते। वाजिभ्यो वाजिनमिति। अत्रेदं सन्दिह्यते। किं पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयते, उत कर्मान्तरं द्रव्यदेवतान्तरविशिष्टमपूर्वं विधीयत इति। किं तावत् प्राप्तं, द्रव्यदेवतान्तरविशिष्टकर्मान्तरविधौ विधिगौरवप्रसङ्गात् कर्मान्तरापूर्वान्तरकल्पनागौरवप्रसङ्गाच्च न कर्मान्तरविधानमपि तु पूर्वस्मिन्नेव कर्मणि वाजिनद्रव्य-विधि:। न चोत्पत्तिशिष्टामिक्षागुणावरोधात्तत्र वाजिनम-लब्धावकाशं कर्मान्तरं गोचरयतीति युक्तम्। उभयोरपि वाक्ययो: समसमयप्रवृत्तेरामिक्षावाजिनयोरुत्पत्तौ समं शिष्य-माणत्वेन नामिक्षाया: शिष्टत्वम्। तत्कथमनयावरुद्धं कर्म न वाजिनं निविशेत्। न च वैश्वदेवीत्यत्र श्रौत आमिक्षा-सम्बन्धो विश्वेषां देवानां येन वाजिनसम्बन्धात् वाक्यगम्या-द्बलवान् भवेदुभयोरपि पदान्तरापेक्षप्रतीतितया वाक्यगम्य-त्वाविशेषात्। नो खलु वैश्वदेवीत्युक्ते आमिक्षापदानपेक्षा-मामिक्षामध्यवस्याम:। अस्तु वा श्रौतत्वं तथापि वाजिभ्य इति पदं वाजमन्नमामिक्षा तदेषामस्तीति व्युत्पत्त्या तत्-सम्बन्धिनो विश्वान्देवानुपलक्षयति। यद्यपि विश्वेदेवशब्दा-द्वाजिपदं भिन्नं येन च शब्देन चोदना तेनैवोद्देशो देवतात्वं न शब्दान्तरेण। अन्यथाऽर्थैकत्वेन सूर्यादित्यपदयो: सूर्या-दित्यचर्वोरेकदैवत्यप्रसङ्गात्। तथापि वाजिश्रुतेः सर्व-नामार्थे श्रवणात् सन्निहितस्य च सर्वनामार्थत्वाद्विश्वेषां देवानां च विश्वदेवपदेन सन्निधापनात्तत् पदपुर:सरा एवैते वाजिपदेनोपस्थाप्या न तु सूर्यादित्यपदवत्स्वतन्त्राद्यथा

च तदुपलक्षणार्थं वाजिपदं विश्वदेवोपहितामेव देवतामुप-
लक्षयतीति न शब्दान्तराद्देवताभेदस्ततश्चामिक्षासम्बन्धोप-
जीवनेन विश्वेभ्यो वाजिनं विधीयमानं नामिक्षया बाध्यते
किन्तु तया सह समुच्चीयत इति न कर्मान्तरमपि तु
वाक्याभ्यां द्रव्ययुक्तमेकं कर्म विधीयत इति प्राप्ते । उच्यते ।
स्यादेतदेवं यदि वैश्वदेवीति तद्धितश्रुत्यामिक्षा नोच्येत ।
तद्धितस्य तस्येति सर्वनामार्थे स्मरणात् सन्निहितस्य च विशे-
षस्य सर्वनामार्थत्वात् तत्रैव तद्धितस्यापि वृत्तिः । न तु
विश्वेषु देवेषु न तत्सम्बन्धेनापि तत्सम्बन्धिमात्रे । नन्वेवं
सति कस्माद्वैश्वदेवीशब्दमात्रादेव नामिक्षां प्रतीमः किमिति
चामिक्षापदमपेक्षामहे । तद्धितान्तस्य पदस्याभिधानापर्य्य-
वसानान्न प्रतीमस्तत्पर्य्यवसानाय चापेक्षामहे । पर्यवसिता-
भिधानं हि पदं समर्थमर्थधियमाधातुमिदन्तु सन्निहितवि-
शेषाभिधायि तत्सन्निधिमपेक्षमाणं सन्निधापकमामिक्षापद-
मपेक्षत इति कुत आमिक्षापदानपेक्ष आमिक्षाप्रत्ययप्रसङ्गः ।
कुतो वा तेनानपेक्षा । अतश्च सत्यामपि पदान्तरापेक्षायां
यत्पदं पदान्तरापेक्षमभिधत्ते तत्प्रमाणभूतप्रथमभाविपदा-
वगम्यत्वात् श्रौतं बलीयश्च । यत्तु पर्य्यवसिताभिधानपदा-
भिहितपदार्थावगमगम्यं तच्चरमप्रतीतिवाक्यगम्यं दुर्बलं-
चेति तद्धितश्रुत्यवगतामिक्षालक्षणगुणावरोधात् पूर्वकर्म-
संयोगिवाजिनद्रव्यं ससम्बन्धि पूर्वस्माद् भिनत्ति । एवं च
सति नित्यवदवगतानपेक्षसाधनभावामिक्षा न वाजिनद्रव्येण
सह विकल्पसमुच्चयौ प्राप्स्यति । न चामत्वे निरूढत्वादन-
पेक्षवृत्ति वाजिपदं कथञ्चिद्यौगिकं सापेक्षवृत्ति विश्वेदेवशब्दां
देवतां वैश्वदेवीपदादामिक्षाद्रव्यं प्रत्युपसर्जनीभूतामवगता-
मुपलक्षयिष्यति । प्रकृतं हि सर्वनामपदगोचरः प्रधानञ्च

प्रकृतमुच्यते नोपसर्जनम्। प्रामाणिके च विभिन्नकल्पनागौरवेऽभ्युपेतव्य एव प्रमाणस्य तत्त्वविषयत्वात्तस्मात्पश्चेव पूर्वकर्मासम्भविनो गुणात्कर्मभेद एवमिहापि पञ्चाग्निविद्यायाः षडग्निविद्या भिन्ना एवं प्राणसंवादेष्वूनाधिकभावेन विद्याभेद इति। तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक इति। तथाहि। कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नाचरन्त्यन्ये। तथाग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भमाहरन्ति नाहरन्त्यन्ये। तथाश्वमेधमधीयानाः केचिदश्वस्य घासमानयन्ति नानयन्त्यन्ये। केचित्त्वाचरन्त्यन्यमेव धर्मम्। न च तान्येव कर्माणि भूमिभोजनादिजनितमुपकारमाकाङ्क्षन्ति नाकाङ्क्षन्ति चेति युज्यते। अतोऽवगम्यते भिन्नानि तासु तासु शाखासु कर्माणीति। अस्तु प्रस्तुते किमायातमित्यत आह। "अस्ति चात्र" इति। अन्येषां शाखिनां नास्तीति शेषः। "एवं पुनरुक्तादयोऽपि" इति। समिधो यजतीत्यादिषु पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः। तत्र किमेका कर्मभावना किंवा पञ्चेति। किन्तावत्प्राप्तं, धात्वर्थानुबन्धभेदेन शब्दान्तराधिकरणे भावनाभेदाभिधानाद्धात्वर्थस्य च धातुभेदमन्तरेण भेदानुपपत्तेः समिधो यजतीति प्रथमभाविना वाक्येन विहिता कर्मभावना विपरिवर्त्तमानोपरितनैर्वाक्यैरनूद्यते। न च प्रयोजनभावादननुवादः प्रमाणसिद्धस्याप्रयोजनस्याननुयोज्यत्वात् कर्मभावनाभेदे चानेकापूर्वकल्पनाप्रसङ्गादेकापूर्वावान्तरव्यापारमेकं कर्मेति प्राप्तम्। एवं प्राप्त उच्यते। परस्परानपेक्षाणि हि समिदादिवाक्यानीति सर्वाण्येव प्राथम्याहाण्यपि युगपदध्ययनानुपपत्तेः क्रमेणाधीतानीति। न त्वयमेषां प्रयोजकः क्रमः। परस्परापेक्षायामेकवाक्यत्वे हि प्रयोजकः स्यात् तेन प्राथम्याभावात् प्राप्त

मित्येव नास्तीति कस्य कोऽनुवादः। कथञ्चिद्विपरिवृत्तिमात्रस्यौत्सर्गिकाप्रवृत्तप्रवर्त्तनालक्षणविधित्वापवादसामर्थ्याभावात्। गुणश्रवणे हि गुणविशिष्टकर्मविधाने विधिगौरवभिया गुणमात्रविधानलाघवाय कर्मानुवादापेक्षायां विपरिवृत्तेरुपकारो यथा दध्ना जुहोतीति दधिविधिपरे वाक्ये विपरिवृत्त्यपेक्षायामग्निहोत्रं जुहोतीति विहितस्य होमस्य विपरिवर्त्तमानस्यानुवादः। न चात्र गुणाद्भेदः समिदादिपदानां कर्मनामधेयानां गुणवचनत्वाभावात्। वक्ष्यमाणविशेषतया च किं वचनविहितं किं कर्मानुवादेन कस्य गुणविधित्वमिति न विनिगम्यते। न चापूर्वं नाम ज्योतिरादिवद्विधानामत्वम्प्रथममवगतं यतः पूर्वबुद्धिविच्छेदेन विधीयमानं कर्म पूर्वस्मात् संज्ञातो व्यवच्छिन्द्यात्। किन्तु प्रथमत एव कर्मसामानाधिकरण्येनावगताः समिदादयस्तद्वशात् कर्मनामधेयतां प्रतिपद्यमाना वाच्यानुवाद्यानुवादत्वेऽनुवादा विधित्वे विधेया न तु स्वातन्त्र्येण कस्यचिदीशते। तस्मात् स्वकर्माभिव्याप्त कर्मविधिपरत्वात् कर्मस्वयमभ्यासो भावनानुबन्धभूतानि भिन्दानो भावनां भिनत्ति यथा तथा शाखान्तरविहिता अपि विद्याः शाखान्तरविहिताभ्यो विद्याभ्योऽभ्यासो भेत्स्यतीति। अपरञ्च। नह्येकः पुरुषः सर्ववेदान्तप्रत्ययात्मिकामुपासनामुपसंहर्त्तुं शक्नोति सर्ववेदान्ताध्ययनासामर्थ्यादनधीतार्थोपसंहारेऽध्ययनविधानवैयर्थ्यप्रसङ्गात्। प्रतिशाखं भेदे तूपासनानां नायं दोषः। समाप्तिभेदाच्च। केषाञ्चित् शाखिनामोङ्कारसार्वात्म्यकथने समाप्तिः। केषाञ्चिदन्यत्र तस्मादप्युपासनाभेदः। अन्यार्थदर्शनादपि भेदः। तथाहि। नैतदचीर्णव्रतोऽधीत इति अचीर्णव्रतस्याध्ययनाभावदर्शनादुपासनाभावः। क्वचिदचीर्णव्रतस्याध्ययनदर्शनादुपासनावगम्यते।

तस्मादुपासनाभेद इति। अत्र सिद्धान्तमाह। सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्। तद्व्याचष्टे। सर्ववेदान्तप्रत्ययानि सर्ववेदान्तप्रमाणानि विज्ञानानि तस्मिंस्तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति। यान्येकस्मिन् वेदान्ते तान्येव वेदान्तान्तरेष्वपीत्यर्थः। चोदनाद्यविशेषात् आदिशब्देन संयोगरूपाख्याः संगृह्यन्ते। अत्र च चोद्यत इति चोदना पुरुषप्रयत्नः। स हि पुरुषस्य व्यापारः। तत्र यथैव होमादिधात्वर्थावच्छिन्नः प्रवर्तते। तस्य देवतोद्देशेन त्यागस्यासेचनादिकस्यावच्छेद्यः पुरुषप्रयत्नः स एव शाखान्तरे यथैवमिहापि प्राणज्येष्ठत्वश्रेष्ठत्ववेदनविषयः पुरुषप्रयत्नः स एव शाखान्तरेष्वपीति। एवं फलसंयोगोऽपि ज्येष्ठश्रेष्ठभवनलक्षणः स एव। रूपमपि तदेव। यथा यागस्य यदेकस्यां शाखायां द्रव्यदेवतारूपं तदेव शाखान्तरेष्वपीति। एवं वेदनस्यापि यदेकत्र प्राणज्येष्ठत्वश्रेष्ठत्वरूपं विषयस्तच्छाखान्तरेष्वपीति। "कश्चिद्विशेषम्" इति। युक्तं गर्दभादिर्भोगश्यीनपत्र। यथा-टेकादशकपालत्वादिसम्बन्धेऽप्यभेद इति। यथोत्पन्नस्य तस्य सर्वत्र प्रत्यभिज्ञायमानत्वादिह त्वनिपूतपर्थिसगत एव गुणभेद इति कथं वैश्वदेवीवत्र भेदक इति विशेषस्तमिमं विशेषमभिप्रेत्याशङ्कते सूत्रकारः। "भेदान्नेति चेत्" इति। परिहारः सूत्रावयवः। "न एकस्यामपीति"। पञ्चैव साम्पादिका अग्नयो वाजसनेयिनामपि छान्दोग्यानामिव विधीयन्ते। षष्ठस्त्वग्निः सम्पदातिरेकायानूद्यते न तु विधीयते वैश्वदेव्यां तूत्पन्नौ गुणो विधीयत इति भवतु भेदः। अथवा छान्दोग्यानामपि षष्ठोऽग्निः पठ्यत एव। अथ वा भवतु वाजसनेयिनां षष्ठाग्निविधानं मा च भूच्छान्दोग्यानां तथापि पञ्चत्वसंख्याया अविधानादोत्पत्तिशिष्टत्वं संख्यायाः किन्तूत्पन्नेष्वग्निषु

प्रत्ययमिष्टा संख्याऽनूद्यते साम्यादिकाम्यौनवच्छेत्तु तेन तेषामुत्पत्तिस्तेषां प्रत्यभिज्ञानात् अप्रत्यभिज्ञायमानायाश्च संख्याया अनुवाद्यत्वेनानुत्पत्तेर्विधीयमानस्य चाधिकस्य षोडशिग्रहणवदिकल्पसम्भवाच्च शाखान्तरे ज्ञानभेदः । उत्पत्तिशिष्टत्वेऽपि च प्रायसंवादादयोऽपि भवन्ति प्रत्यभिज्ञानाद-भिन्नास्तासु तासु शाखास्विति ॥

## स्वाध्यायस्य तथात्वे नहि समाचारेऽधि-कारात्त्व सर्ववच्च तन्नियमः ॥ ३ ॥

येनाथर्वणिकग्रन्थोपाया विद्या वेदितव्या तेषामेव शिरोव्रतपूर्वाध्ययनप्राप्तग्रन्थबोधिता फलं प्रयच्छति नान्यथा । अन्येषां तु छान्दोग्यादीनां सैव विद्या नाचीर्णशिरोव्रतानां फलदेत्याथर्वणग्रन्थाध्ययनसम्बन्धादवगम्यते । तत्सम्बन्धश्च वेदव्रतेनेति नैतदचीर्णव्रतोऽधीत इति समाम्नानादवगम्यते । तेषामेवैतां ब्रह्मविद्यां वदेतेति विद्यासंयोगेऽप्येतामिति प्रकृतपरामर्शिना सन्नाम्नाऽध्ययनसम्बन्धाविरोधायाथर्ववित्त्विहितेव विद्योच्यत इति । सवा होमाः सप्त सौर्यादयः शतौदनान्ता आथर्वणिकानां त एकस्मिन्नेवाथर्वणिकेऽग्नौ क्रियन्ते न त्रेतायां विद्यैकत्वम् ॥

## दर्शयति च ॥ ४ ॥

भूयोभूयो विद्यैकत्वस्य वेददर्शनात् । यत्रापि सगुणब्रह्मविद्यानां न साक्षाद्वेद एकत्वमाह तासामपि तत्प्रायपठितानां तद्विधानां प्रायदर्शनादिकत्वमेव तथाप्युपप्रायेलिखितं दृष्ट्वा भवेदयमपर इति बुद्धिरिति । यच्च काठकादिसमाख्ययोपासनाभेद इति । तदयुक्तम् । एता हि पौरुषेय्यः समाख्याः काठकादिप्रवचनयोगाच्छासां शाखानां न

तूपासनानाम्। नक्षु ताः कठादिभिः प्रोक्ताः न च कठाद्यनुष्ठानमासामितरानुष्ठानेभ्यो विशेष्यते। न च कठप्रोक्तानिमित्तमात्रेण यत्ने प्रवृत्तौ तद्योगाच्च कथं यथायथोपासनासु प्रवृत्तौ सत्यवत्त्वासुपासनाभिधानमप्यासां शक्यं कल्पयितुम्। न च तत्र दाभेदौ ज्ञानभेदाभेदप्रयोजकौ मा भूयथास्वमासामभेदाज्ज्ञानानामेकशाखागतानामैक्यम्। कठादिपुरुषप्रवचननिमित्ताश्चैताः समाख्याः कठादिभ्यः प्राक् नासन्निति तन्निबन्धनो ज्ञानभेदो नासीदिदानीं चास्तीति दुर्घटमापद्येत। तस्मान्न समाख्यातो भेदः। अभ्यासोऽपि नात्र भेदको युक्तं यदेकशाखागतो यज्ञत्यभ्यासः समिदादीनां भेदक इति तत्र हि विधित्वमौत्सर्गिकमज्ञातज्ञापनमप्रवृत्तप्रवर्त्तनञ्च कुर्येयाताम्। शाखान्तरे त्वध्येतृपुरुषभेदादेकत्वेऽपि नौत्सर्गिकविधित्वव्याकोप इति। अशक्तिरपि न भेदहेतुः स्वाध्यायोऽध्येतव्य इति स्वशाखायामध्ययननियमः। ततश्च शाखान्तरीयानर्थानन्येभ्यस्तद्विधेभ्योऽधिगम्य तद्विष्यति। समाप्तिरेकस्मिन्नपि तत्सम्बन्धिनि सनामे तस्य व्यपदिश्यते। यथाऽऽध्वर्यवे कर्मणि ज्योतिष्टोमस्य समाप्तिं व्यपदिशन्ति ज्योतिष्टोमः समाप्त इति। तस्मात्समाप्तिभेदोऽपि न साधनमुपासनाभेदस्य। तदेवमसति बाधके चोदनाद्यविशेषात्सर्ववेदान्तप्रत्ययानि कर्माणि तानि तान्येवेति सिद्धम्।

कश्चिद्विशेषमाशङ्क्य पूर्वतन्त्रप्रसाधितम्।
वक्ष्यमाणार्थसिद्ध्यर्थमर्थमाह स्म सूत्रकृत्॥

चिन्ताप्रयोजनप्रदर्शनार्थं सूत्रम्।

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च॥ ५॥

चत्रेदमाशङ्क्यते। भवतु सर्वशाखाप्रत्ययमेकं विज्ञानं

तथापि शाखान्तरोक्तानां तदङ्गान्तराणां न शाखान्तरोक्ते तस्मिन्नुपसंहारो भवितुमर्हति। तत्रैकस्य कर्मणो यावन्मात्रमङ्गजातमेकस्यां शाखायां विहितं तावन्मात्रेणैवोपकारसिद्धेरधिकारानपेक्षत्वात् अपेक्षत्वे चाधिकमपि तत्र विधीयेत न च विहितं तस्माद्यथा नैमित्तिकं कर्म सकलाङ्गवद्विहितमपि अशक्तौ यावच्छक्यमङ्गमनुष्ठातुं तावन्मात्रजन्येनोपकारेणोपकृतं भवत्येवमिहाप्यङ्गान्तराविधानादेव भविष्यतीति। एवं प्राप्ते उच्यते। सर्वत्रैकत्वे कर्मणः स्थिते गृहमेधीयन्यायेन नोपकारावच्छेदो युज्यते। नहि तदेव कर्म यत्तदङ्गमपेक्षते नापेक्षते चेति युज्यते नैमित्तिके तु निमित्तानुरोधादवश्यकर्त्तव्ये सर्वाङ्गोपसंहारस्य सदातनत्वासम्भवादुपकारावच्छेदः कल्प्यते। प्रकृतोपकारपिण्डे चोदकप्राप्ते आज्यभागविधानात्। गृहमेधीयेऽप्युपकारावच्छेदः स्यादिह तु शाखान्तरे कतिपयाङ्गविधानं तानि विधत्ते नेतराणि परिसष्टे। न च तदुपकारपिण्डे चोदकप्राप्ते आज्यभागवत्तन्मात्रविधानम्। तस्मात्तत्त्वेन कर्मणां सर्वाङ्गसङ्गम औत्सर्गिकोऽसति बलवति बाधके नापवदितुं युक्त इति॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

इया हिप्रकाराः प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुराः शास्त्रजन्यया सात्त्विक्या बुद्धा सम्पन्ना देवास्ते हि दीव्यन्त इति देवाः शास्त्रयुक्त्यपरिकल्पितमतयः। तामसहत्तिप्रधाना असुरा असुभिः प्राणैरनिन्द्रियैरस्वहीतैस्तेषु तेषु विषयेषु रमन्त इत्यसुरा अतएव ते ज्यायांसो यतोऽमी तत्त्वज्ञानवन्तः कानीनसास्तु देवाः।

अज्ञानपूर्वकत्वात्तत्त्वज्ञानस्य। प्राणस्य प्रजापतेः सात्त्विकवृत्त्युद्भवस्तामसवृत्त्यभिभवः कदाचित्। कदाचित्तामसवृत्त्युद्भवोऽभिभवश्च सात्त्विक्या वृत्तेः सेयं स्पर्धा। ते ह देवा ऊचुः। हन्तासुरान् यज्ञ उद्गीथेनात्ययाम असुरान् अयामास्मिन्नाभिचारिके यज्ञे उद्गीथलक्षणभागभक्त्युपलक्षितेनौद्गात्रेण कर्मणेति। ते ह वाचमूचुरित्यादिना सन्दर्भेण वाक्प्राणचक्षुःश्रोत्रमनसामासुरपाप्मविद्धतया निन्दित्वा अथ हेममासन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यं प्राणं प्राणाभिमानवतीं देवतामूचुस्त्वन्न उद्गायेति। तथेत्यभ्युपगम्य तेभ्य एव प्राण उदगायत् ते सुरा विदुरनेन प्राणेनोद्गात्रा नोऽस्मान् देवा अत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्नसुराः। यथाश्मानमृत्वा प्राप्य मृदा लोष्टो वा विध्वंसेत एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुः। तदेतत् संक्षिप्याह। "वाजसनेयके" इति। तथा छान्दोग्येऽप्येतदुक्तमित्याह। "तथा छान्दोग्येऽपि" इति। विषयं दर्शयित्वा विमृशति "तत्र संशयः" इति पूर्वपक्षं गृह्णाति "विद्यैकत्वमिति" पूर्वं समाक्षिपति "ननु न युक्तमिति" एकत्रोद्गातृत्वेनोच्यते प्राणः एकत्र चोद्गानत्वेन क्रियाकर्त्रोश्च स्फुटो भेद इत्यर्थः। समाधत्ते "नैष दोषः" इति। बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञायमानं किञ्चिल्लक्षणया नेतव्यम् न केवलं शाखान्तरे। एकस्यामपि शाखायां दृष्टमेतन्न च तत्र विद्याभेद इत्याह। "वाजसनेयकेऽपि च" इति। बहुतररूपप्रत्यभिज्ञानानुग्रहाय चोमित्यनेनापि उद्गीथावयवेन उद्गीथ एव लक्षणीय इति पूर्वपक्षः॥

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥७॥**

बहुतरप्रत्यभिज्ञानेऽपि उपक्रमभेदात्तदनुरोधेन चोपसंहा-

रवर्णनादिकमित्यादौ तत्रैव चोद्गीथस्य पुनःपुनः सङ्कीर्त्तनात् लक्षणायाश्च छान्दोग्ये वाजसनेयके प्रमाणाभावाद् विद्याभेद इति राद्धान्तः। ॐकारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानमोङ्कारस्य। तथाहि। भूतपृथिव्योषधिपुरुषवाकृक्सामाख्यानां पूर्वस्योत्तरमुत्तरं रसतया सारतयोक्तम्। तेषां सर्वेषां रसतम ओंकार उक्तः छान्दोग्ये। "न च विवक्षितार्थभेदः" इति। एकस्योङ्गीथोद्गातारावुपास्यत्वेन विवक्षितावेकत्र तदवयव ओङ्कार इति। तथा ह्यभ्युदयवाक्ये" इति। एवं हि श्रूयतेऽपि वा एतं प्रजया पशुभिरर्द्धयति वर्द्धयति अस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति। तत्र सन्देहः किं कालापराधे यागान्तरमिदं चोद्यते उत तेष्वेव कर्मसु प्रकृतेषु कालापराधे निमित्ते देवतापनय इति। एष तावदत्र विषयः। अमावास्यायामेव दर्शकर्मार्थं वेदिक्रियाग्निप्रणयनक्रिया व्रतादिश्च यजमानसंस्कारः। दध्यर्थश्च दोहः। प्रतिपदि च दर्शकर्मप्रवृत्तिरित्यनुष्ठानक्रमस्तात्त्विकः। यस्य तु यजमानस्य कुतश्चिद्भ्रमनिबन्धनाच्चतुर्दश्यामेवामावास्याबुद्धौ प्रवृत्तप्रयोगस्य चन्द्रमा अभ्युदीयते। तत्रेदं श्रूयते यस्य हविर्निरुप्तमिति, तेन यजमानेनाभ्युदितेनामावास्यायामेव निमित्ताधिकारं परिसमाप्य पुनस्तदहरेव वेद्युद्धरणादिकर्म कृत्वा प्रतिपदि दर्शः प्रवर्त्तयितव्यः। तत्राभ्युदये किं नैमित्तिकमिदं कर्मान्तरं दर्शाच्चोद्यते उत तस्मिन्नेव दर्शकर्मणि पूर्वदेवतापनयनेन देवतान्तरं विधीयत इति। तत्र हविर्भागमात्रश्रवणाच्चरुविधानसामर्थ्याच्च कर्मान्तरम्। यदि हि पूर्वदेवताभ्य

हवींषि विभजेदिति श्रूयेत ततस्तान्येव हवींषि देवतान्तरेण युज्यमानानि न कर्मान्तरं गमयितुमर्हन्ति, किन्तु प्रकृतमेव कर्म तद्धविष्कमपनीतपूर्वदेवताकं देवतान्तरयुक्तं स्यात्। अत्र पुनस्त्रेधा तण्डुलान् विभजेदिति हविष एव मध्यमादिक्रमेण विभागश्रवणात्। अनपनीता हविषि पूर्वदेवता इति पूर्वदेवतावरुद्धे हविषि देवतान्तरमलब्धावकाशं श्रूयमाणं कर्मान्तरमेव गोचरयेत्। अपि च प्राप्ते पूर्वस्मिन् कर्मणि दध्नस्तण्डुलानां पयसस्तण्डुलानां चेन्द्रादिदेवतासम्बन्धश्च विधातव्यः। चरुत्वं चात्र विहितं नास्तीति तदपि विधातव्यम्। तथाप्राप्ते कर्मणि अनेकगुणविधानात् वाक्यं भिद्येत। कर्मान्तरं त्वपूर्वं शक्यमेकेनैव प्रयत्नेनानेकगुणविशिष्टं विधातुमिति निमित्ते कर्मान्तरमेव विधीयते। दर्शस्तु लुप्यते कालापराधादिति प्राप्त उच्यते, न कर्मान्तरम्। पूर्वदेवतातो हविषो विभागपूर्वं निमित्ते देवतान्तरविधानात्। चरुर्थस्य चार्थप्राप्तेः। भवेदेतदेवं यदा त्रेधा तण्डुलान् विभजेदिति तण्डुलानां त्रेधा विभागविधानपरमेतद्वाक्यं स्यादपि तु वाक्यान्तरप्राप्तस्तण्डुलानां त्रेधात्वमनूद्य विभजेदित्येतावद्विधत्ते तत्र वाक्यान्तरालोचनया पूर्वदेवताभ्य इति गम्यते। तण्डुलानिति त्वविवक्षितं हविरुभयत्ववस्तथा च ये मध्यमा इत्यादीनि वाक्यान्यपनीते पूर्ववत् देवतासम्बन्धे हविषस्तस्मिन्नेव कर्मणि अप्रत्यूहं देवतान्तरसम्बन्धं विधातुं शक्नुवन्ति। तथाच द्रव्यमुखेन प्रकृतमुखप्रत्यभिज्ञानात् देवतान्तरसम्बन्धेऽपि न कर्मान्तरकल्पना भवितुमर्हति। ततश्च समाप्तेऽपि नैमित्तिकाधिकारे नित्याधिकारसिद्धयर्थं तान्येव पुनः कर्माण्यनुष्ठेयानि। न च दधनि चरुमिति चरुसमस्यर्थयोर्विधानं तयोरप्यर्थप्राप्तत्वात्। प्रकृते हि कर्मणि तण्डुलपिष्ट-

कर्त्तुम्। न च प्रत्यक्षश्रुतिविरोधो वीरहा वैत्यादेः प्रतिपत्त-गार्हस्थ्यं प्रमादादज्ञानाद्वाग्निमुद्वासयितुं प्रवृत्तं प्रत्युपपत्तेः। एवञ्च अविरोधे सिद्धवत्परामर्शादाश्रमान्तराणां शाखान्तरसिद्धिं वा कल्पयिष्यामो यथोपवीतविधिपरे वाक्ये उपव्ययते देवलक्ष्ममेव तत् कुरुते इत्यत्र निवीतं मनुष्याणां प्राचीनावीतं पितॄणामपि शाखान्तरसिद्धयोर्निवीतप्राचीनावीतयोः परामर्श इति॥

## विधिर्वा धारणवत्॥ २०॥

यद्यपि ब्रह्मसंस्थत्वस्तुतिपरतयाऽस्य सन्दर्भस्यैकवाक्यता गम्यते। सम्भवन्त्यामेकवाक्यतायां वाक्यभेदोऽन्याय्यः। तथाप्याश्रमान्तराणां पूर्वसिद्धेरभावात् परामर्शानुपपत्तेः, अपरामर्शे च स्तुतेरसम्भवेन किम्परतया एकवाक्यतास्तु इति तां भङ्क्त्वा धारणावद् वरमपूर्वत्वाद्विधिरेवास्तु। यथा अग्निहोत्रामिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरि धारणमपूर्वत्वात्। यथोक्तम् 'विधिस्तु धारणेऽपूर्वत्वात्' इति। तथेहाप्याश्रमान्तरपरामर्शश्रुतिविधिरेवेति कल्प्यते। सम्प्रति परामर्शेऽपीतरेषामाश्रमाणां ब्रह्मसंस्थतासंस्तवसामर्थ्यादेव विधातव्या। न खल्वविधेयं संस्तूयते तदर्थत्वात् संस्तवस्येत्याह। "यद्यपि" इति। अत्रावान्तरविचारमारभते "सा च किं चतुर्णु" इति। विचारप्रयोजनमाह। "यदि च" इति। ननु अनाश्रमस्यैव ब्रह्मसंस्था भविष्यतीत्यत आह। "नाश्रमित्वे" इति। तत्र पूर्वपक्षमाह। "तत्र तपःशब्देन" इति। अयमभिसन्धिः। न तावद् ब्रह्मसंस्थ इति पदं प्रत्यक्षमिति-तावयवार्थपरिज्ञानकोऽश्वकर्णादिपदवद्रूढम्। तदाश्रमप्राप्ति-

मात्रेणैव चामृतीभाव इति न तत्प्राप्ताय ब्रह्मज्ञानमपेक्षेत । तथा च नान्यः पन्था विद्यतेऽयनायेति विरोधः । न च सत्यवत्त्ववयवार्थे समुदायशक्तिकल्पना । तस्माद् ब्रह्मणि संस्थास्येति ब्रह्मसंस्थः । एवं चतुर्षु आश्रमेषु यस्यैव ब्रह्मणि निष्ठत्वमाश्रमिणः स ब्रह्मसंस्थोऽमृतत्वमेतीति युक्तम् । तत्र तावद् ब्रह्मचारिगृहस्थौ स्वशब्दाभिहितौ तपःपदेन च तपःप्रधानतया भिक्षुवानप्रस्थावुपस्थापितौ । भिक्षोरपि हि समधिकशौचाष्टग्रासभोजननियमाद् भवति वानप्रस्थस्तपःप्रधानः । न च गृहस्थादेः कर्मिणो ब्रह्मनिष्ठत्वासम्भवः । यदि तावत् कर्मयोगः कर्मिता । सा भिक्षोरपि कायवाङ्मनोभिरस्ति । अथ ये न ब्रह्मार्पणेन कर्म कुर्वन्ति किन्तु कामार्थितया ते कर्मिणः । तथा सति गृहस्थादयोऽपि ब्रह्मार्पणेन कर्म कुर्वाणा न कर्मिणः । तस्माद् ब्रह्मणि तात्पर्य्यं ब्रह्मनिष्ठता न तु कर्मत्यागः । प्रमाणविरोधात् । तपसा च द्वयोराश्रमयोरेकीकरणेन त्रय इति त्रित्वमुपपद्यते । एवं च त्रयोऽप्याश्रमा अब्रह्मसंस्थाः सन्तः पुण्यलोकभाजो भवन्ति यः पुनरेतेषु ब्रह्मसंस्थः सोऽमृतत्वभागिति । न च येषां पुण्यलोकभागित्वं तेषामेवामृतत्वमिति विरोधः । यथा देवदत्तयज्ञदत्तौ मञ्चस्थावभूतां सम्प्रति तयोर्यज्ञदत्तस्तु प्रासादाध्यासनात् पटुप्रज्ञो वर्त्तते इति तथेहापि य एवाब्रह्मसंस्थाः पुण्यलोकभाजस्त एव ब्रह्मसंस्था अमृतत्वभाज इत्यवस्थाभेदादविरोधः । तथा च ब्रह्मसंस्थ इति यौगिकं पदं प्रकृतविषयं भविष्यति । यथा आग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र विनियुक्तापि प्रकृतैवाग्नेयी गृह्यते । न च विनियुक्तविनियोगविरोधः । यदि त्वनाग्नेय्युपदिश्येत ततो यथा प्रतीता तथोच्छिद्येत । विनियुक्ता च प्रतीतिर्भवेत् इति विनि-

युक्तविनियोगविरोधः। इह तु श्रात्मोपासनोपाख्याने सा विधे-यत्वेन विनियुज्यते न तूद्दिश्यते। विधेयत्वेन च विनियोगे श्रात्मनोयोपदार्थापेक्षणात् प्रकृतातिक्रमे प्रमाणाभावात्। तावता च शास्त्रोपपत्तेर्नाप्रकृतानामपि सङ्ग्रहसम्भवः। न च यातयामतया न विनियोगः। वाचस्तोमे सर्वेषामिव मन्त्राणां विनियोगादन्यत्राप्यविनियोगप्रसङ्गात्। तथेहापि प्रकृता एवाश्रमा बुद्धिविपरिवर्त्तिनः परामृश्यन्ते नानुक्तः परिव्राडिवेति पूर्वः पक्षः। राद्धान्तमुपक्रमते। "तदयुक्तम्। नहि सत्यां गतौ वानप्रस्थविशेषणो न" इति। यथोपक्रान्तं तथैव परिसमापनमुचितम्। यत्सङ्ख्याकाश्च ये प्रसिद्धास्ते तत्सङ्ख्याका एव कीर्त्यन्त इति चोचितम्। न तु सत्यां गतावुक्तसङ्ख्यापवादो युज्यते। असाधारणैकैकेन लक्षणे-नैकैक आश्रमो वक्तुमुपक्रान्त इति तथैव समापनमुचितम्। न तु साधारणासाधारणाभ्यामुपक्रमसमाप्ती श्लिष्येते। न च तपो नाम नासाधारणं वानप्रस्थानामित्यत आह। "तप-श्चासाधारणं" इति। न खलु पराकादिभिः कायक्लेशः प्रधानो यथा वानप्रस्थस्तथा भिक्षुः सत्यप्यष्टग्रासादिनियमे। न च शौचमन्तोषशमदमादयस्तपःपक्षे वर्त्तन्ते तत्र हृद्धानां तपः-प्रसिद्धेरसिद्धेः। अत एव वृद्धाः तपसो भेदेन शौचादीनाच-क्षते। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति। सिद्धसङ्ख्याभेदेषु च सङ्ख्यान्तराभिधानमश्लिष्टमित्याह। "चतुष्टं न च" इति। "अपि च व्यपदेशो च" इति। अत्र एत इति किं भिक्षुरपि परामृश्यते किंवा भिक्षुवर्जमत्र एव न ता अमृत इति भिक्षुसंग्रहे तद्वर्जनमिति अत्र इत्यत्र वक्तुं शक्यम्। एत इति प्रकृतानां साकल्येन परामर्शात् भिक्षुसंग्रहे च न तस्य पुण्यलोकत्वमसत्त्वसत्त्वाभावाद् भिक्षोः। तेन

तत्र ब्रह्मसंस्थस्य सदा पुण्यलोकफलत्वममृतत्वं चेति विशेषः। त्रिषु च ब्रह्मसंस्थपदे यदेति सम्बन्धनीयम्। भिक्षौ च सदेति वैधर्म्यम्। तदिदमुक्तम्। "पृथक् च" इति। पूर्वपक्षाभासं स्मारयति। "कथं पुनर्ब्रह्मसंस्थशब्दो योगात्" इति। तन्निराकरोति। "यत्रोच्यते" इति। अयमभिसन्धिः। सत्यं यौगिकः शब्दः सति प्रकृतसम्भवे न तदतिपत्याऽप्रकृते वर्त्तितुमर्हति। असति तु सम्भवे मा भूत्प्रमादपाठ इत्यप्रकृते वर्त्तयितव्यः। दर्शितश्चात्रासम्भवोऽधस्तादिति। एष हि ब्रह्मसंस्थतालक्षणो धर्मो भिक्षोरसाधारण आश्रमान्तराणि तत्संस्थान्यतत्संस्थानि च भिक्षुस्तत्संस्थ इत्येव, तत्संस्थता हि स्वभावं व्यवच्छिन्दन्ती विरोधाद् यस्तत्संस्थ एव तत्राश्रमो नान्यत्र। शमदमादिस्तु तदीय इति स्वाङ्गमव्यवधायकमित्यर्थः। ब्रह्मसंस्थत्वमसाधारणं परिव्राजकधर्मं श्रुतिरादर्शयतीत्याह। "तथा च न्यासब्रह्म" इति। सर्वसङ्गपरित्यागो हि न्यासः स ब्रह्म कुत इत्यत आह। "ब्रह्मा हि परः"। अतः परो न्यासो ब्रह्मेति किमपेक्ष्य परः संन्यास इत्यत आह। "तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" इति। एतदुक्तं भवति। ब्रह्मपरतया सर्वैषणापरित्यागलक्षणो न्यासो ब्रह्मेति। तथा चेदृशं न्यासलक्षणं ब्रह्मसंस्थत्वं भिक्षोरेवासाधारणं नेतरेषामाश्रमिणाम्। ब्रह्मज्ञानस्य शब्दजनितस्य यः परीपाकः साक्षात्कारोऽपवर्गसाधनं तदङ्गतया पारिव्राज्यं विहितम्। न त्वनधिकृतं प्रतीत्यर्थः।

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

यद्यत्र सन्निधान उपासनाविधिर्नास्ति ततः प्रदेशान्तरस्थितोऽपि विधिरव्यभिचरिततद्विधिसम्बन्धेनोद्गीथेनोपस्थापितः

स एष रसानां रसतम इत्यादिना पदसंदर्भेणैकवाक्यभावमु-पगतः स्तूयते। नहि समभिव्याहृतेरेवैकवाक्यता भवतीति कश्चिन्नियमहेतुरस्ति। अनुषङ्गातिदेशसम्बन्धैरपि विध्यसम-भिव्याहृतैरर्थवादैरेकवाक्यताभ्युपगमात्। यदि तूद्गीथमुपासी-त सामोपासीतेत्यादिविधिसमभिव्याहारः श्रुतस्तथापि तस्यैव विधेः स्तुतिः। न तूपासनविषयसमर्पणपरं ओमित्येतद-क्षरमुद्गीथमित्यनेनैवोपासनाविषयसमर्पणादिति प्राप्तेऽभिधी-यते। न तावद् दूरस्थेन कर्मविधिवाक्येनैकवाक्यतासम्भवः। प्रतीतसमभिव्याहृतीनां विधिनैकवाक्यतया स्तुत्यर्थत्वमर्थवा-दानां गृहपटन्यायेन भवति। न तु स्तुत्या विना काचिदनु-पपत्तिर्विधेः। यथाहुः। अस्ति तु तदित्यतिरेके परिहार इति। अत एव विधेरपेक्षाभावात् प्रवर्त्तनात्मकस्यानुषङ्गा-तिदेशादिभिरर्थवादप्राप्त्यभिधानमसमञ्जसम्। न हि कर्मापे-क्षितोपायतायामनङ्गतायां प्राशस्त्यप्रत्ययस्यास्ति कश्चिदुप-योगः। तस्माद् दूरस्थस्य कर्मविधेः स्तुतावानर्थक्यम् । नैकवा-क्यतानुपपत्तेः संनिहितस्य तूपासनाविधेः किं विषयसमर्प-णेनोपयुज्यतामुत स्तुत्येति विषये विषयसमर्पणेन यथार्थ-वत्त्वं नैवं स्तुत्या बहिरङ्गत्वात्। अगत्या हि सा। तस्मा-दुपासनार्था इति सिद्धम्।

कुर्यात् क्रियेत कर्त्तव्यं भवेत् स्यादिति पञ्चमम्।

एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्॥

भावनायाः खलु कर्तृसमीहितानुकूलत्वं विधिर्निषेधश्च कर्तुरहितानुकूलत्वम्। यथाहुः। कर्त्तव्यश्च सुखफलोऽकर्त्तव्यो दुःखफल इति। एतच्चास्माभिरुपपादितं न्यायकणिकायाम्। क्रिया च भावना तद्वचनाश्च करोत्यादयः, यथाहुः कृभ्वस्तयः क्रियासामान्यवचना इति। अत एव कृभ्वस्तीनुदाहृतवान्

सामान्योक्तौ तद्विशेषाः पचेदित्यादयोऽपि गम्यन्त इति तत्र कुर्यादित्याश्रितकर्तृका भावना । क्रियेतेति चाश्रितकर्मिका भावना । कर्त्तव्यमिति तु कर्मभूतद्रव्योपसर्जनभावना । एवं दण्डी भवेद्दण्डिना भवितव्यं दण्डिना भवेतेत्येकधात्वर्थविषया विध्युपहिता भावना उदाहार्य्याः । भवतिश्च च जन्मनि । यथा कुलालव्यापाराद् घटो भवति बीजादङ्कुरो भवतीति प्रयुज्यते । न च बीजादङ्कुरोऽस्तीति प्रयुज्यते । तस्मादस्तिः सत्तायां न जन्मनीति ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

यद्यपि उपनिषदाख्यानानि विद्यासन्निधौ श्रुतानि । तथापि सर्वाण्याख्यानानि पारिप्लव इति सर्वश्रुत्या निःशेषार्थतया दुर्बलस्य सन्निधेर्बाधितत्वात् पारिप्लवार्थान्याख्यानानि । न च सर्वा दाशतयीरनुब्रूयादिति विनियोगेऽपि दाशतयीनां प्रातिस्विकविनियोगात्तत्र तत्र कर्मणि यथा विनियोगो न विरुध्यते तथेहापि सत्यपि पारिप्लवे विनियोगो सन्निधानाद् विद्याङ्गत्वमपि भविष्यतीति वाच्यम् । दाशतयीषु प्रातिस्विकानां विनियोगानां समुदायविनियोगस्य च तुल्यबलत्वादिह तु सन्निधानात् श्रुतेर्बलीयस्त्वात् । तस्मात् पारिप्लवार्थान्याख्यानानीति प्राप्ते, उच्यते । सर्वासामाख्यानानां पारिप्लवे विनियोगः । किन्तु पारिप्लवमाचक्षीतेत्युपक्रम्य यान्याख्यानानि मनुर्वैवस्वतो राजेत्यादीनि तेषामेव तत्र विनियोगः तान्येव हि पारिप्लवेन विशेषितानि । इतरथा पारिप्लवे सर्वाख्यानानामेव तावतैव गतत्वात् पारिप्लवमाचक्षीतेत्यनर्थकं स्यात् । आख्यानविशेषकत्वं त्वर्थवत् । तस्माद्विशेषणानुरोधात् सर्वशब्दस्तदपेक्षो न त्वशेषवचनः । यथा सर्वे ब्राह्मणा भोज-

यितव्या इत्यत्र निमन्त्रितापेक्षः सर्वशब्दः। तथा चोपनिषदाख्यानानां विद्याविधिसंनिधानात् विध्येकवाक्यता सोऽरोदीदित्यादीनामिव विध्येकवाक्यत्वं गमयतीति सिद्धम्। प्रतिपत्तिसौकर्यार्थं व्युपाख्यानेन हि शाला अध्यवधीयन्ते। यथा तद्वाख्यायिकयेति।

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

विद्यायाः क्रत्वर्थत्वे सति तया क्रतूपकरणाय स्वकार्याय क्रतुरपेक्षितः। तदभावे कस्योपकारो विद्ययेति। यदा तु पुरुषार्था तदा नानया क्रतुरपेक्षितः स्वकार्ये निरपेक्षाया एव तस्याः सामर्थ्यात्। अग्नीन्धनादिना चाश्रमकर्माण्युपलक्ष्यन्ते। यथाहुः' अग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति। स्वार्थसिद्धौ नापेक्षितव्यानि न तु स्वसिद्धाविति। एतच्चाधिकमुपरिष्टाद्वक्ष्यते। "नहि वञ्चया च" इति। एतत् प्रयोजनं पूर्वतनस्याधिकरणस्योक्तम्। अधिकविवक्षयेति यदुक्तं तदधिकमाह।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

यथा स्वार्थसिद्धौ नापेक्षन्ते आश्रमकर्माणि एवमुत्पत्तावपि नापेक्षेरन्निति शङ्का स्यात्। न च विविदिषन्ति यज्ञेनेत्यादिविरोधः। नह्येष विधिः, अपि तु वर्त्तमानापदेशः। स च स्तुत्याप्युपपद्यते। अपि च। अतश्च प्रतिपत्तयः। तत्राषि प्रथमा तावत् उपनिषद्वाक्यश्रवणमात्राद्भवति। यां किलाचक्षते श्रवणमिति। द्वितीया मीमांसासहिता तस्यादेवोपनिषद्वाक्याद्यामाचक्षते मननमिति। तृतीया चिन्ता सन्ततिमयी यामाचक्षते निदिध्यासनमिति। चतुर्थी साक्षात्कारवती वृत्तिरूपा आन्तरीयकं हि तस्याः केवल-

मिति। तत्राद्ये तावत् प्रतिपत्ती विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंस उपपद्येते एवेति न तत्र कर्मापेक्षा। ते एव च चिन्तामयीं तृतीयां प्रतिपत्तिं प्रसुवाते इति न तत्रापि कर्मापेक्षा। सा चादरनैरन्तर्यदीर्घकालासेविता साक्षात्कारवतीमाधत्त एव प्रतिपत्तिं चतुर्थीमिति न तत्राप्यस्ति कर्मापेक्षा। तन्नान्तरीयकञ्च कैवल्यमिति न तस्यापि कर्मापेक्षा। तदेवं प्रमाणतत्प्रमेयत उत्पत्तौ च कार्ये च न ज्ञानस्य कर्मापेक्षेति बीजशङ्कायाम्, एवं प्राप्त उच्यते। उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा विविदिषन्ति यज्ञेनेति श्रुतेः। न चेदं वर्त्तमानापदेशत्वात् स्तुतिमात्रमपूर्वत्वादर्थस्य यथा यस्य पर्णमयी जुहूर्भवतीति पर्णमयताविधिरपूर्वत्वात् न त्वयं वर्त्तमानापदेशः। अनुवादानुपपत्तेः। तस्मादुत्पत्तौ विद्यया शमादिवत् कर्माण्यपेक्ष्यन्ते। तत्राप्येवं विदिति विद्यास्वरूपसंयोगादन्तरङ्गाणि विद्योत्पादे शमादीनि बहिरङ्गानि कर्माणि विविदिषासंयोगात्तथा ह्याश्रमविहितनित्यकर्मानुष्ठानाद्धर्मसमुत्पादस्ततः पाप्मा विलीयते। स हि तत्त्वतोऽनित्याशुचिदुःखानात्मनि संसारे सति नित्यशुचिसुखादिलक्षणेन विभ्रमेण मलिनयति चित्तसत्त्वमधर्मनिबन्धनत्वाद् विभ्रमाणाम्। अतः पाप्मनः प्रक्षये प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य तात्त्विकीमनित्याशुचिदुःखरूपतामप्रत्यूहं विनिश्चिनोति। ततोऽस्यानभिरतिसंज्ञं वैराग्यमुपजायते। ततस्तज्जिहासाऽस्योपावर्त्तते। ततो हानोपाय पर्य्येषते पर्य्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इति शास्त्रादाचार्य्यवचनाच्चोपश्रुत्य तज्जिज्ञासत इति विविदिषोपहारमुखेनात्मज्ञानोत्पत्तावस्ति कर्मणामुपयोगः। विविदिषु खलु युक्त

एकाग्रतया श्रवणमनने कर्मसु उपयुज्यते। ततोऽस्य तत्त्वमसीति वाक्यार्थनिर्विचिकित्सज्ञानमुत्पद्यते। न च निर्विचिकित्सं तत्त्वमसीति वाक्यार्थमवधारयतः कर्मस्वधिकारोऽस्ति। येन भावनायां वा भावनाकार्ये वा साक्षात्कारे कर्मणामुपयोगः। एतेन वृत्तिरूपसाक्षात्कारकार्येऽपवर्गे कर्मणामुपयोगो दूरनिरस्तो वेदितव्यः। तस्मात्सुष्ठैव शमदमादयो यावज्जीवमनुवर्तन्ते एवमाश्रमकर्माप्यत्यन्तमोक्षिताभिधानम्। विदुषस्तत्त्वानधिकारादित्युक्तम्। दृष्टार्थेषु तु कर्मसु प्रतिषिद्धवर्जमनधिकारेऽपि अस्यास्य स्वारसिकी प्रवृत्तिरुपपद्यत एव। न हि तत्रान्वयव्यतिरेकसमधिगमनीयफलेऽस्ति विध्यपेक्षा। अतश्च भ्रान्त्या चैवाक्लिके कर्म वैदिकं च तथास्तु न इति प्रलापः। शमदमादीनां तु विद्योत्पादायोपायानामुपलब्धिमद्भिः भाष्यादनपेक्षितानामप्यनुवृत्तिः। उपपादितं चैतदस्माभिः प्रथमसूत्र इति नेह पुनः प्रत्याख्यते। तस्माद्विविदिषोत्पाद-द्वाराश्रमकर्मणां विद्योत्पत्तावुपयोगो न विद्याकार्य इति सिद्धम्। शेषमतिरोहितार्थम्।

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणसंवादे सर्वेन्द्रियाणां श्रूयते। एष किल विचारविषयः सर्वाणि खलु वागादीन्यवजित्य प्राणो मुख्य उवाचैतानि किं मेऽन्नं भविष्यतीति तानि चोचुः। यदिदं लोकेऽन्नमा च श्वभ्य आ च शकुनिभ्यः सर्वप्राणिनां यदन्नं तत्तवान्नमिति। तदनेन सन्दर्भेण प्राणस्य सर्वमन्नमिति अनुचिन्तनं विधायाह श्रुतिः। न ह वा एवंविधं किं चानन्नं भवतीति। सर्वं प्राणस्यान्नमित्येवं विदितम्। किञ्च नानान्नं भवतीति। तत्र संशयः। किमनन्नशंकाव्यमुक्तं शमादिवदनविद्या-

कृतया विधीयते । उत स्तुत्यर्थं सङ्कीर्त्यत इति । तत्र यद्यपि भवतीति वर्त्तमानापदेशात्र विधिः प्रतीयते । तथापि यथा यस्य पर्णमयी जुहूर्भवतीति वर्त्तमानापदेशादपि पलाशमयीत्वविधिप्रतिपत्तिः पञ्चमलकारापत्त्या । तथेहापि प्रवृत्तिविशेषकरतालाभे विधिप्रतिपत्तिः । स्तुतौ हि अर्थवादमात्रं न तथायथार्थविधौ । भक्ष्याभक्ष्यशास्त्रं च सामान्यतः प्रवृत्तमनेन विशेषशास्त्रेण बाध्यते । गम्यागम्यविवेकशास्त्रमिव सामान्यतः प्रवृत्तं वामदेवविद्याङ्गभूतसमस्तस्त्र्यपरिहारशास्त्रेण विशेषविषयेणेति प्राप्त उच्यते ।

अशक्तेः कल्पनीयत्वात् शास्त्रान्तरविरोधतः ।
प्राणस्यान्नमिदं सर्वमिति चिन्तनसंस्तवः ॥

न तावत् कौलेयकमर्य्यादमन्नं मनुष्यजातिना युगपत् पर्य्यायेण वा शक्यमत्तुम् । इभकरभकादीनामन्नस्य शमीकरीरकण्टककाष्ठादेरेकस्यापि अशक्यादनत्वात् । न चात्र लिङ इव स्फुटतरा विधिप्रतिपत्तिरस्ति । न च कल्पनीयो विधिरपूर्वत्वाभावात् । स्तुत्यापि च तदुपपत्तेः । न च सत्यां गतौ सामान्यतः प्रवृत्तस्य शास्त्रस्य विषयसङ्कोचो युक्तः तस्मात्सर्वं प्राणस्यान्नमित्यनुचिन्तनविधानस्तुतिरिति साम्प्रतम् । शक्यत्वे च प्रवृत्तिविशेषकरतोपयुज्यते नाशक्यविधानत्वे प्राणात्यय इति चावधारणपरं प्राणात्यय एव सर्वान्नत्वम् । तत्रोपाख्यानाच्च । स्फुटतरविधिश्रुतेश्च । सुरावर्जं विद्वांसमविद्वांसं प्रतिविधानात् । न त्वश्नतेति । इभ्येन सास्तिपकेन सामि खादितानवंधितान् स हि चाक्रायणो हस्तिपकोच्छिष्टान् कुल्माषान् भुञ्जानो हस्तिपकेनोक्तः । कुल्माषानिव मदुच्छिष्टमुदकं कल्माषानुपिबतीति । एवमुक्तस्तदुदकमुच्छिष्टदोषात् प्रत्याचचक्षे । कारणञ्चाबोचच ।

न वाऽजीविष्यं न जीविष्यामीतीमान् कुल्माषानखादम्। कामो म उदकपानमिति स्वातन्त्र्यं मे उदकपाने नदीकूपतडागप्रपादिषु यथाकामं प्राप्नोमीति नोच्छिष्टोदकाभावे प्राणात्यय इति तदोच्छिष्टभक्षणदोष इति मदचीहतेषु कुरुषु यावदवमनायया मुनिर्निरपत्रप इभ्येन सामिजग्धान् खादयामास।

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

नित्यानित्याश्रमकर्माणि यावज्जीवश्रुतेर्नित्यं विहितोपायतयाऽवश्यं कर्त्तव्यानि। विविदिषन्तीति च विद्यासंयोगात्। विद्यायाश्चावश्यम्भावनियमाभावादनित्यतां प्राप्नोति नित्यानित्यसंयोगश्चैकस्य न सम्भवति अवश्यम्भावानवश्यम्भावयोरेकत्र विरोधात्। न च वाक्यभेदादाश्रयतो विरोधः शक्योऽपनेतुम्। तस्मादनध्यवसाय एवात्रेति प्राप्तम्। एतेनैकस्य तूभयत्वे संयोगपृथक्त्वमित्याक्षिप्तमेवं प्राप्तेऽभिधीयते।

सिद्धे हि स्याद्विरोधोऽयं न तु साध्ये कथञ्चन।
विध्यधीनात्मलाभेऽस्मिन् यथाविधि मता स्थितिः॥

सिद्धं हि वस्तु विरुद्धधर्मसंयोगेन बाध्यते। न तु साध्यरूपं यथा षोडशिन एकस्य ग्रहणाग्रहणे। ते हि विध्यधीनत्वाद्विकल्प्येते एव। न पुनः सिद्धे विकल्पसम्भवः। तदिहैकमेवाग्निहोत्राख्यं कर्म यावज्जीवश्रुतेर्निमित्तेन युज्यमानं नित्यं विहितोपात्तदुरितप्रक्षयप्रयोजनमवश्यकर्त्तव्यं विद्याङ्गतया च विद्यायाः कादाचित्कतयानवश्यम्भावेऽपि काम्यो वा नैमित्तिको वा नित्यमर्थं विहत्य निविशते इति न्यायादनित्याधिकारेषु निविश्यमानमपि न नित्यमनित्ययति। तेनापि तद्विद्धेरिति संयोगपृथक्त्वाच्च नित्यानित्यसंयोगविरोध एकस्य

कार्य्यमेति सिद्धम् । सहकारित्वञ्च कर्मणां न कार्य्ये विद्यायाः किं तूत्पत्तौ कोऽर्थो विद्यासहकारीण्यपि कर्माणीत्ययमर्थः । सत्सु कर्मसु विद्यैव स्वकार्य्ये व्याप्रियते । यथा सहैव दर्भाभिः पुरुषो भारं वहति गर्दभीति सत्स्वेव दर्भपुरुषेषु सैव भारस्य वाहिकेति । "अविधिलक्षणत्वात्" इति । विहितं हि दर्शपौर्णमासाद्यङ्गैर्युज्यते न त्वविहितम् । ग्राहकग्रहणपूर्वकत्वादङ्गभावस्य विधेश्च ग्राहकत्वात् । अविहिते च तदनुपपत्तेः । अतएवासामपि च प्रतिपत्तीनां ब्रह्मणि विधानानुपपत्तिरित्युक्तं प्रथमसूत्रे । द्रष्टव्यो निदिध्यासितव्य इति च विधिसरूपं न विधिरित्यप्युक्तम् । उत्पत्तिं प्रति हेतुभावस्तु सत्त्वशुद्ध्या विविदिषोपजननद्वारेणाधस्तादुपपादितम् । असाध्यत्वाच्च विद्याफलस्यापवर्गस्य स्वरूपावस्थानलक्षणो हि सः । न च स्वं रूपं ब्रह्मणः साध्यं नित्यत्वात् । शेषमतिरोहितार्थम् ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

यथा मासमग्निहोत्रं जुहोतीति प्रकरणान्तरात् कर्मभेद एवमिहापि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इति क्रतुप्रकरणमतिक्रम्य श्रवणात् प्रकरणान्तरात्तद्बुद्धिव्यवच्छेदे सति कर्मान्तरमिति प्राप्त उच्यते । सत्यपि प्रकरणान्तरे तदेव कर्म, श्रुतेः स्मृतेश्च संयोगभेदः परं यथाऽग्निहोत्रं जुहुयात् स्वर्गकामो यावज्जीवमग्निहोत्रं जुहुयादिति तदेवाग्निहोत्रमुभयसंयुक्तम् । नहि प्रकरणान्तरं साक्षाद्भेदकम् । किन्तु अज्ञातज्ञापनस्वरसो विधिः प्रकरणैक्ये स्फुटतरप्रत्यभिज्ञावशेन स्वरसं जह्यात् । प्रकरणान्तरेण तु विघटितप्रत्यभिज्ञानः स्वरसमजहत् कर्म भिनत्ति । इह तु

सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुज्यमानानि न जुहोतीत्यादिवदपूर्वमेषां रूपमुत्पादयितुमर्हन्ति। न च तत्रापि नैयमिकाग्निहोत्रे नामविधिर्नापूर्वाग्निहोत्रोत्पत्तिरिति साम्प्रतम्। होम एव साक्षात् विधिश्रुतेः। कालस्य चानुपादेयस्याविधेयत्वात्। काले हि कर्म विधीयते न कर्मणि काल इत्युत्सर्गः। इह तु विविदिषायां विधिश्रुतिः न यज्ञादौ। तानि तु सिद्धान्येवानूद्यन्त इत्येककार्य्याणां यौगपद्यं सिद्धम्। स्मृतिरुक्ता लिङ्गदर्शनमुक्तम्।

## अन्तरा चापि तु तद्दृष्टेः॥ ३६॥

यदि विद्यासहकारीण्याश्रमकर्माणि हन्त भो विधुरादीनामनाश्रमिणामनधिकारो विद्यायाम्। अभावात्सहकारिणामाश्रमकर्मणामिति प्राप्त उच्यते। नात्यन्तमकर्माणो विधुरवाचक्नवीप्रभृतयः। सन्ति हि तेषामनाश्रमित्वे जपोपवासदेवताराधनादीनि कर्माणि। कर्मणां च सहकारित्वमुक्तम्। आश्रमकर्मणामुपलक्षणत्वादिति न तेषामनधिकारो विद्यासु। "अन्तरानुष्ठितैरपि च" इति। न खलु विद्याकार्य्ये कर्मणामपेक्षा। अपि तु उत्पादे उत्पादयन्ति च विविदिषोपहारेण कर्माणि विद्याम्। उत्पन्नविविदिषाणां पुरुषधौरेयाणां विदुरसंवर्त्तप्रभृतीनां कृतं कर्मभिः। यद्यपि चेह जन्मनि कर्माण्यननुष्ठितानि तथापि विविदिषातिशयदर्शनात् प्राचि भवेऽनुष्ठितानि तैरिति गम्यत इति। ननु यथाधीतवेद एव धर्मजिज्ञासायामधिक्रियते नानधीतवेद इह जन्मनि। तथेह जन्मन्याश्रमकर्मोत्पादितविविदिष एव विद्यायामधिकृतो नेतर इत्यनाश्रमिणामनधिकारो विधुरप्रभृतीनामित्यत आह। "दृष्टार्था च" इति। अविद्याग्नि-

वृत्तिविद्याया इत्यर्थः । स चान्वयव्यतिरेकसिद्धो न नियममपेक्षत इत्यर्थः । प्रतिषेधो विघातस्तस्याभाव इत्यर्थः । यद्यनाश्रमिणामप्यधिकारो विद्यायां कृतं तर्ह्याश्रमैरतिबहुलायासैरित्यत आह ॥

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

स्वस्थेनाश्रमित्वमास्थेयम् । दैवात् पुनः पत्न्यादिवियोगतः सत्यनाश्रमित्वे भवेदधिकारो विद्यायामिति श्रुतिस्मृतिसन्दर्भेण विविदिषन्ति यज्ञेनेत्यादिना न्यायस्त्ववगतः श्रुतिलिङ्गात् स्मृतिलिङ्गाच्चावगम्यते । तेनेति पुण्यकृदिति श्रुतिलिङ्गम्, अनाश्रमी न तिष्ठेतेत्यादि च स्मृतिलिङ्गम् ॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

आरोहवत् प्रत्यवरोहोऽपि कदाचिदूर्ध्वरेतसां स्यादिति मन्दाशङ्कानिवारणार्थमिदमधिकरणम् । पूर्वधर्मेषु यागहोमादिषु रागतो वा गृहस्थोऽहं पत्न्यादिपरिहतः स्यामिति नियमं व्याचष्टे "तथात्यन्तमात्मानम्" इति । अतद्रूपताम् अवरोहतुल्यताभावं, व्याचष्टे । "तथा च ब्रह्मचर्यं समाप्य" इति । अभावं शिष्टाचाराभावं, विभजते । "न चैवमाचाराः शिष्टाः" इति । अतिरोहितार्थमन्यत् ॥

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

प्रायश्चित्तं न पश्यामीति नैष्ठिकं प्रति प्रायश्चित्ताभावस्मरणात् नैर्ऋतगर्दभालम्भः प्रायश्चित्तमुपकुर्वाणकं प्रति । तस्माच्छिन्नशिरस इव पुंसः प्रतिक्रियाभाव इति पूर्वः पक्षः ।

सूत्रयोजना तु । न चाधिकारिकमधिकारलक्षणे प्रथम-काण्डे निर्णीतम् । अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकाल-त्वादित्यनेन यत्प्रायश्चित्तं तच्च नैष्ठिके भवितुमर्हति । कुतः । आरूढो नैष्ठिकमिति स्मृत्या पतनस्मृत्यनुमानात् तत्प्रायश्चि-त्तायोगात् ॥

**उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

श्रुतिस्तावत् स्वरसतोऽविशेषप्रवृत्तिर्ब्रह्मचारिमात्रस्य नैष्ठिक-स्योपकुर्वाणस्य चाविशेषेण प्रायश्चित्तमुपदिशति । नास्य प्रायश्चित्तं न पश्यामीति तु स्मृतिस्तस्यामपि च नास्य प्रा-यश्चित्तं न कर्त्तव्यमिति प्रायश्चित्तनिषेधो न गम्यते । न पश्यामीति तु दर्शनाभावेन सोऽनुमातव्यः । यथा च स्मृति-र्निषेधार्थेति अनुमाय तदर्था श्रुतिरनुमातव्या । श्रुतिस्तु सामान्यविषया विशेषमुपसर्पन्ती शीघ्रप्रवृत्तिरिति । अस्तु प्रायश्चित्तादर्शनन्तु यत्नगौरवार्थम् । एतदुक्तं भवति । कृत-निर्णेजनैरपि एतैर्न सङ्ख्यानं कर्त्तव्यमिति । सूत्रं तूप-पूर्वमपि पातकं नैष्ठिकस्यावकीर्णित्वं न महापातकमपरि-वकारार्थं अत एके प्रायश्चित्तभावमिच्छन्तीति । आचार्याणां विप्रतिपत्तौ विशेषाभावात्साम्यं भवेत् । शास्त्रस्था या वा प्रसिद्धिः सा ग्राह्या शास्त्रमूलत्वात् । उपपादितं च प्रायश्चित्त-भावप्रसिद्धेः शास्त्रमूलत्वमिति । सुगममितरत् । यदि नैष्ठि-कादीनामस्ति प्रायश्चित्तं तर्ह्येतैः कृतनिर्णेजनैः संव्यवह-र्त्तव्यमुत नेति । तत्र दोषकृतत्वादसंव्यवहारस्य प्रायश्चित्तेन तन्निबर्हणात् अनिबर्हणे वा तत्कारणवैयर्थ्यात्संव्यवहार्या एवेति प्राप्त उच्यते ॥

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

निषिद्धकर्मानुष्ठानजन्यमेनो लोकद्वयेऽप्यशुद्धिमापादयति दैधम् । कस्यचिदेनसो लोकद्वयेऽपि यद्युद्धिरपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैः कस्यचित् परलोकाशुद्धिमात्रमपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैरिहलोकाशुद्धित्वं-मनांपादिता न शक्यापनेतुम् । यथा स्त्रीबालादिघातिनाम् । यथाहुः । विशुद्धानपि धर्मतो न संपिबेदिति । यथा च, प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतः कृतमपि बालघ्नादिस्तु कृतनिर्णेजनोऽपि वचनादव्यवहार्य इह लोके जायत इति वचनस्य बालघ्नांश्चेत्यादि । तस्मात्सर्वमवदातम् ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

प्रथमे काण्डे शेषलक्षणे तथाकाम इत्यत्रर्त्विक्फलमस्य कर्मणः सिद्धे किंकामो यजमान उतार्त्विज्य इति संशय्यार्त्विज्येऽपि कर्मणि याजमान एव कामो गुणफलेष्विति निर्णीतमिह त्वंगजातीयकानि चाङ्गसम्बन्धानि उपासनानि किं याजमानान्युतार्त्विज्यानीति विचार्यत इति न पुनरुक्तम् । तद्योपासकानां फलश्रवणादनधिकारिणस्तदनुपपत्तेर्यजमानस्य च कर्मजनितफलोपभोगभाजोऽधिकारादृत्विजां च तदनुपपत्तेर्वचनाच्च राजाशास्यानीयात् क्वचिदृत्विजां फलश्रुतेरमति वचने यजमानस्य फलवदुपासनं तस्य फलश्रुतेः न च यको दाल्भ्यो विदाञ्चकारेत्यादेरुपासनस्य च सिद्धविषयतया न्यायापवादसामर्थ्याभावाद् याजमानमेवोपासनाकर्मेति प्राप्त उच्यते ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

उपाख्यानात्तावद् उपासनमौद्गात्रमवगम्यते । तद्भवति

सति बाधकेऽन्यथोपपादनीयम्। न चर्त्विक्कर्तृक उपासने यजमानगामिता फलस्यासम्भविनी तेन हि स परिक्रीतस्तद्गामिने फलाय घटते। तस्मान्न व्यसनितामात्रेणोपाख्यानमन्यथयितुं युक्तमिति राद्धान्तः।

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य निश्चयेन लब्ध्वा बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण इति। यत्र हि विधिविभक्तिः श्रूयते स विधेयो बाल्येन तिष्ठासेदित्यत्र च सा श्रूयते न श्रूयते तु मौने। तस्माद्यथाथ ब्राह्मण इत्यत्र तदश्रूयमाणविधिकमविधेयमेवं मौनमपि न चापूर्वत्वाद्विधेयं तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येति पाण्डित्यविधानादेव मौनसिद्धेः पाण्डित्यमेव मौनमिति। अथवा भिक्षुवचनोऽयं मुनिशब्दस्तत्र दर्शनात्। गार्हस्थ्यमाचार्यकुलं मौनवानप्रस्थमित्यत्र तस्यान्यतो विहितस्यायमनुवादः। तस्माद्बाल्यमेवात्र विधीयते। मौनन्तु प्राप्तं प्रशंसार्थमनूद्यत इति। युक्तं भवेदेवं यदि पण्डितपर्यायो मुनिशब्दो भवेदपि तु ज्ञानमात्रं पाण्डित्यं ज्ञानातिशयसम्पत्तिस्तु मौनम्। तत्रैव तत्प्रसिद्धेराश्रमभेदे तु तत्प्रवृत्तिर्गार्हस्थ्यादिपदसन्निधानात्तस्मादपूर्वत्वान्मौनस्य बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। एवं च निर्वेदनीयत्वमपि विधानमाञ्जसं स्यादित्याह। "निर्वेदनीयत्वनिर्देशात्" इति। कस्येदं मौनं विधीयते विद्यासहकारितयेत्यत आह। "तद्वतः" विद्यावतः सन्न्यासिनो भिक्षोः। पृच्छति। "कथम्" इति विद्यावत्ता प्रतीयते न सन्न्यासितेत्यर्थः। उत्तरं तदधिकारात्। भिक्षोस्तदधिकारात् तद्दर्शयति। "आत्मानं विदित्वा" इति। सूत्रावयवं योजयितुं शङ्कते। "ननु" इति। परिहरति।

"अत आह। पक्षेणेति"। विद्यावानिति न विद्यातिशयो विवक्षितोऽपि तु विद्योदयाभ्यासे प्रवृत्तो न पुनरुत्पन्नविद्यातिशयस्तथा चास्य पक्षे कदाचिद्भेददर्शनासम्भव इत्यर्थः। विध्यादिरविहिविधिमुख्यः प्रधानमिति यावत्। अत एव समिदादिर्विध्यन्तः स हि विधिः प्रधानविधेः पश्चादिति। तथाश्रूयमाणविधित्वेऽपूर्वत्वाद्विधिराश्रेय इत्यर्थः। ननु यद्ययमाश्रमो बाल्यप्रधानः कस्मात् पुनर्गार्हस्थ्येनोपसंहरतीति चोदयति। "एवं बाल्यादिविशिष्ट" इति। उत्तरं पठति।

## कृत्स्नभावात् तु गृहिणोपसंहारः॥ ४८॥

छान्दोग्ये बहुलायासमाध्यकर्मबहुलत्वाद् गार्हस्थ्यस्य चाश्रमान्तरधर्माणाञ्च केषाञ्चिदहिंसादीनां समवायात् तेनोपसंहारो न पुनस्तेन समापनादित्यर्थः। एवं तदाश्रमद्वयोपन्यासेन क्वचित् कदाचिदितराभावशङ्का मन्दबुद्धेः स्यादिति तदपाकरणार्थं सूत्रम्।

## मौनवदितरेषामप्युपदेशात्॥ ४९॥

वृत्तिवानप्रस्थानामनेकविधैरवं प्रव्राजाविशेषोऽपीति वृत्तिभेदोऽनुष्ठातारो वा पुरुषा भिद्यन्ते। तस्माद् द्वित्वेऽपि बहुवचनमविरुद्धम्॥

## अनाविष्कुर्वन्नन्वयात्॥ ५०॥

बाल्येनेति यावद्बालचरितश्रुतेः कामचारवादभक्षतायाबात्यन्तबाल्येन प्रसिद्धेः शौचादिनियमविधायिनश्च सामान्यशास्त्रस्यानेन विशेषशास्त्रेण बाधनात्सकलबालचरितविधानमिति प्राप्तेऽभिधीयते। विद्याङ्गत्वेन बाल्यविधानात् समस्तबालचर्यायां च प्रधानविरोधप्रसङ्गात्सदनुगुणमप्रौढेन्द्रियत्वादि भावशुद्धिरूपं तदेव विधीयते। एवं च शास्त्रान्त-

दाबाधेनाप्युपपत्तौ न शास्त्रान्तरबाधनमन्याय्यं भविष्यतीति।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

प्रकृतिमाह। "सर्वापेक्षा च" इति। किं श्रवणादिभिरिहैव वा जन्मनि विद्या साध्यते उतानियम इह वामुत्र वेति। यद्यपि कर्माणि यज्ञादीन्यनियतफलानि तेषां च विद्योत्पादसाधनत्वेन विद्योत्पादस्यानियमः प्रतिभाति। तथा च गर्भस्थस्य वामदेवस्यात्मप्रतिबोधश्रवणात्। अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति च स्मरणात् आमुष्मिकत्वमप्यवगम्यते। तथापि यज्ञादीनां प्रमेयाणामप्रमाणत्वाच्छ्रवणादेश्च प्रमाणत्वात्तेषामेव साक्षाद्विद्यासाधनत्वम्। यज्ञादीनां सत्त्वशुद्ध्याधानेन वा विद्योत्पादकश्रवणादिलक्षणप्रमाणप्रवृत्तिविघ्नोपशमेन वा विद्यासाधनत्वम्। श्रवणादीनां त्वनपेक्षाणामेव विद्योत्पादकत्वम्। न च प्रमाणेषु प्रवर्त्तमानाः प्रमातार ऐहिकमपि चिरभाविनं प्रमोत्पादं कामयन्ते किन्तु तादात्विकमेव प्रागेव तु पारलौकिकम्। नहि कुम्भदिदृक्षुश्चक्षुषी समुन्मीलयति कालान्तरीयाय कुम्भदर्शनाय किन्तु तादात्विकाय। तस्मादैहिकमेव विद्योत्पादो नानियतकालः। श्रुतिस्मृती च पारलौकिकं विद्योत्पादं स्तुत्या ब्रूते। इत्थम्भूतानि नाम श्रवणादीन्यावश्यकफलानि यत्कालान्तरेऽपि विद्यामुत्पादयन्तीति। एवं प्राप्त उच्यते। यत एवात्र विद्योत्पादे श्रवणादिभिः कर्त्तव्ये यज्ञादीनां सत्त्वशुद्धिद्वारेण वा विघ्नोपशमद्वारा वोपयोगोऽत एव तेषां यज्ञादीनां कर्मान्तरप्रतिबन्धाप्रतिबन्धाभ्यामनियतफलत्वेन तदपेक्षाणां श्रवणादीनामप्यनियतफलत्वं न्याय्यमनपहन-

विद्यानां श्रवणादीनामनुत्पादकत्वादविद्यकत्वाद्वा पुंसः प्रत्यनुत्पादकत्वात्। तथा च तेषां यज्ञाद्यपेक्षाणां तेषां चानियतफलत्वेन श्रवणादीनामप्यनियतफलत्वं युक्तमेवं श्रुतिस्मृतिप्रतिबन्धो न स्तुतिमात्रत्वेन व्याख्येयो भविष्यति। पुरुषाय विद्यार्थिनः साधनसामर्थ्यानुसारेण तदनुरूपमेव कामयिष्यन्ते तदिदमुक्तमभिसन्धेर्निरङ्कुशत्वादिति ॥

### एवं मुक्तिफलानियमस्तदवस्थावधृते-
### स्तदवस्थावधृतेः ॥ ५२ ॥

यथा ह्युपक्रान्तविद्यासाधनश्रवणादिवीर्यविशेषात्किल तत्फले विद्यायामैहिकामुष्मिकत्वलक्षण उत्कर्षो दर्शितः। तथा च यथा साधनोत्कर्षनिकर्षाभ्यां तत्फलस्य विद्याया उत्कर्षनिकर्षावेवं विद्याफलस्यापि मुक्तेरुत्कर्षनिकर्षौ सम्भाव्येते। न च मुक्तावैहिकामुष्मिकत्वलक्षणो विशेष उपपद्यते ब्रह्मोपासनापरिपाकलब्धजन्मनि विद्यायां जीवतो मुक्तेरवश्यम्भावनियमात् सत्यप्यारब्धविपाककर्मप्रचये। तस्मान्मुक्तावेव रूपतो निकर्षापकर्षौ स्याताम्। अपि च। सगुणानां विद्यानामुत्कर्षनिकर्षाभ्यां तत्फलानामुत्कर्षनिकर्षौ दृष्टाविति मुक्तेरपि विद्याफलत्वाद्रूपतश्चोत्कर्षनिकर्षौ स्यातामिति प्राप्त उच्यते। मुक्तेस्तत्र तथैकरूप्यश्रुतेरुपपत्तेश्च। साध्यं हि साधनविशेषाद्विशेषवद्भवति। न च मुक्तिर्ब्रह्मणो नित्यस्वरूपावस्थानलक्षणा नित्या सती साध्या भवितुमर्हति। न च सवासननिःशेषक्लेशकर्माशयप्रक्षयो विद्याया विशेषवान् येन तद्विशेषान्मोक्षो विशेषवान् भवेत्। न च सावशेषः क्लेशादिप्रक्षयो मोक्षाय कल्पते। न च चित्ताचित्तोत्पादानुत्पादावन्तरेण विद्यायामपि रूपतो भेदः

कश्चिदुपलक्ष्यते तस्या अप्येकरूपत्वेन श्रुतेः। सगुणायास्तु विद्यायास्तत्तद्गुणावापोद्वापाभ्यां तत्कार्यस्य फलस्योत्कर्षनिकर्षौ युज्येते। न चात्र विद्यात्वं सामान्यतो दृष्टं भवति। आगमतत्प्रभवयुक्तिबाधितत्वेन कालात्ययापदिष्टत्वात्। तस्मात्तस्या मुक्त्यवस्थाया ऐकरूप्यावधृतेर्मुक्तिलक्षणस्य फलस्याविशेषो युक्त इति॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां तृतीयाध्यायस्य चतुर्थः पादः॥

अध्यायश्च समाप्तः॥

---

## चतुर्थोऽध्यायः।

साभ्यथ्यां इह सन्तः स्वयं प्रवृत्ता न चेतरे शक्याः।
मत्सरपित्तनिबन्धनमचिकित्स्यमरोचकं येषाम्॥
शक्रे सम्प्रति निर्विशङ्कमधुना स्वाराज्यसौख्यं वक्र-
बन्द्रः सान्द्रतपःस्थितेषु कथमप्युद्वेगमभ्येष्यति।
यद्वाचस्पतिमिश्रनिर्मितमितव्याख्यानमात्रस्फुट
वेदान्तार्थविवेकवञ्चितभवाः स्वर्गेऽप्यमी निस्पृहाः॥

### आवृत्तिरसकृदुपदेशात्॥ १॥

साधनानुष्ठानपूर्वकत्वात् फलस्येव विषयक्रमेण विषयिणोरपि तद्विचारयोः क्रममाह। "तृतीयेऽध्याये" इति। मुक्तिलक्षणस्य फलस्यात्यन्तपरोक्षत्वात् तदर्थानि दर्शनश्रवणमनननिदिध्यासनानि चोद्यमानान्यदृष्टार्थानीति यावद्विधानमनुष्ठेयानि न तु ततोऽधिकमावर्तनीयानि प्रमाणाभावात्। यत्र पुनः सकृदुपदेशादुपासीतेत्यादिषु तत्र सकृदेव प्रयोगः प्रयाजादिवदिति प्राप्त उच्यते। यद्यपि मुक्तिरदृष्टचरी तथापि

सवासनाविद्योच्छेदेनात्मनः स्वरूपावस्थानलक्षणायाश्च मुक्तेः श्रुतिसिद्धत्वात् अविद्यायाश्च विद्योत्पादविरोधितया विद्योत्पादेन समुच्छेदस्याहिविभ्रमस्येव रज्जुतत्त्वसाक्षात्कारेण समुच्छेदस्योपपत्तिसिद्धत्वात् अन्वयव्यतिरेकाभ्यां च श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात्सकलदुःख-विनिर्मुक्तैक-चैतन्यात्मकोऽहमित्यपरोक्षरूपानुभवस्यापि श्रवणाद्यभ्याससाधनत्वमनुमानात्तदर्थानि श्रवणादीनि दृष्टार्थानि भवन्ति । न च दृष्टार्थत्वे सत्यदृष्टार्थत्वं युक्तम् । न चैतान्यनुष्ठानानि सत्कारदीर्घकालनैरन्तर्येण साक्षात्कारवतीं तादृशानुभवाय कल्पन्ते । न चासा-साक्षात्कारवद्विज्ञानं साक्षात्कारवतीमविद्यामुच्छेत्तुमर्हति । न खलु पित्तोपहतेन्द्रियस्य गुडे तिक्ततासाक्षात्कारोऽन्तरेण माधुर्यसाक्षात्कारं सहस्रेणाप्युपपत्तिभिर्निवर्तितुमर्हति । अतद्वतो नगाप्तवचांसि चोपपत्तिसहस्राणि वा परामृशतोऽपि थूत्कृत्य गुडत्यागात् । तदेवं दृष्टार्थत्वाद्ध्यानोपासनयोश्चात्मनीतावृत्तिकत्वेन लोकतः प्रतीतेरावृत्तिर्वेति सिद्धम् । अधिकरणार्थमुक्त्वा निरुपाधिब्रह्मविषयत्वमस्याक्षिपति । "अत्राह भवतु नाम" इति । साध्ये ह्यनुभवे प्रत्ययावृत्तिरर्थवती सामर्थ्यात्, नहि ब्रह्मानुभवो ब्रह्मसाक्षात्कारो नित्यशुद्धस्वभावाद् ब्रह्मणोऽतिरिच्यते । तथा च नित्यस्य ब्रह्मणः स्वभावो नित्य एवेति कृतमत्र प्रत्ययावृत्त्या । तदिदमुक्तम् "आ-त्मभूतम्" इति । आक्षेप्तारं प्रति प्राह । "सकृच्छ्रुतौ" इति । अयमभिसन्धिः । न ब्रह्मात्मभूतस्तत्साक्षात्कारोऽविद्यामुच्छिनत्ति तया सहानुवृत्तेरविरोधात् । विरोधे वा तस्य नित्यत्वादविद्योदयेत कुत एव तु तेन सहानुवृत्तिः । तस्माद-विद्याक्षये आगन्तुकस्तत्साक्षात्कार एषितव्यः । तथा च प्रत्य-

यानुवृत्तिरर्थवती। आक्षेप्ता सर्वपूर्वोक्ताक्षेपेण प्रत्यवति-ष्ठते। "नावृत्तावपि" इति। न खलु ज्योतिष्टोमवाक्यार्थ-प्रत्ययः सततमभ्यावर्त्यमानः साक्षात्कारप्रमाणं स्वविषये जन-यति। उत्पन्नस्यापि तादृशो दृष्टव्यभिचारत्वेन प्रातिभत्वात्। ब्रह्मात्मत्वप्रतीतिं ब्रह्मात्मसाक्षात्कारम्। पुनः शङ्कते। "न केवलं वाक्यम्" इति। आक्षेप्ता दूषयति। "तथाप्यावृत्त्या-नर्थक्यम्" इति। वाक्यं चेद् युक्त्यपेक्षं साक्षात्काराय प्रभ-वति। तथा सति कृतमावृत्त्या। सकृत्प्रवृत्तस्यैव तस्य सोपपत्तिकस्य यावत्कर्त्तव्यकरणादिति। पुनः शङ्कते। "अथापि स्यात्" इति। न युक्तिवाक्ये साक्षात्कारफले प्रत्यक्ष-स्यैव प्रमाणस्य तत्फलत्वात्। ते तु परोक्षार्थावगाहिनी सामान्यमात्रमभिनिविशेते न तु विशेषं साक्षात् कुरुत इति तद्विशेषसाक्षात्कारायावृत्तिरुपास्यते। सा हि सत्कारदीर्घ-कालनैरन्तर्यसेविता सती दृढभूमिर्विशेषसाक्षात्काराय प्रभ-वति कामिनीभावनेव स्त्रैणस्य पुंस इति। आक्षेप्ताह। "नास-कृदपि" इति। स खल्वयं साक्षात्कारः शास्त्रयुक्त्योर्निर्वा स्याद्भावनामात्रयोनिर्वा। न तावत् परोक्षावभासविज्ञानफले शास्त्रयुक्ती साक्षात्कारलक्षणं प्रत्यक्षप्रमाणफलं प्रसोतुम-र्हतः। न खलु कुटजबीजाद्वटाङ्कुरो जायते न च भावना-प्रकर्षपर्यन्तजमपरोक्षावभासमपि ज्ञानं प्रमाणं व्यभिचारा-दित्युक्तम्। आक्षेप्ता स्वपक्षमुपसंहरति। "तस्मात्सकृत्" इति। आक्षेप्ता आक्षेपान्तरमाह। न च सकृत् प्रवृत्तं इति। कश्चित् खलु शुद्धमना गर्भस्थ इव वामदेवः श्रुत्वा च मत्वा च क्षणमवधाय जीवात्मनो ब्रह्मात्मतामनुभवति। ततोऽप्यावृत्ति-रनर्थिकेति। अतश्चावृत्तिरनर्थिका यच्चिदंशस्य प्रत्यक्षाप्रत्यक्षत-या न तु व्यक्ताव्यक्तत्वे सामान्यविशेषवत् पद्मरागादि-

वदित्यत आह। "अपि चानेकांश" इति। समाधत्ते। "अत्रोच्यते भवेदावृत्त्यानर्थक्यम्" इति। अयमभिसन्धिः। सत्यं न ब्रह्मसाक्षात्कारः साक्षादागमयुक्तिफलमपि तु श्रुत्यागमार्थज्ञानाहितसंस्कारसचिवं चित्तमेव ब्रह्मणि साक्षात्कारवतीं बुद्धिवृत्तिं समाधत्ते। सा च नानुमानिकवह्निसाक्षात्कारवद्भ्रान्तित्वेनाप्रमाणं यदानीं वह्निस्वलक्षणस्य परोक्षत्वाद्यदातनन्तु ब्रह्मस्वरूपस्योपाधिकल्पितस्य जीवस्यापरोक्षत्वम्। नहि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते। जीव एव तु तत्तदुपाधिरहितः शुद्धादिस्वभावो ब्रह्मेति गम्यते। न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते। तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवेन श्रोत्रेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षयते एवं वेदान्तार्थज्ञानाहितसंस्कारो जीवस्य ब्रह्मस्वभावमन्तःकरणेनेति। "यस्तत्त्वमसीति सकृदुक्तमेव" इति। श्रुत्वा मत्वा च समवधाय प्राग्भवीयाभ्यासजातसंस्कारादित्यर्थः। "यस्तु न शक्नोति" इति। प्राग्भवीयब्रह्माभ्यासरहित इत्यर्थः। "नहि दृष्टेऽनुपपन्नं नाम" इति। यत्र परोक्षप्रतिभासिनि वाक्यार्थेऽपि व्यक्ताव्यक्तत्वतारतम्यम्। तत्र मननोत्तरकालमभ्यासेनाभ्यासनिकर्षप्रकर्षक्रमजन्मनि प्रत्ययप्रवाहे साक्षात्कारावधौ व्यक्तितारतम्यं प्रति कैव कथेति भावः। तदेवं वाक्यमात्रस्यार्थेऽपि न झगित्येव प्रत्यय इत्युक्तम्। तत्त्वमसीति तु वाक्यमत्यन्तदुर्बोधपदार्थं न पदार्थज्ञानपूर्वकं स्वार्थे ज्ञाने झगित्येव प्रवर्तते। किन्तु विवक्षिततत्पदार्थज्ञानमतिविलम्बेनेत्याह। "अपि च तत्त्वमसीत्येतद्वाक्यं त्वम्पदार्थस्य" इति। स्यादेतत्। पदार्थसंसर्गात्मा वाक्यार्थः पदार्थज्ञानक्रमेण तदधीननिरूपणीयतया क्रमवत्प्रतीतिर्युज्यते। ब्रह्म

तु निरंशत्वे नासंसृष्टनानात्वपदार्थकमिति कथमनुक्रमेण
क्रमवती प्रतीतिरिति सकृदेव तद्गृह्येत न वा गृह्येतेत्यु-
क्तमित्यत आह। "यद्यपि च प्रतिपत्तव्य आत्मा निरंशः"
इति। निरंशोऽप्यद्वयमपरोक्षोऽप्यात्मा तत्तदुपाध्यारोपव्युदा-
साभ्यामंशवानिवात्यन्तपरोक्ष इव। ततश्च वाक्यार्थतया
क्रमवत्प्रत्यय उपपद्यते। तत् किमियमेव वाक्यजनिता प्रतीति-
रात्मनि तथा च न साक्षात्प्रतीतिरात्मन्यनागतफलत्वादस्या
इत्यत आह। "तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः साक्षात्कार-
वत्याः"। एतदुक्तं भवति। वाक्यार्थश्रवणमननोत्तरकाला
विशेषणत्रयवती भावना ब्रह्मसाक्षात्काराय कल्पत इति
वाक्यार्थप्रतीतिः साक्षात्कारस्य पूर्वरूपमिति। प्रकृते।
"सत्यमेवम्" इति। समारोपो हि तत्त्वप्रत्ययेनापोद्यते न तत्त्व-
प्रत्ययः। दुःखित्वादिप्रत्ययस्तु नि सर्वेषां सर्वदोत्पद्यत इत्य-
बाधितत्वात्समीचीन इति बलवान्न शक्योऽपनेतुमित्यर्थः। निरा-
करोति। "न देहाद्यभिमानवत्" इति। नहि सर्वेषां सर्वदो-
त्पद्यत इत्येतावता तात्त्विकत्वम्। देहात्माभिमानस्यापि
सत्यत्वप्रसङ्गात्सोऽपि सर्वेषां सर्वदोत्पद्यते। उक्तं चास्य तत्र
तत्रोपपत्त्या बाधनमेवं दुःखित्वाद्यभिमानोऽपि। तथा नहि
नित्यशुद्धबुद्धस्वभावस्यात्मन उपजनापायधर्माणो दुःखशो-
कादय आत्मनो भवितुमर्हन्ति। नापि धर्मास्तेषां ततो-
ऽत्यन्तभिन्नानां तद्धर्मत्वानुपपत्तेः। नहि गौरश्वस्य धर्मः
सम्बन्धस्यापि व्यतिरेकाव्यतिरेकाभ्यां सम्बन्धासम्बन्धाभ्यां च
विचारासहत्वात्। भेदाभेदयोश्च परस्परविरोधेनैकत्रासम्भ-
वादिति। सर्वमेतदुपपादितं द्वितीयाध्याये। तदिदमुक्तं
"देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वात्" इति। इतश्च
दुःखित्वादीनां न तादात्म्यमित्याह। "सुषुप्तादिषु च" इति।

स्यादेतत्। कस्मादनुभवार्थ एवावृत्त्यभ्युपगमो यावता द्रष्टव्यः श्रोतव्य इत्यादिभिस्तत्त्वमसिवाक्यविषयादन्यविषयैवावृत्तिर्विधास्यत इत्यत आह। "तथापि न तत्त्वमसिवाक्यार्थात्" इति। आत्मा वा अरे द्रष्टव्य इत्यात्मविषयं दर्शनं विधीयते। न च तत्त्वमसिवाक्यविषयादन्यदात्मदर्शनमाम्नातं येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थः। सदेव सोम्येदमिति चोपक्रम्य तत्त्वमसीत्युपसंहृत इति स एव वाक्यार्थः। तदितः प्रच्याव्यावृत्तिमन्यत्र विदधानः प्रधानमङ्गेन विहन्ति वरो हि कर्मणाभिप्रेयमाणत्वात् सम्प्रदानं प्रधानम्। तमुद्वाहेन कर्मणाङ्गेन न विघ्नन्तीति। ननु विधिप्रधानत्वाद्वाक्यस्य न भूतार्थप्रधानत्वं भूतस्त्वर्थस्तदङ्गतया प्रत्याय्यते। यथाहुः। चोदना हि भूतं भवन्तमित्यादि शावरं वाक्यं व्याचक्षाणाः। कार्य्यमर्थमवगमयन्ती चोदना तच्छेषतया भूतादिकमवगमयतीत्याशङ्क्याह। "निवृत्तस्य चाविधिकृतोऽहम्"इति। यथा तावद्भूतार्थपर्य्यवसिता वेदान्ता न कार्य्यविधिनिष्ठास्तथोपपादितं तत्तु समन्वयादित्यत्र प्रत्युत विधिनिष्ठत्वे मुक्तिविरुद्धप्रत्ययोत्पादात् क्रियेव हन्त त्वमेवास्येत्यभ्युपगमात्र-] सर्वोक्तमिति।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

यद्यपि तत्त्वमसीत्याद्याः श्रुतयः संसारिणः परमात्मभावं प्रतिपादयन्ति तथापि तयोरपहतपाप्मत्वानपहतपाप्मत्वादिलक्षणविरुद्धधर्मसंसर्गेण नानात्वस्य विनिश्चयात् श्रुतेश्च तत्त्वमसीत्याद्याया मनो ब्रह्म [illegible]दित्यो ब्रह्मेत्यादिप्रतीकोपदेशपरतयाप्युपपत्तेः प[illegible] एवायम्। न च यथा समारोपितं [illegible]ना द्रव्यस्य विरो-

यत एवं प्रकाशात्मनो जीवभावमनूद्य परमात्मत्वं विधीयत इति युक्तम्। युक्तं हि शुक्तिवर्त्मनि द्रव्ये द्राघीयसि सामान्यरूपेणालोचिते विशेषरूपेणागृहीते विशेषान्तरसमारोपणमिह तु प्रकाशात्मनो निर्विशेषसामान्यस्यापराधीनप्रकाशस्य नागृहीतमस्ति किञ्चिद्रूपमिति कस्य विशेषस्याग्रहे किं विशेषान्तरं समारोप्यताम्। तस्माद्ब्रह्मणो जीवभावारोपासम्भवाज्जीवो जीवो ब्रह्म च ब्रह्मेति तत्त्वमसीति प्रतीकोपदेश एवेति प्राप्तम्, एवं प्राप्तेऽभिधीयते। स्वतःकर्तारात्मैव परमेश्वरः प्रतिपत्तव्यो न तु स्वतःकर्तात्मातिरिक्तः परमेश्वरः। भेदे हि गौणत्वापत्तिर्न च मुख्यसम्भवे गौणत्वं युक्तम्। अपि च प्रतीकोपदेशे सकृद्वचनं तु प्रतीयेत भेददर्शननिन्दा च। अभ्यासे हि भूयस्त्वमर्थस्य भवति, नाल्पत्वमतिदवीय एवोपचरितत्वम्। तस्मात्पौर्वापर्यालोचनया श्रुतेस्तावज्जीवस्य परमात्मता वास्तवीत्येतत्परता लक्ष्यते। न च मानान्तरविरोधादप्रामाण्यं श्रुतेः। न च मानान्तरविरोध इत्यादि तु सर्वमुपपादितं प्रथमाध्याये। निरंशस्यापि चानाद्यनिर्वाच्याविद्यातद्वासनासमारोपितविविधप्रपञ्चात्मनः सांशस्येव कस्यचिदंशस्याग्रहणाद्विभ्रम इव परमार्थस्तु न विभ्रमो नाम कश्चिन्न च संसारो नाम किन्तु सर्वमेतत्सर्वानुपपत्तिभाजनत्वेनानिर्वचनीयमिति युक्तमुत्पश्यामः। तदनेनाभिसन्धिनोक्तम्। "यद्येवं प्रतिबुद्धोऽपि नास्ति कस्यचिदप्रतिबोधः" इति। अन्येऽप्याहुः।

यद्यहं तेन सोपोऽस्मि युक्त एवास्मि सर्वदेति।
अतिरोहितार्थमन्यदिति॥

## न प्रतीके न हि सः॥ ४॥

यथा हि शास्त्रोक्तं शुद्धमुक्तस्वभावं ब्रह्मात्मत्वेनैव जीवेनोपास्यतेऽहं ब्रह्मास्मि तत्त्वमसि श्वेतकेतो इत्यादिषु तत्कस्य हेतोर्जीवात्मनो ब्रह्मरूपेण तात्त्विकत्वादद्वितीयत्वमिति श्रुतेश्च ।, जीवात्मानश्चाविद्यादर्पणा ब्रह्मप्रतिबिम्बकाः । यथा यथा यत्र यत्र मनो ब्रह्मादित्यो ब्रह्मेत्यादिषु ब्रह्मदृष्टेरुपदेशस्तत्र मर्वत्राहं मन इत्यादि द्रष्टव्यम् । "ब्रह्मणो मुख्यमात्मत्वम्" इति । अपरब्रह्म मनःप्रभृतीनां ब्रह्मविकारत्वेन तादात्म्यम् । घटशरावोदञ्चनादीनामिव मृद्विकाराणां मृदात्मकत्वम् । तथा च तादृशानां प्रतीकोपदेशानां क्वचित् कस्यचिद्विकारस्य प्रविलयावगमाद्धेटप्रपञ्चप्रविलयपरत्वमेवेति प्राप्त उच्यते । न तावदहं ब्रह्मेत्यादिष्वियमाहङ्कारास्पदस्य ब्रह्मात्मत्वमुपदिश्यते एवं मनो ब्रह्मेत्यादिष्वहङ्कारास्पदत्वं मनःप्रभृतीनां, किन्त्वेषां ब्रह्मत्वेनोपास्यत्वमहङ्कारास्पदस्य ब्रह्मतया ब्रह्मत्वेनोपासनीयेषु मनःप्रभृतिष्वपि शहङ्कारास्पदत्वेनोपासनमिति चेत्, न । एवमादिष्वहमित्यश्रवणात् । ब्रह्मात्मतया त्वहङ्कारास्पदत्वकल्पने तत्प्रतिबिम्बस्यैव तद्विकारान्तरस्याप्याकाशादेर्मनःप्रभृतिषूपासनप्रसङ्गः । यस्माद्यस्य यस्मात्तादात्म्यतयोपासनं विहितं तस्य तस्मात्तादात्म्यतयैव प्रतिपत्तव्यं यावद्वचनं वाचनिकमिति न्यायान्नाधिकमध्याहर्तव्यमतिप्रसङ्गात् । न च सर्वस्य वाक्यजातस्य प्रपञ्चस्य विलयः प्रयोजनं तदर्थत्वे हि मन इति प्रतीकग्रहणमनर्थकं विरुद्धमिति वाच्यम् । यथा सर्वं खल्विदं ब्रह्मेति । न च सर्वोपलक्षणार्थं मनोग्रहणं युक्तम् । मुख्यार्थमनोग्रहणं युक्तम् । मुख्यार्थसम्भवे लक्षणाया अयोगात् । आदित्यो ब्रह्मेत्यादीनां चानर्थक्यापत्तेः । "न ह्यप्युत्सकः प्रतीकानि" इति । अनुभवाद्धा प्रतीकानां मनःप्रभृतीनामात्मत्वे-

नाकलनं श्रुतेर्वा, न त्वेतदुभयमस्तीत्यर्थः। "प्रतीकाभावप्रसङ्गात्" इति। ननु यथावच्छिन्नस्याहङ्कारास्पदस्यानवच्छिन्नब्रह्मात्मतया भवत्यभाव एवं प्रतीकानामपि भविष्यतीत्यत आह। "स्वरूपोपमर्दे च नामादीनाम्" इति। इह हि प्रतीकान्यहङ्कारास्पदत्वेनोपास्यतया प्रधानत्वेन विधित्सितानि न तु तथ्यमसीत्यादावहङ्कारास्पदमुपास्यमवगम्यते किन्तु सर्पत्वानुवादेन रज्जुतत्त्वज्ञापन इवाहङ्कारास्पदस्यावच्छिन्नस्य प्रविलयोऽवगम्यते। किमतो यद्येवम् एतदतो भवति। प्रधानीभूतानां न प्रतीकानामुच्छेदो युक्तो न च तदुच्छेदे विधेयस्याप्युपपत्तिरिति। अपि च। "न च ब्रह्मण आत्मत्वात्" इति। ब्रह्मोपासनविधानानि जीवात्मनो ब्रह्मस्वभावप्रतिपादनपरैस्तत्त्वमस्यादिमन्त्रैरेकवाक्यभावमापद्यन्ते येन तदेकवाक्यतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्पेत भिन्नप्रकरणत्वात्तथा च तत्र यथा लोकप्रतीतिव्यवस्थितो जीवः कर्ता भोक्ता च संसारी न ब्रह्मेति कथं तस्य ब्रह्मात्मतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिरुपदिश्येतेत्यर्थः। "अतश्चोपासकस्य प्रतीकैः समत्वात्" इति। यद्यप्युपासको जीवात्मा न ब्रह्मविकारः, प्रतीकानि तु मनःप्रभृतीनि ब्रह्मविकारास्तथाप्यवच्छिन्नतया जीवात्मनः प्रतीकैः साम्यं द्रष्टव्यम्॥

## ब्रह्मदृष्टिरुत्कर्षात्॥ ५॥

यद्यपि सामानाधिकरण्यमुभयथापि घटते तथापि ब्रह्मणः सर्वाध्यक्षतया फलप्रसवसामर्थ्येन फलवत्त्वात् प्राधान्येन तदेवादित्यादिदृष्टिभिः संस्कर्तव्यमित्यादित्यादिदृष्ट्या ब्रह्मण्येव कर्तव्या न तु ब्रह्मदृष्टिरादित्यादिषु। न

चैवंविधेऽवधृते शास्त्रार्थे निकृष्टदृष्टिर्नोत्कृष्ट इति लौकिको न्यायोऽपवादाय प्रभवत्यागमविरोधेन तस्यैवापोदित्वादिति पूर्वपक्षसंक्षेपः। सत्यं सर्वाध्यक्षतया फलदातृत्वेन ब्रह्मण एव सर्वत्र वास्तवं प्राधान्यं तथापि शब्दगत्यनुरोधेन क्वचित् कर्मण एव प्राधान्यमवसीयते। यथा दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः चित्रया यजेत पशुकाम इत्यादौ। अत्र हि सर्वत्र यागाद्याराधिता यद्यपि देवतैव फलं प्रयच्छतीति स्थापितं तथापि शब्दतः कर्मणः करणत्वावगमेन फलत्वप्रतीतेः प्राधान्यम्। क्वचिद् द्रव्यस्य यथा व्रीहीन् प्रोक्षतीत्यादौ। तदुक्तं 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत' इति। तदिह यद्यपि सर्वाध्यक्षतया वस्तुतो ब्रह्मैव फलं प्रयच्छति तथापि शास्त्रं ब्रह्म दृष्ट्यादित्यादौ प्रतीक उपास्यमाने ब्रह्मफलाय कल्पते इति अभिवदति किं त्वादित्यादिदृष्ट्या ब्रह्मैव विषयीकृतं फलायेत्यभयथापि ब्रह्मणः सर्वाध्यक्षस्य फलदातृत्वोपपत्तेः शास्त्रार्थमन्दे हे लोकानुसारतो निर्णीयते। तदिदमुक्तम्। "निर्धारिते शास्त्रार्थे एतदेवं स्यात्" इति। न केवलं लौकिको न्यायो निर्णये हेतुरपि तु आदित्यादिशब्दानां प्राथम्येन मुख्यार्थत्वमपीत्याह। "प्राथम्याच्च" इति। इतिपरत्वमपि ब्रह्मशब्दस्यामुमेव न्यायमवगमयन्ति। तथाहि। स्वरसतया आदित्यादिशब्दा यथा स्वार्थे वर्तन्ते तथा ब्रह्मशब्दोऽपि स्वार्थे वर्त्तते यदि स्वार्थोऽस्य विवक्षितः स्यात् तथाचेतिपरत्वमनर्थकं तस्मादितिना स्वार्थात् प्रच्याव्य ब्रह्मपदं ज्ञानपरं स्वरूपपरं वा कर्त्तव्यम्। न च ब्रह्मपदमादित्यादिपदार्थं इति प्रतीतिपर एवायमिति परः शब्दो यथा गौरिति मे प्रतीतिरभवदिति। तथाच आदित्यादयो ब्रह्मेति प्रतिपत्तव्या इत्यर्थो भवतीत्याह। "इतिपर-

त्वादपि ब्रह्मशब्दस्य" इति। शेषमतिरोहितार्थम् ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

"अथवा नियमेनोद्गीथादिमतयआदित्यादिष्वध्यस्येरन्" इति। सत्स्वपि आदित्यादिषु फलानुत्पादादनुत्पादिनश्च कर्मण एव फलदर्शनात् कर्मैव फलवत्तया चादित्यादिमतिभिर्यद्युद्गीथादिकर्माणि विषयीक्रियेरन् तत आदित्यादिदृष्टिभिः कर्मरूपाण्यभिभूयेरन्। एवञ्च कर्मस्वरूपमतत्क एव कुतः फलमुत्पद्येत। आदित्यादिषु पुनरुद्गीथादिदृष्टावुद्गीथयज्ञाऽऽप्यमानानामादित्यादयः कर्मात्मकाः सन्तः फलाय कल्पेरन्त इति। अत एव च पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोग उपपन्नो यतः पृथिव्यामृग्दृष्टिरध्यस्ताग्नौ च सामदृष्टिः। नाग्नौ पुनरग्निदृष्टौ क्वचि च पृथिवीदृष्टौ विपरीतं भवेत्। तस्मादर्थेनैदैव युक्तमित्याह। "तथा चेयमेव" इति। उपपत्त्यन्तरमाह। "अपि च लोकेषु" इति। एवं सत्यधिकरणनिर्देशो विषयत्वप्रतिपादनपर उपपद्यते यदि लोकेषु सामदृष्टिरध्यस्येत नान्यथेति। पूर्वाधिकरणराद्धान्तोपपत्तिमत्रैवार्थे ब्रूते। "प्रथमनिर्दिष्टेषु च" इति। सिद्धान्तमव प्रक्रमते। "आदित्यादिमत एव" इति। यद्युद्गीथादिमतय आदित्यादिषु क्षिप्येरन् तत आदित्यानां स्वयमकार्यत्वादुद्गीथादिमतेस्तत्र वैयर्थ्यं प्रसज्येत। नह्यादित्यादिभिः किञ्चित् क्रियते यद्विद्यया वीर्यवत्तरं भवेत् आदित्यादिमत्या विद्ययोद्गीथादिकर्मसु कार्येषु यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीत्यादित्यमतीनामुपपत्ते उद्गीथादिषु संस्कारकत्वेनोपयोगः। चोदयति। "भवतु कर्मसमृद्धिफलेष्वेवम्" इति। यत्र हि कर्मणः फलं तत्रैव भवतु यत्र तु

गुणात् फलं तत्र गुणस्य सिद्धत्वे नाकार्य्यत्वात् करोतीत्येव
नास्तीत्यत्र विद्यायाः क उपयोग इत्यर्थः । परिहरति ।
"तेष्वपि" इति । न तावद्गुणः सिद्धस्वभावः कार्य्याय फलाय
पर्य्याप्तो मा भूत् प्रकृतकर्म्मानिवेशिनो यत् किञ्चित् फलोत्-
पादः । तस्मात् प्रकृतापूर्व्वसन्निवेशितः फलोत्पाद इति । तस्य
क्रियमाणत्वेन विद्यया वीर्य्यवत्तरत्वोपपत्तिरिति । "फलात्मक-
त्वाच्चादित्यादीनाम्" इति । यद्यपि ब्रह्मविकारत्वे नादित्या-
दीनाद्योर्विशेषस्तथापि फलात्मकत्वे नादित्यादीनामभ्युद्गी-
थादिभ्यो विशेष इत्यर्थः । द्वितीयानिर्देशादप्युद्गीथादीनां
प्राधान्यमित्याह । "अपि च कर्म्म" इति । स्वयमेवोपासनस्य
कर्म्मत्वात् फलवत्त्वोपपत्तेः । ननूक्तं सिद्धरूपैरादित्यादिभिर-
भ्यस्तैः साध्यभूतत्वमभिभूतं कर्म्मणामित अाह । "आदित्यादि-
भाविनापि दृश्यमानानाम्" इति । भवेदेतदेवं यद्यध्यासेन कर्म्म-
रूपमभिभूयेतापि तु माणवक इवाग्निदृष्टिः केनचित्तीक्ष्णत्वा-
दिना गुणेन गौण्यनभिभूतमाणवकत्वान्वयेनापि । नहीय
शुक्तिकायां रजतधीरिव वह्निधीर्येन माणवकत्वमभिभवेत्
किन्तु गौणी । तद्वदयमप्युद्गीथादावादित्यदृष्टिर्गौणीति भावः ।
"तदेतस्यामृच्यध्यूढं सामेति तु" इति । अन्यथापि लक्षणोप-
पत्तेः न ऋक्सामेत्यध्यासकल्पना पृथिव्यग्न्योरित्यर्थः । अल-
[illegible]लोचनया तु विपरीतमेवेत्याह । "इयमेव ऋक्" इति ।
लोकेषु पञ्चविधं सामोपासीतेति द्वितीयानिर्देशात् साम्नाम्
उपास्यत्वमवगम्यते । तत्र यदि सामधीरध्यस्येत ततो न
सामान्युपास्येरन् अपि तु लोकाः पृथिव्यादयः । तथा च
द्वितीयार्थं परित्यज्य तृतीयार्थः परिकल्प्येत साम्नेति लोके-
ष्विति सप्तमी द्वितीयार्थे कथञ्चिन्नीयते । अगारे गावो
वास्यन्तां प्रावारे कुसुमानीतिवत् । तेनोक्तन्यायानुरोधेन

सप्तम्याचोभयत्राप्यवयस्य कल्पनीयार्थत्वाद् वरं यथाश्रुतद्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्यातव्या। लोकपृथिव्यादिबुद्धा पञ्चविधं हिङ्कारप्रस्तावोद्गीथप्रतीहारनिधनप्रकारं सामोपासीतेति निर्णीयते। ननु यत्रोभयत्रापि द्वितीयानिर्देशो यथा खल्वमुमादित्यं सप्तविधं हिङ्कारप्रस्तावोद्गारोद्गीथप्रतीहारोपद्रवनिधनप्रकारं सामोपासीतेति, तत्र को विनिगमनायां हेतुरित्यत आह। "तत्रापि" इति। तत्रापि समस्तस्य सप्तविधस्य साम्न उपासनमिति साम्न उपास्यत्वश्रुतेः। साध्विति पञ्चविधस्य साधुत्वं चास्य धर्मत्वम्। तथाच श्रुतिः 'साधुकारी साधुर्भवति' इति। हिङ्कारानुवादेन पृथिवीदृष्टिविधाने हिङ्कारपृथिवीति प्राप्ते विपरीतनिर्देशः पृथिवी हिङ्कारः।

## आसीनः सम्भवात् ॥ ७ ॥

कर्माङ्गसम्बन्धिषु यत्र हि तिष्ठतः कर्म चोदितं तत्र तत्सम्बन्ध्युपासनापि तिष्ठतैव कर्तव्या। यत्र चासी[illegible] तत्रोपासनाप्यासीनेनैवेति। नापि सम्यग्दर्शने वस्तुतन्त्रत्वात् प्रमाणतन्त्रत्वाच्च प्रमाणतन्त्रा च वस्तुव्यवस्था प्रमाणं नापेक्षत इति तत्राप्यनियमः। यस्मादेता प्रयत्नेन विनोपासितुमशक्यम्। यथा प्रतीकादि यथा चाभ्युदयदर्शनमपि तच्च सत्यादि तत्रैषा चिन्ता। तत्र चोदकशास्त्राभावादनियमे प्राप्ते यथा शक्यत इत्युपदेशादासीनस्यैव नियम्। ननु यस्यामवस्थायां ध्यायतिरूपचर्यते प्रयुज्यते किमसौ तदा तिष्ठतं न भवति न भवतीत्याह। आसीनस्याविद्यमानायामो भवतीति। अतिरोहितार्थमितरत्॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यथैव इयौ शर्करावज्ञिवालुकाविवर्जित इत्यादिवचनाविषये सिद्धे दिग्देशादिनियममशाब्दिकमपि •प्राचीनप्रवणे वैश्वदेवेन यजेतेत्येवंवदिकारश्रमाम्नायात् क्वचित् क्वचिदाश्रयते। तमनुष्ठीतमाचार्यः सुखावेनैव तदाह च। तत्र-कापतो मनसम्भवैव भावनां प्रयोजयेत्। अविशेषात्। नद्यावास्ति वैश्वदेवादिवद्वचनं विशेषकं तस्मादिति॥

## आ प्रायणात्तत्रापि हि दृष्टम्॥ १२॥

अधिकरणविषयं विवेचयति। "तत्र यानि तावत्" इति। अविद्यमाननियोज्या या ब्रह्मात्मप्रतिपत्तिस्तस्याः शास्त्रं हि नियोज्यस्य कार्यरूपनियोगसम्बन्धमवबोधयति तस्यैव कर्मण्यवच्छेदलक्षणमधिकारं तच्चैतदुभयमतीन्द्रियत्वाद्भवति शास्त्रलक्षणं प्रमाणान्तराप्राप्ये शास्त्रस्यार्थवत्त्वात् ब्रह्मात्मत्वप्रतीतिस्तु जीवन्मुक्तेन दृष्टत्वादास्तीह निरोहितमिव किञ्चनेति किमत्र शास्त्रं करिष्यति। नन्वेवमप्यभ्युदयफलान्युपासनानि तत्र नियोज्यनियोगलक्षणस्य च कर्मणि स्वामितालक्षणस्य च सम्बन्धस्यातीन्द्रियत्वात्तत्र सकृत्करणादेव शास्त्रार्थसमाप्तौ प्रामायामुपासनपदवेदनीयावृत्तिमात्रमेव कृतवत उपरमः प्राप्तस्तावतैव कृतशास्त्रार्थत्वादिति प्राप्तेऽभिधीयते। यत्क्रतुरस्मिंल्लोके भवतीत्यादिश्रुतयैव स्वर्गादिफलानामपि कर्मणां प्रायणकाले स्वर्गादिविज्ञानापेक्षकत्वं तत्र कैव कथाऽतीन्द्रियफलानामुपासनानाम्। तानि खलु आ प्रायणं तत्तदुपास्यगोचरबुद्धिप्रवाहयाहितया दृष्टेनैव रूपेण प्रायणसमये तत् किं भावयिष्यन्ति। किमत्र फलवत्प्रायणसमये बुद्धाक्षेपेण यदि दृष्टे सम्भवत्यदृष्टकल्पना युक्ता। तस्मादा प्रायणं प्रवृत्ता वृत्तिरिति। तदिदमुक्तम्। "प्रत्ययास्त्वेते" इति।

तथा च श्रुतिः 'सर्वातीन्द्रियविषया स यथा क्रतुरस्माल्लोकात् प्रैति तावत् क्रतुर्हामुं लोकं प्रेत्याभिसम्भवति' इति। क्रतुः सङ्कल्पविशेषः। स्मृतयश्चोदाहृता इति॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ १३॥

गतस्तृतीयशेषः साधनगोचरो विचारः। इदानीमितद्ध्यायगतफलविषया चिन्ता प्रतन्यते। तत्र तावत्प्रथममिदं विचार्यते किं ब्रह्माधिगमे ब्रह्मज्ञाने सति ब्रह्मज्ञानफलान्मोक्षाद्विपरीतफलं दुरितं बन्धनफलं क्षीयते न क्षीयते इति संशयः। किं तावत् प्राप्तं, शास्त्रेण हि फलाय यद्विहितं प्रतिषिद्धं चानर्थपरिहारायाश्वमेधादि ब्रह्महत्यादि चापूर्वावान्तरव्यापारं किन्तदपूर्वमुपरतेऽपि कर्मण्यत्र सुखदुःखोपभोगात्प्राक् नाविरन्तुमर्हति। न हि तस्य विनाशहेतुस्तदभावे कथं विनश्येदिति। तस्याकस्मिकत्वप्रस...त् शास्त्रव्याकोपाश्चेति। अदत्तफलञ्चेत् कर्मापूर्वं विनश्यति कर्मण एव फलप्रसवसामर्थ्यबोधकशास्त्रमप्रमाणं भवेत्। न च प्रायश्चित्तमिव ब्रह्मज्ञानमदत्तफलान्यपि कर्मापूर्वाणि क्षिणोतीति साम्प्रतम्। प्रायश्चित्तानामपि तदप्रक्षयहेतुत्वान्न विधानस्य चैनस्विनराधिकारिप्राप्तिमात्रेणोपपन्नस्तुपात्तदुरितनिबर्हणफलापेक्षत्वायोगात्। अत एव स्मरन्ति नाभुक्तं क्षीयते कर्मेति। यदि पुनरपेक्षितोपायतायां प्रायश्चित्तविधिर्नियोज्यविशेषप्रतिलम्भमात्रेण निर्वृणोतीत्यपेक्षिताकाङ्क्षायां दोषसंयोगेन श्रवणान्निबर्हणफलं कल्प्येत। तथाऽपि ब्रह्मज्ञानस्य तत्संयोगेनाश्रवणान्न दुरितनिबर्हणसामर्थ्ये प्रमाणमस्ति। मोक्षवत्तस्यापि स्वर्गादिफलवद्देशकालनिमि-

त्तापक्षयोपपत्तेः। शास्त्रप्रामाण्यात्सम्भविष्यति। असाववस्था यस्यामुपभोगेन समस्तकर्मक्षये ब्रह्मज्ञानं मोक्षं प्रसोष्यति। योगर्द्धेर्वा दिवि भुव्यन्तरिक्षे बहूनि शरीरेन्द्रियाणि निर्माय फलान्युपभुञ्जानेन योगसामर्थ्येन योगी कर्माणि क्षपयित्वा मोक्षं सम्पत्स्यते। स्थिते चैतस्मिन्नर्थे न्यायबलाद्यथा पुष्करपलाश इत्यादिव्यपदेशो ब्रह्मविद्यास्तुतिमात्रपरतया व्याख्येय इति प्राप्ते, उच्यते। व्याख्यायेतैवं व्यपदेशो यदि कर्मविधिविरोधः स्यान्न त्वयमस्ति। शास्त्रं हि फलोत्पादनसामर्थ्यमात्रं कर्मणामवगमयति न तु कुतश्चिदागन्तुकान्निमित्ततः प्रायश्चित्तादेस्तदप्रतिबन्धमपि। तस्य तत्रौदासीन्यात्। यदि शास्त्रबोधितफलप्रसवसामर्थ्यमप्रतिबद्धमागन्तुकेन केनचित् कर्मणा ततस्तत्फलं प्रसूत एवेति न शास्त्रव्याघातः। नाभुक्तं कर्म क्षीयत इति च स्मरणमप्रतिबद्धसामर्थ्यकर्माभिप्रायम्। दोषक्षयोद्देशेन चापरविद्यानामस्ति [illegible]ध्यानमैश्वर्यफलानामप्युभयसंयोगाविशेषात्। यत्रापि निर्गुणायां परविद्यायां दोषोद्देशो नास्ति तत्रापि तत्स्वभावालोचनादेव तत्प्रक्षयप्रसवसामर्थ्यमवसीयते नहि तत्त्वमसिवाक्यार्थपरिभावनाभुवा प्रसंख्यानेन निर्मृष्टनिखिलकर्तृभोक्तृत्वादिविभ्रमो जीवः फलोपभोगेन युज्यते। नहि रज्ज्वां भुजङ्गसमारोपनिबन्धना भयकम्पादयः सति रज्जुतत्त्वसाक्षात्कारे प्रभवन्ति, किन्तु संस्कारशेषात् कियच्चित्कालमनुवृत्त्यापि निवर्त्तन्त एव। अमुमेवार्थमनुवदन्तो यथा पुष्करपलाश इत्यादयो व्यपदेशाः समवेतार्थाः सन्तो न स्तुतिमात्रतया कथञ्चिद्व्याख्यानमर्हन्ति। ननूक्तं सम्भविष्यति सावस्था जीवात्मनो यस्यां पर्यायेणोपभोगाद्वा योगर्द्धेः प्रभावतो युगपदनेकशरीरनिर्माणेनापर्यायेणोपभोगा-

वा खलु कर्माणि क्षपयित्वा मोक्षो सम्पद्यत इत्यत आह। एवमेव च मोक्ष उपपद्यत इति। अनादिकालप्रवृत्ता हि कर्माशया अनियतकालविपाकाः क्रमवता तावद्भोगेन चेत्-क्षय्याः। भुञ्जानः खल्वयमपरानपि सञ्चिनोति कर्माशयानिति। नाप्ययमुपभोगेनाशक्तः कर्मान्तराण्यसञ्चिन्वानः क्षेष्यतीति साम्प्रतम्। कल्पशतानि क्रमकालभोग्यानां सम्भाति भोक्तुमसामर्थ्यात्। दीर्घकालफलानि च कर्माणि कथमेकपदे क्षेष्यन्ति। तस्मान्नान्यथा मोक्षसम्भवः। ननु सत्स्वपि कर्माशयान्तरेषु सुखदुःखफलेषु मोक्षफलत्वात् कर्मणः समुदाचरतां ब्रह्मभावमनभूयार्थलब्धविपाकानां कर्मान्तराणां फलानि भोक्ष्यन्त इत्यत आह। "न च देशकालनिमित्तापेक्षः" इति। न हि कार्यः सन् मोक्षो मोक्षो भवितुमर्हति ब्रह्मभावो हि सः। न च ब्रह्म क्रियते नित्यत्वादित्यर्थः। परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य। ज्ञानफलं खलु मोक्षोऽभ्युपेयते। ज्ञानस्य चानन्तरभाविनि क्षेत्राभिव्यक्तिः फलं सर्वाविद्योच्छेदमादधतो ब्रह्मस्वभावस्वरूपावस्थानलक्षणाय मोक्षाय कल्पते। एवं हि दृष्टार्थता ज्ञानस्य स्यात्। अपूर्वाधानपरम्परया ज्ञानस्य मोक्षफले कल्प्यमाने ज्ञानस्य परोक्षफलत्वमदृष्टार्थत्वं भवेत्। न च दृष्टे सम्भवत्यदृष्टकल्पना युक्तेत्यर्थः। तस्माद् ब्रह्माधिगमे ब्रह्मज्ञाने सत्यदं तन्निष्ठो दुरितक्षय इति सिद्धम्।

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

अधर्मस्य स्वाभाविकत्वेन रागादिनिबन्धनत्वेन शास्त्रीयेण ब्रह्मज्ञानेन प्रतिबन्धो युक्तः। धर्मज्ञानयोस्तु शास्त्रीयत्वेन ज्योतिष्टोमदर्शपौर्णमासमन्दादिवदविरोधाच्छुभाच्चेत् भावो

युज्यते। पाप्मनश्च विशेषतो ब्रह्मज्ञानोच्छेद्यत्वश्रुतेर्धर्मस्य न तदुच्छेद्यत्वम्। विशेषविधानञ्च शेषप्रतिषेधनान्तरीयकत्वेन लोकतः सिद्धः। यथा देवदत्तो दक्षिणेनाक्ष्णा पश्यतीत्युक्ते न वामेन पश्यतीति गम्यते। उभे ह्येवैष एते तरतीति च यथायथं ब्रह्मज्ञानेन दुष्कृतं भोगेन सुकृतमिति। क्षीयन्ते चास्य कर्माणि इति च सामान्यवचनं सर्वे पाप्मान इति विशेषश्रवणात् पापकर्माणीति विशेषे उपसंहरणीयम्। तस्माद् ब्रह्मज्ञानाद् दुष्कृतस्यैव क्षयो न सुकृतस्येति प्राप्ते पूर्वाधिकरणराद्धान्तोऽतिदिश्यते। नो खलु ब्रह्मविद्या केनचिददृष्टेन द्वारेण दुष्कृतमपनयत्यपि तु दृष्टेनैव भोक्तृभोक्तव्यभोगादिप्रविलयद्वारेण तच्च तत्तुल्यं सुकृतेऽपीति कथमेतदपि नोच्छिन्द्यात्। एवञ्च सति न शास्त्रीयत्वसाम्यमात्रमविरोधहेतुर्नहि प्रत्यक्षत्वसामान्यमात्रादविरोधो ज्वलनजलादीनाम्। न च सुकृतशास्त्रमनर्थकमब्रह्मविदं प्रति तद्विधानस्यार्थवत्त्वात्। एवमवस्थिते च पाप्मश्रुत्या पुण्यमपि ग्रहीतव्यम्। ब्रह्मज्ञानमपेक्ष्य पुण्यस्य निकृष्टफलत्वात्तत्फलं हि क्षयातिशयवत्। नत्वेवं मोक्षो निरतिशयत्वान्नित्यत्वाच्च। दृष्टप्रयोगश्चायं पाप्मशब्दो वेदे पुण्यपापयोः। तद्यथा पुण्यपापे अनुक्रम्य सर्वे पाप्मानोऽतो निवर्त्तन्ते इत्यत्र तस्मादविशेषेण पुण्यपापयोरश्लेषविनाशाविति सिद्धम्॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः॥ १५॥

यद्यद्वैतज्ञानस्वभावालोचनयोरपूर्वसुकृतदुष्कृतयोरश्लेषविनाशौ हन्त प्रारब्धानारब्धकार्ययोरविशेषेणैव विनाशः स्यात्। कर्तृकर्मादिप्रविलयस्योभयत्राविशेषात्। तन्निबन्धनत्वाच्च विनाशस्य। न च संस्कारशेषात् कुलालचक्रभ्रमण-

वदनुवृत्तिः। वस्तुनः खल्वनुवृत्तिः। मायावादिनश्च पुण्यपापयोश्च मायामात्रविनिर्मितत्वेन मायानिवृत्तौ न पुण्यापुण्ये न तत्संस्कारो वस्तुसन्नस्तीति कस्यानुवृत्तिः। न च रज्ज्वां सर्पादिविभ्रमजनिता भयकम्पादयो निवृत्तेऽपि विभ्रमे यथानुवर्त्तन्ते तथेहापीति युक्तम्। तत्रापि सर्पासत्त्वेऽपि तज्ज्ञानस्य सत्त्वे तज्जनितभयकम्पादीनां तत्संस्काराणाञ्च वस्तुसत्त्वेन निवृत्तेऽपि विभ्रमेऽनिवृत्तेः। अत्र तु न माया न तस्याः संस्कारो न तद्गोचर इति तुच्छत्वात् किमनुवर्त्तेत। न संस्कारशेषो न कर्मेत्यविशेषेणारब्धकार्याणामनारब्धकार्याणां च निवृत्तिः। न च तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति श्रुतेर्देहपातप्रतीक्षारब्धकार्याणां युक्ता। नह्येषा श्रुतिरवधिभेदविधायिन्यपि तु क्षिप्रतापरा। यथा लोक एतावच्च चिरं यत् स्नातो भुङ्क्त इति। नहि तत्र स्नानभोजनेऽवधित्वेन विधीयेते किन्तु क्षेपीयस्ता प्रतिपाद्यते। उभयविधाने हि वाक्यं भिद्येतावधिभेदः क्षिप्रता चेति प्राप्तेऽभिधीयते। यद्यप्यद्वैतब्रह्मतत्त्वसाक्षात्कारो मायाविद्योपदर्शितप्रपञ्चमात्रविरोधितया तन्मात्रविरोधितया तदुपदर्शितसकलकर्मविरोधी। तथाप्यनारब्धविपाकं कर्मजातं द्रागित्येव समुच्छिनत्ति न त्वारब्धविपाकं सम्पादितजात्यायुर्नियतपूर्वापरीभूतसुखदुःखोपभोगप्रवाहं कर्मजातं तद्धि समुदाचरद्वृत्तितयैतेभ्यः प्रसुप्तवृत्तिभ्यो बलवदन्यथा देवर्षीणां हिरण्यगर्भमनूद्दालकप्रभृतीनां विगलितनिखिलाज्ञानावरणतया परितः प्रद्योतमानबुद्धिसत्त्वानां न चोज्जीविता भवेत्। श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता च महाकल्पकल्पमन्वन्तरादिजीविता च। न चैते महाधियो न ब्रह्मविदो ब्रह्मविद्याल्पपुण्यमेधसो मनुष्या इति श्रद्धेयम्।

तस्मादागमानुसारतोऽस्ति प्रारब्धविपाकानां कर्मणां प्रक्षयाय तदीयसमस्तफलोपभोगप्रतीक्षा सत्यपि तत्त्वसाक्षात्कारं । तावदेव चिरमिति न चिरता विधीयते अपि तु शुत्यन्तर-सिद्धां चिरतामनूद्य देहपातावधिमात्रविधानं तदेतदभिस-न्धायोचितमाक्षतयाह स्म भगवान् भाष्यकारः । "न ताव-देवानाश्रित्यारब्धकार्यं कर्माशयम्" इति । न चेदं न जातु दृष्टं यद्विरोधिसमवाये विरोध्यन्तरमनुवर्त्तत इत्याह । "अक-र्त्तात्मबोधोऽपि" इति । यदा लोकेऽपि विरोधिनः किञ्चित् कालं सत्त्वानुवृत्तिरुपलब्धा तदेहागमबलाद्दीर्घकालमपि भव-तीति न शक्या निवारयितुम् । प्रमाणसिद्धस्य नियोगपर्य्य-नुयोगानुपपत्तेः । तदेवं मध्यस्थान् प्रतिपाद्य ये भाष्यकार-प्राप्तं मन्यन्ते तान् प्रत्याह । "अपि च नैवात्र विवदितव्यम्" इति । स्थितप्रज्ञश्च न साधकस्तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात् । निरतिशयस्तु स्थितप्रज्ञः । स च सिद्ध एव । न च ज्ञानकार्य्या भयकम्पादयो ज्ञानमात्रादनु-त्पादात् । सर्पावच्छेदो हि तस्य भयकम्पादिहेतुः । स चासत्त्वानिर्वचनीय इति कुतो वस्तुसतः कार्य्योत्पादः । न च कार्य्यमपि भयकम्पादि वस्तु सत् । तस्यापि विचारासहत्वे-नानिर्वाच्यत्वात् । अनिर्वाच्याच्चानिर्वाच्योत्पत्तौ नानुपपत्तिः । यादृशो हि यक्षस्तादृशो बलिरिति सर्वमवदातम् ॥

## अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥१६॥

यदि पुण्यस्याप्यश्लेषविनाशौ हन्त नित्यमप्यग्निहोत्रादि न कर्त्तव्यं योगमारुरुक्षुणा । तस्यापीतरपुण्यवदिच्छया विना-शात् । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । न च विविदिषन्ति यज्ञेन दानेनेति मोक्षलक्षणैककार्य्यं तया

विद्याकर्मणोरविरोधः । सहासम्भवेनैककार्य्यत्वासम्भवात् । न खल्वेतमात्मानं विदुषो विगलिताखिलकर्तृभोक्तृत्वादिप्रपञ्चविभ्रमस्य पूर्वोत्तरे नित्ये क्रियाजन्ये पुण्ये सम्भवतः । तस्माद्विविदिषन्ति यज्ञेनेति वर्त्तमानापदेशो ब्रह्मज्ञानस्य यज्ञादीनां वा स्तुतिमात्रं न तु मोक्षमाणस्य मुक्तिसाधनं यज्ञादिविधिरिति प्राप्ते, उच्यते । सत्यं न विद्ययैककार्य्यत्वं कर्मणा परस्परविरोधेन सहासम्भवात् । विद्योत्पादकतया तु कर्मणामारादुपकारकाणामस्तु मोक्षोपयोगः । न च कर्मणां विद्यया विरुध्यमानानां न विद्याकारणत्वं स्वकारणविरोधिनां कार्य्याणां बहुलमुपलब्धेः । तथा च विद्यालक्षणकार्य्योपायतया कार्य्यविनाश्यानामपि कर्मणामुपादानमर्थवत् । तदभावे तत्कार्य्यस्यानुत्पादेन मोक्षस्यासम्भवात् । एवञ्च विविदिषन्ति यज्ञेनेति यज्ञसाधनत्वं विद्याया अपूर्वमर्थं प्रापयतः पञ्चमलकारस्य नात्यन्तपरोक्षवृत्तितया ज्ञानस्तुत्यर्थतया कथञ्चिद्व्याख्यानं भविष्यति । तदनेनाभिसन्धिनोक्तं "ज्ञानस्यैव हि प्रापकं कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते" । अत एव न विद्योदयसमये कर्मास्ति नापि परस्तात् । अपि तु प्रागेव विद्यायाः । अत एव चातिक्रान्तविषयमेतत्कार्य्यैकत्वाभिधानम् । एतदेव स्फोरयति । "नहि ब्रह्मविदः" इति । सूत्रान्तरमवतारयितुं पृच्छति "किं विषयं पुनरिदम्" इति । अस्योत्तरं सूत्रम् ।

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

काम्यकर्मविषयमस्त्वविनाशवचनं शाखान्तरीयवचनं च तस्य पुत्रा दायमुपयन्तीति ॥

यदेव विद्ययेति हि ॥ १८ ॥

अस्ति विद्यासंयुक्तं यज्ञादि य एवं विद्वान् यजेतेत्यादिकम्। अस्ति च केवलम्। तत्र यथा ब्राह्मणाय हिरण्यं दद्यादित्युक्ते विदुषे ब्राह्मणाय दद्यान्न ब्राह्मणब्रुवाय मूर्खायेति विशेषप्रतिलम्भः तत् कस्य हेतोस्तस्यातिशयवत्त्वात्। एवं विद्यारहिताद् यज्ञादेर्विद्यासहितमतिशयवदिति तस्यैव परविद्यासाधनत्वमुपात्तदुरितक्षयद्वारा नेतरस्य। तस्माद्विविदिषन्ति यज्ञेनेत्यविशेषश्रुतमपि विद्यासहितं यज्ञाद्युपसंहर्त्तव्यमिति प्राप्तेऽभिधीयते। यदेव विद्यया करोति तदेवास्य वीर्यवत्तरमिति तरप्श्रुतेर्विद्यारहितस्य वीर्यवत्तामात्रमवगम्यते। न च सर्वथाऽकिञ्चित्करस्य तदुपपद्यते। तस्मादेतस्यापि कयापि मात्रया परविद्योत्पादोपयोग इति विद्यारहितमपि यज्ञादि परविद्यार्थिनाऽनुष्ठेयमिति सिद्धम्॥

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते॥ १९॥

अनारब्धकार्ये इत्यस्य नञः फलं भोगेन निवृत्तिं दर्शयताऽनेन सूत्रेणास्य तूपपादनं पुरस्तादपक्रम्य कृतमिति नेह क्रियते पुनरुक्तभयात्॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्याय-

प्रथमः पादः समाप्तः॥

---

## वाङ्मनसि दर्शनाच्छब्दाच्च॥ १॥

अथास्मिन् फलविचारलक्षणे वाङ्मनसि सम्पद्यत इत्यादिविचारोऽसङ्गत इत्यत आह। "अथापरासु विद्यासु फलप्राप्तये" इति। अपरविद्याफलप्राप्त्यर्थं देवयानमार्गार्थत्वादुत्-

क्रान्तिस्तद्गतो विचारः पारम्पर्य्येण भवति फलविचार इति नामकृत इत्यर्थः। नन्वयमुत्क्रान्तिक्रमो विदुषो नोपपद्यते न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त इति श्रवणात् तत् कथमस्य विद्याधिकार इत्यत आह। "समाना हि विद्वदविदुषोः" इति। विषयमाह। "अस्ति" इति। विसृ-शति। "किमिह" इति। विषयः संशयः। पूर्वपक्षमाह। "तत्र वागेव" इति। श्रुतिलक्षणा। विषये संशये। सिद्धान्तसूत्रं पूरयित्वा पठति। "वाग्वृत्तिर्मनसि सम्पद्यते" इति। वृत्त्य-ध्याहारप्रयोजनं प्रश्नपूर्वकमाह। "कथम्" इति। उत्तराधि-करणपर्य्यालोचनेनैव पूरितमित्यर्थः। तत्त्वस्य धर्मिणो वाचः प्रलयविवक्षायां लिङ्ग सर्वत्रैव परत्रे ह चाविभागमाम्नात् किं परत्रैव विशिंष्यादविभाग इति न त्वत्रापि। तस्मादिहावि-भागेनाविशेषितोऽत्र वृत्त्युपसंहारमात्रविवक्षा तत्कारस्थिति गम्यते। सिद्धान्तहेतुं प्रश्नपूर्वकमाह। "कस्मात्" इति। सत्यामेव मनोवृत्तौ वाग्वृत्तेरुपसंहारदर्शनात्। वाचस्तु प्रका-रमदृष्टं नागमोऽपि गमयितुमर्हति। आगमप्रभवसृष्टिविरोधा-दागमो हि दृष्टानुसारतः प्रकृतौ हि विकाराणां लयमाह। न च वाचः प्रकृतिमनो येनास्मिन् विलीयेत तस्माद्वृत्तिमनोर-भेदविवक्षया वाक्पदं तद्वृत्तो व्याख्येयम्। सम्भवति च वाग्वृत्तेर्वागप्रकृतावपि मनसि लयः। तथा तत्र तत्र दर्शना-दित्याह। "वृत्त्युद्भवाभिभवौ" इति॥

## अत एव च सर्वाण्यनु॥ २॥

यतश्च प्रकृतिविकारभावाभावान्मनसि न स्वरूपलयो वाचोऽपि तु वृत्तिलयः। अत एव सर्वेषां चक्षुरादीनामिन्द्रि-याणां सत्येव सहान्तिके मनसि वृत्तेरनुगतिर्लयो न स्वरूप-

लयः। वाचस्तु पृथग्ग्रहणं पूर्वसूत्रे उदाहरणापेक्षं न तु तदेवेह विवक्षितमित्यर्थः।

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

यदि स्वप्रकृतौ विकारस्य लयस्ततो मनः प्राणे सम्पद्यत इत्यत्र मनःस्वरूपस्यैव प्राणे सम्पत्त्या भवितव्यम्। तथा हि मन इति नोपचारतो व्याख्यानं भविष्यति। सम्भवति हि प्रकृतिविकारभावः प्राणमनसोः। अन्नमयं हि सोम्य मन इत्यन्नात्मतामाह मनसः श्रुतिरापोमयः प्राण इति च प्राणस्याबाकृतताम्। प्रकृतिविकारयोस्तादात्म्यात्तथा च प्राणो मनसः प्रकृतिरिति मनसो वृत्तिमतः प्राणे लय इति प्राप्तेऽभिधीयते। सत्यमापोऽन्नमसृजन्त इति श्रुतेरबन्नयोः प्रकृतिविकारभावोऽवगम्यते। न तु तद्विकारयोः प्राणमनसोः। स्वयोनिप्रणाडिकया तु मिथो विकारयोः प्रकृतिविकारभावाभ्युपगमे सङ्करादतिप्रसङ्गः स्यात्। तस्माद् यो यस्य साक्षाद्विकारस्तस्य तत्र लय इत्यवस्थाप्य, लयो न स्वविकारे प्राणेऽविकारस्य मनसस्तत्र चावाप्ति मनोवृत्तिमति प्राणे लयो न तु वृत्तिमतो मनस इति सिद्धम्।

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

प्राणस्तेजसीति तेजःशब्दस्य भूतान्तरोपवचनत्वाद्विज्ञानात्मनि चाप्रसिद्धेः प्राणस्य जीवात्मन्युपगमानुगमावस्थानश्रुतीनां च तेजोद्वारेणाप्युपपत्तेस्तेजसि समापन्नवृत्तिः खलु प्राणस्तेजस्सु जीवात्मन्यवतिष्ठते। तद्द्वारा जीवात्मसमापन्नवृत्तिः प्राण इत्युपपद्यते। तस्मात्तेजस्येव प्राणवृत्तिप्रविलय इति प्राप्तेऽभिधीयते। स प्रकृतः प्राणोऽध्यक्षे विज्ञानात्मन्यवतिष्ठते तत्समापन्नवृत्तिर्भवति। कुतः। उपगमानुगमावस्थानेभ्यः

हेतुभ्यस्तत्रोपगमश्रुतिमाह। एवमेवेममात्मानमिति। अनुगमनश्रुतिमाह। "तमुत् क्रामन्तम्" इति। अवस्थानश्रुतिमाह। "सविज्ञानो भवतीति च" इति। विज्ञायतेऽनेनेति विज्ञानं पञ्चवृत्तिप्राणसहित इन्द्रियग्रामस्तेन सहावतिष्ठत इति सविज्ञानः। चोदयति। "ननु प्राणस्तेजसीति श्रूयते" इति। अधिकावापोऽशब्दार्थव्याख्यानम्। परिहरति। "नैष दोष इति"। यद्यपि प्राणस्तेजसोत्यतस्तेजसि प्राणवृत्तिलयः प्रतीयते। तथापि सर्वगतत्वात्प्रत्यगात्वेन विद्यानां श्रुत्यन्तरालोचनया विज्ञानात्मनि लयोऽवगम्यते। न च तेजसस्तत्र लय इति साम्प्रतम्। तस्यानिलाकाशक्रमेण परमात्मनि तत्त्वलयावगमात्। तस्मात्तेजोग्रहणेनोपलक्ष्यते तेजःसहचरितदेहबीजभूतपञ्चभूतसूक्ष्मपरिवाराध्यक्षो जीवात्मा तस्मिन् प्राणवृत्तिरवतिष्ठतीति। चोदयति। "ननु चेयं श्रुतिः" इति। तेजःसहचरितानि भूतान्युपलक्ष्यन्तां तेजःशब्देनाध्यक्षे तु किमायातं तस्य तत्साहचर्यादित्यर्थः। परिहरति। "सोऽध्यक्ष इत्यध्यक्षेऽपि" इति। यदा ह्ययं प्राणोऽन्तरालेऽध्यक्षं प्राप्याध्यक्षसम्पर्कवशादेव तेजःप्रभृतीनि भूतसूक्ष्माणि प्राप्नोति तदोपपद्यते प्राणस्तेजसीति। अत्रैव दृष्टान्तमाह। "योऽपि स्रुघ्नात्" इति। सूत्रान्तरमवतारयितुं पृच्छति। "कथं तेजःसहचरितेषु" इति॥

## नैकस्मिन् दर्शयतो हि॥ ६॥

अत्र भाष्यकारोऽनुमानदर्शनमाह। "कार्यस्य शरीरस्य" इति। स्थूलशरीरानुरूपमनुमेयं सूक्ष्ममपि शरीरं पञ्चात्मकार्यमित्यर्थः। दर्शयत इति सूत्रावयवं व्याचष्टे। "दर्शयतश्चैतमर्थम्" इति। प्रश्नप्रतिवचनाभिप्रायं द्विवचनं श्रुतिस्मृत्या-

भिप्रायं वा । अथवो मात्राः सूक्ष्मा दशार्धानां पञ्चभूताना-मिति । श्रुत्यन्तरविरोधं चोदयति । "ननु चोपसंहृतच-वागादिषु" इति । कर्माश्रयतेति प्रतीयते न भूताश्रयतेत्यर्थः । परिहरति । "अत्रोच्यते" इति । यद्वा इन्द्रियाणि पतित्र-हाद्यतिग्रहाः । कर्मणां प्रयोजकत्वेनाश्रयत्वं भूतानां तूप-दानत्वेनेत्यविरोधः । प्रशंसाशब्दोऽपि कर्मणां प्रयोजकतया प्रकृष्टमाश्रयत्वं ब्रूते सति निकृष्ट आश्रयान्तरे तदुपपत्तेरि-त्याह । "प्रशंसाशब्दादपि तत्र" इति ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

अत्रामृतत्वप्राप्तिश्रुतेः परविद्या च तं प्रत्येतदिति मन्वा-नस्य पूर्वः पक्षः । विशेषामानां मन्दिहानानां पुंसां चोदयति । "ननु विद्याप्रकरणे" इति । परिहरति । "न स्वापादिवत्" इति । परं विद्ययैवामृतत्वे प्राप्यत्वसामान्यात् तत्तधर्माय तद्विधर्मायान्या अवस्थास्तदनुगुणतयाम्नायन्ते । साधर्म्य-वैधर्म्याभ्यां हि स्फुटतरः प्रतिपिपादयिषिते वस्तुनि प्रत्ययो भवतीति । न तु विदुषः सकाशाद्विशेषवन्तोऽविद्वांसो विधी-यन्ते येन विद्याप्रकरणव्याघातो भवेदपि तु विद्यां प्रतिपाद-यितुं लोकसिद्धानां तदनुगुणतया तेषामनुवाद इति । एवं प्राप्तेऽभिधीयते । "समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्व-दविदुषोः" कुतः । "आसृत्युपक्रमात्" । सृतिः सरणं देवया-नेन यथा कार्यब्रह्मलोकप्राप्तिरासृतेराकार्यब्रह्मलोकप्राप्तेः । अर्थं विद्योपक्रम आरब्धः प्रयत्न इति यावत् । तस्मादेतदुक्तं भवति नेयं परा विद्या यतो न मोक्षनाडीद्वारमाश्रयते । अपि त्वपरविद्येयम् । न चास्यामात्यन्तिकः क्लेशप्रदाहो यतो न

तत्रोत्क्रान्तिर्भवेत्। तस्मादपरविद्यासामर्थ्यादापेक्षिकमाभूत-संप्लवस्थानममृतत्वं प्रेप्सते पुरुषार्थाय सम्भवत्येव उत्क्रान्ति-भेदवान्। सृत्युपक्रमोपदेशः। उपपूर्वादुष दाह इत्यस्माद्-पोष्येति प्रयोगः॥

## तदापीतेः संसारव्यपदेशात्॥ ८॥

सिद्धां कृत्वा बीजभावावशेषां परमात्मसम्पत्तिं विद्वदवि-दुषोरुत्क्रान्तिः समर्थिता। सैव सम्प्रति चिन्त्यते। किमा-त्मनि तेजःप्रभृतीनां भूतसूक्ष्माणां तत्त्वप्रविलय एव सम्पत्ति-राहोस्विद्बीजभावावशेषेति। यदि पूर्वः पक्षः, नोत्क्रान्तिः। अथोत्तरः, ततः सेति। तत्त्वप्रकृतौ न विकारतत्त्वप्रविलयो यथा मनसि न वागादीनाम्। सर्वस्य च जनिमतः प्रकृतिः परा देवतेति तत्त्वप्रलय एवात्यन्तिकः स्यात्तेजःप्रभृतीनामिति प्राप्तेऽभिधीयते।

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥

इत्यविद्यावतः संसारमुपदिशति श्रुतिः सेयमात्यन्तिके तत्त्वलये नोपपद्यते। न च प्रायणस्यैवैष महिमा विद्वांसमविद्वांसं वा प्रतीति साम्प्रतमित्याह। "अन्यथा हि सर्वः प्रायणसमय एव" इति। विधिशास्त्रं ज्योतिष्टोमादिविषय-मनर्थकं प्रायणादेवात्यन्तिकप्रलये पुनर्भवाभावात्। मोक्ष-शास्त्रं वा प्रयत्नलभ्यात् प्रायणादेव जन्तुमात्रस्य मोक्षप्राप्तेः। न केवलं शास्त्रानर्थक्यमयुक्तञ्च प्रायणमात्रान्मोक्ष इत्याह। "मिथ्याज्ञाने" इति। नासति निदानप्रशमे प्रशमस्तत्त्वतो युज्यत इत्यर्थः॥ एतेनेतरभूतसहितं तेजो जीवस्याश्रयभूत-मुत्क्रामद्देहाद्देहान्तरं वा सञ्चरत् कस्मादस्माभिर्न निरीक्ष्यते।

तस्य महत्त्वाद्वानेकद्रव्यत्वाद्वा रूपवदुपलब्धव्यम् । कस्माच्च मूर्त्यन्तरैः प्रतिबध्यत इति शङ्कामपाकर्तुमिदं सूत्रम् ।

### सूक्ष्मं परिमाणतश्च तथोपलब्धेः ॥ ९ ॥

चकारो भिन्नक्रमः । न केवलमापीतिस्तदवतिष्ठते । तच्च सूक्ष्मं स्वरूपतः परिमाणतश्च स्वरूपमेव हि तस्य तादृशमदृश्यम् । यथा चाक्षुषस्य तेजसो महतोऽपि । अदृष्टवशादनुद्भूतरूपस्पर्शं हि तत् । परिमाणतः सौक्ष्म्यं यतो नोपलभ्यते यथा त्रसरेणवो जालसूर्यमरीचिभ्योऽन्यत्र प्रमाणतस्तथोपलब्धेरिति व्याचष्टे । "तथाहि नाडीनिष्क्रमणे" इति । आदिग्रहणेन चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य इति संगृहीतम् । अप्रतिघाते हेतुमाह । "स्वच्छत्वाच्च" इति । एतदपि हि सूक्ष्मत्वेनैव संगृहीतम् । यथा हि काचाभ्रपटलं स्वच्छस्वभावस्य न तेजसः प्रतिघातकम् । एवं सर्वमेव वस्तुजातमस्येति ।

### नोपमर्देनातः ॥ १० ॥

अत एव च स्वच्छतालक्षणात्सौक्ष्म्यादमृतत्वापरनाम्नः ।

### अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

उपपत्तिः प्राप्तिः । एतदुक्तं भवति । दृष्टश्रुताभ्यामूष्मणोऽन्वयव्यतिरेकाभ्यामस्ति स्थूलाद्देहादतिरिक्तं किंचित् । आगमात् सूक्ष्मं शरीरमिति ॥

### प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

अधिकरणतात्पर्यमाह । "अमृतत्वञ्चानुपोष्येत्यतो विशेषणात्" इति । विषयमाह । "अथाकामयमान" इति । सिद्धान्तसमतामाशङ्क्य तन्निराकरणेन पूर्वपक्षी स्वमतमवस्थाप-

यति। "अतः परविद्याविषयात्प्रतिषेधात्" इति। यदि हि प्राणोपसंहितस्य सूक्ष्मशरीरस्य जीवात्मनः स्थूलशरीरादुत्क्रान्तिं प्रतिषेधेत् श्रुतिः तत एतदुपपद्यते। न त्वेतदस्ति। न तस्मात्प्राणा उत्क्रामन्तीति हि तदा सर्वनाम्ना प्रधानावमर्शिनाभ्युदयनिःश्रेयसाधिकृतो देही प्रधानं परामृश्यते। तथाच तस्माद्देहिनो न प्राणाः सूक्ष्मं शरीरमुत्क्रामन्त्यपि तु तत्सहितः क्षेत्रज्ञ एवोत्क्रामतीति गम्यते। स पुनरतिक्रम्य ब्रह्मनाड्या संसारमण्डलं हिरण्यगर्भपर्यन्तं सलिङ्गो जीवः परस्मिन् ब्रह्मणि लीयते तस्मात्परामपि देवतां विदुष उत्क्रान्तिरत एव मार्गश्रुतयः। स्मृतिश्च मुमुक्षोः शुक्लस्यादित्यमण्डलप्रस्थानं दर्शयतीति प्राप्तम्, एवं प्राप्ते प्रत्युच्यते॥

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

नायं देह्यपादानस्य प्रतिषेधः। अपि तु देहापादानस्य। तथाह्यार्तभागप्रश्नानन्तरं ह्येकस्मिन् पक्षे संसारिण एव जीवात्मनोऽनुत्क्रान्तिं परिगृह्य न तस्यापि मृतः प्राणा अनुत्क्रामन्तीति स्वयमागत्य प्राणानां प्रविलयं प्रतिज्ञाय तत्सिद्धयमुत्क्रान्त्यवधेरुच्छ्वयनाध्माने ब्रुवन्नस्योच्छ्वयनाध्माने तस्य तदवधित्वमाह। शरीरस्य च ते इति शरीरमेव तदपादानं गम्यते। नन्वेवमप्यस्याविदुषः संसारिणो विदुषस्तु किमायातमित्यत आह। "तत्सामान्यात्" इति। ननु तदा सर्वनाम्ना प्रधानतया देही परामृष्टः तत्कथमत्र देहावगतिरित्यत आह। "अभेदोपचारेण देहदेहिनोर्देहपरामर्शिना सर्वनाम्ना देह एव परामृष्टः" इति। पञ्चमीपाठे व्याख्येयम्। षष्ठीपाठे तु नोपचार इत्याह। "येषां तु षष्ठी" इति। अपि च प्राप्तिपूर्वः प्रतिषेधो भवति नाप्राप्ते। अविदुषो हि देहा-

दुपक्रमणं दृष्टमिति विदुषोऽपि तत्सामान्याद्देहादुपक्रमणे प्राप्ते प्रतिषेध उपपद्यते न तु प्राणानां जीवावधिकं क्वचिदुत्क्रमणं दृष्टं येन तन्निषिध्यते। अपि चाद्वैतपरिभावनाभुवा प्रसंख्यानेन निर्मृष्टनिखिलप्रपञ्चावभासजातस्य गन्तव्याभावादेव नास्ति गतिरित्याह। "न च ब्रह्मविदः" इति। अपदस्य हि ब्रह्मविदो मार्गं पदैषिणोऽपि देवा इति योजना। चोदयति। "ननु गतिरपि" इति। परिहरति। "सशरीरस्यैवायं योगबलेन"। अपरविद्याबलेनेति॥

## तानि परे तथा ह्याह ॥ १५ ॥

प्रतिष्ठा-विलयनश्रुत्योर्विप्रतिपत्तिविमर्शस्तमपनेतुमयमारम्भः। तानि पुनः प्राणशब्दोदितानीन्द्रियाण्येकादश सूक्ष्माणि च भूतानि पञ्च। "ब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि" इति। आरम्भबीजं विमर्शमाह। "ननु गताः कलाः" इति। प्राणमनसोरेकप्रकृतित्वं विवक्षित्वा पञ्चदशत्वमुक्तम्। अत्र श्रुत्योर्विषयव्यवस्थया विप्रतिपत्त्यभावमाह। "सा खलु" इति। व्यवहारो लौकिकः सांव्यवहारिकप्रमाणापेक्षेयं श्रुतिः। न तात्त्विकप्रमाणापेक्षा इतरा तु एवमेवास्य परिद्रष्टुरित्यादिका विद्वत्प्रतिपत्त्यपेक्षा तात्त्विकप्रमाणापेक्षा तस्माद्विषयभेदादविप्रतिपत्तिः श्रुत्योरिति॥

## अविभागो वचनात् ॥ १६ ॥

निमित्तापाये नैमित्तिकस्यात्यन्तिकापायः। अविद्यानिमित्तश्च विभागो नाविद्यायां विद्यया समूलघातमपहतायां सावशेषो भवितुमर्हति। तथापि प्रविलयसामान्यात् सावशेषताशङ्कामतिमन्दामपनेतुमिदं सूत्रम्॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्या-

## सामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

अपरविद्याविदोऽविदुषश्चोत्क्रान्तिकथा। तत्र किं विद्वानविद्वांश्चाविशेषेण मूर्धादिभ्य उत्क्रामत्याहो विद्वान्मूर्धस्थानादेव। अपरे तु स्थानान्तरेभ्य इति। अत्र विद्यासामर्थ्यमपश्यतः पूर्वपक्षः। तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयं तस्याग्रं तस्य ज्वलनं यत् तत्प्रकाशितद्वारो विनिष्क्रमद्वारो विद्वान्मूर्धस्थानादेव निष्क्रामति नान्येभ्यश्चक्षुरादिस्थानेभ्यः। कुतो विद्यासामर्थ्यात्। हार्दविद्यासामर्थ्यादुत्कृष्टस्थानप्रतिलम्भाय हि हार्दविद्योपदेशः मूर्धस्थानादनिष्क्रमणे च नोत्कृष्टदेशप्राप्तिरन्यस्थानान्तरेभ्योऽप्युत्क्रामन् कस्माल्लोकमुत्कृष्टं न प्राप्नोतीत्यत आह। तच्छेषगत्यनुस्मृतियोगाच्च। हार्दविद्याशेषभूता हि मूर्धन्या नाडी गत्यै उपदिष्टा। तदनुशीलनेन खल्वयं जीवो हार्देन रूपासितेन ब्रह्मणानुगृहीतस्तद्भावमापन्नस्तद्भावमापन्नो मूर्धन्ययैव शताधिकया नाड्या निष्क्रामति। हृदयादूर्ध्वगता हि ब्रह्मनाडी भास्वरा तालुमूलं भित्त्वा मूर्धानमेत्य रश्मिभिरेकीभूता आदित्यमण्डलमनुप्रविष्टा तामनुशीलयतस्तयैवान्तकाले निर्गमनं भवतीति॥

## रश्म्यनुसारी ॥ १८ ॥

रात्रावहनि चाविशेषेण रश्म्यनुसारी सन्नादित्यमण्डलं प्राप्नोतीति सिद्धान्तपक्षप्रतिज्ञा। पूर्वपक्षमाशङ्कते सूत्रावयवेन।

## निशि नेति चेत्

सूत्रावयवान्तरेण निराकरोति।

## न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च ॥ १९ ॥

यावद्देहभावी हि शिराकिरणसम्पर्कः प्रमाणान्तरात्प्रतीयते। दर्शयति चैतमर्थं श्रुतिरप्यविशेषेण। अमुष्मादादित्यात् प्रतायन्ते रश्मयस्ता आसु नाडीषु सृप्ता भवन्ति य आभ्यो नाडीभ्यः प्रतायन्ते विस्तार्य्यन्ते ते रश्मयोऽमुष्मिन्नादित्ये सृप्ताः प्रतापादिकार्य्यदर्शनादिति। आदिग्रहणेन चन्द्रातपः संगृह्यते। चन्द्रमसा खल्वम्मयेन सम्बध्यमानानां सौराणां भासां चान्द्रिकात्वम्। तस्मादप्यस्ति निशि सौर्य्यरश्मिप्रचार इति। ये त्वाहुः। स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छतीति निरपेक्षश्रवणाद्रात्रौ प्रेते नास्ति रश्म्यपेक्षेति। तान् प्रत्याह। "यदि च रात्रौ प्रेत" इति। नह्यत्र तद्विशेषाभीयतेऽध्येतारः। ये तु मन्यन्ते विद्वानपि रात्रिप्रायणापराधेन नोर्ध्वं आक्रमत इति। तान् प्रत्याह। "अथ तु विद्वानपि" इति। नित्यवत्फलसम्बन्धेन विहिता विद्या न पाक्षिकफला युक्तेति। ये तु रात्रौ प्रेतस्य विदुषोऽहरपेक्षां सूर्य्यमण्डलप्राप्तिमाचक्षते तन्मतमाशङ्क्याह। "अथापि रात्रौ वा" इति। यावत्तावदुपसम्बन्धेनानपेक्षा गतिः श्रुता न चापेक्षा शक्यावगमोऽपवर्त्यविरोधादिति॥

## अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥

अतएवेत्युक्तहेतुपरामर्श इत्याह। "अतएवापेक्षानुपपत्तेः" इति। पूर्वपक्षबीजमाह। "उत्तरायणप्राशस्त्ये" इति। अपनोदमाह। "प्राशस्त्यप्रसिद्धिः" इति। अतःपदपरामृष्टहेतुबलादविदुषो मरणं प्रशस्तमुत्तरायणे विदुषस्तूभयत्राप्य-

विशेषो विद्यासामर्थ्यादिति। विदुषोऽपि च मोक्षमोत्तरायणप्रतीक्षणमविदुष आचारं ग्राहयति 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायात्। आपूर्यमाणपक्षादिन्यायाच्च श्रुतिर्न कालविशेषप्रतिपत्त्यर्था, अपि त्वातिवाहिकीर्देवताः प्रतिपादयतीति वक्ष्यति। तस्मादविरोधः। सूत्रान्तरमवतरणाय चोदयति। "ननु च यत्र काले तु" इति। काल एवात्र प्राधान्येनोच्यते न त्वातिवाहिकी देवतेत्यर्थः॥

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

स्मार्तमुपासनं प्रत्ययं स्मार्तः कालभेदविनियोगः प्रत्यासत्तेः न तु श्रौतौ प्रतीत्यर्थः। अत्र यदि स्मृतौ कालभेदविधिः श्रुतौ चाग्निर्ज्योतिरादिविधिस्तत्राग्न्यादीनामातिवाहिकतया विषयव्यवस्थाया विरोधाभाव उक्तः। अथ तु प्रत्यभिज्ञानं तथापि यत्र काल इत्यत्रापि कालाभिधानद्वारेणातिवाहिक्य एव देवता उक्ता इत्यविरोध एवेति॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभाष्य
विभागे भामत्यां चतुर्थस्याध्यायस्य
द्वितीयः पादः॥

---

## अर्चिरादिना तत्प्रथितेः॥ १॥

भिन्नप्रकरणस्थत्वाद्विद्योपासनयोगतः।
अनपेक्षा मिथो मार्गास्त्वरातोऽवधृतेरपि॥

गन्तव्यमेकं नगरं प्रति वक्रेणाध्वना गतिमपेक्ष्य ऋजुनाऽध्वना गतिस्त्वरावती कथ्यते। एकमार्गत्वे तु किमपरमपेक्ष्य त्वरा स्यात्। अथ तैरेव रश्मिभिरित्यवधारणं नोपपद्यते पथ्यन्तरस्य निवर्तनीयस्याभावात् तस्मात्परानपेक्षा

एवैते पन्थान एकब्रह्मलोकप्राप्त्युपाया व्रीहियवादिव विकल्पेरन्निति प्राप्ते, प्रत्युच्यते ।

एकत्वेऽपि पथोऽनेकपर्वसंसर्गसम्भवात् ।
गौरवाच्चैव नानात्वं प्रत्यभिज्ञानविक्षत: ॥

अपर्वा हि पन्था नगरादिकमेकं गन्तव्यं प्रापयति नाभागः । तत्र किमेते रश्म्यहर्वायुसूर्यादयोऽध्वानः पर्वाण: सन्तोऽध्वनैकेन युज्यन्ते, आहो यथायथमध्वानमपि भिन्द्युरिति सन्देहेऽभेदेऽप्यध्वनो भागभेदोपपत्ते र्न भागिभेदकल्पनोचिता, गौरवप्रसङ्गात् । एकदेशप्रत्यभिज्ञानाच्च विशेषणविशेष्यभावोपपत्ते र्नानेकाध्वकल्पना । अथैतैरेव रश्मिभिरित्येवावधारणं न तावदर्थान्तरनिवृत्त्यर्थं तत्प्रापकैरेव वाक्यान्तरैर्विरोधात्, तस्मादन्यानपेक्षामस्यावधारयतीति वक्तव्यम् । न चैकं वाक्यमप्राप्तमध्वानं प्रापयति । तस्य चानपेक्षतां प्रतिपादयतीत्यर्थद्वयाय पर्याप्तं, तस्माद्विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारो वदतीति युक्तम् । "त्वरावचनं च" इति । न खल्वेकस्मिन्नेव गन्तव्ये पथि भेदमपेक्ष्य त्वराऽवकल्पते किन्तु गन्तव्यभेदादपि तदुपपत्तिः । यथा काश्मीरेभ्यो मथुरां क्षिप्रं याति चैत्र इति तथेहाप्यन्यतः कुतश्चिद्गन्तव्यादनेनोपायेन ब्रह्मलोकं क्षिप्रं प्रयातीति । "भूयांस्त्वर्चिरादिश्रुतौ मार्गपर्वाणि" इति । अयमर्थः । एकत्वात्प्राप्तव्यस्य ब्रह्मलोकस्याप्यपवर्गा मार्गश्च तत्रास्तौ सत्यवस्थां बहुमार्गोपदेशो व्यथः प्रसज्येत । तत्र चेतनस्याप्रवृत्तेः । तस्माद्भूयसां पर्वणामविरोधेनाख्यानां तदनुप्रवेश एव युक्त इति ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

'श्रुत्याद्यभावे पाठस्य क्रमं प्रति नियन्तृता ।

ऊर्ध्वाक्रमणभावे च श्रुता वायोर्निमित्तता ॥

स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमत इति हि वायुनिमित्तमूर्ध्वाक्रमणं श्रुतं न तु वायुनिमित्तमादित्यगमनम्। स आदित्यं गच्छतीत्यादित्यगमनमात्रप्रतीतेर्न च तेनेत्यनन्तरश्रुतोर्ध्वाक्रमणक्रियासम्बन्धि निराकाङ्क्षमादित्यगमनक्रिययापि सम्बन्धुमर्हति न चादित्यगमनस्य तेनेति विना काचिदनुपपत्तिर्येनान्यसम्बन्धमप्यनुपपद्यते। तत्राग्निलोकमागच्छति स वायुलोकमित्यादिमन्त्रभागतस्य पाठस्य क्वचिन्नियामकत्वेन क्रमसामर्थ्यात्। अग्निवायुवरुणक्रमनियामकत्वश्रुत्यभावादिति प्राप्ते, प्रत्युच्यते।

ऊर्ध्वशब्दो न लोकस्य कस्यचित्प्रतिपादकः।

तद्भेदापेक्षया युक्तमादित्ये न विशेषणम् ॥

भवेदेतदेवं यद्यूर्ध्वशब्दादूर्ध्वाक्रमणं प्रतीयेत स तूपरिदेशमात्रवाची लोकभेदाद्भिन्नाऽपेक्ष्यवस्थाक्रमभेदवाग्निनादित्यपदेनादित्ये व्यवस्थाप्यते। तथा चादित्यलोकगमनमेव वायुनिमित्तमिति श्रौतक्रमनियमे पाठः पदार्थमात्रप्रदर्शनार्थो न तु क्रमाय प्रभवति श्रुतिविरोधादिति सिद्धम्। वाजसनेयिनां संवत्सरलोको न पठ्यते छान्दोग्यानां देवलोको न पठ्यते तत्रोभयानुरोधादुभयपाठे माससम्बन्धात्संवत्सरः पूर्वः पश्चिमो देवलोकः। नहि मासो देवलोकेन सम्बध्यते, किन्तु संवत्सरेण। तस्मात्तयोः परस्परसम्बन्धान्मासारभ्यत्वाच्च संवत्सरस्य मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य परस्ताद्भवति। तत्रादित्यानन्तर्याय वायोः संवत्सरादित्ययोः स्थाने देवलोकाद्वायुमिति पठितव्यम्। वायुशब्दादिति तु सूत्रमत्रापि वाचकमेव। तथापि संवत्स-

गत्यगाश्चमादित्यादर्वाञ्चं वायुमभिसम्भवन्तीति छान्दोग्यपा-ठमाश्रयापेक्षयोक्तं, तदिदमाह । "वायुमब्दादिति तु" इति ॥

## तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

तडिदन्तेऽर्चिरादेऽध्वन्यप्पतिस्तडितः परः ।
तत्सम्बन्धात् तथेन्द्रादिरप्पतेः पर इष्यते ॥
आगन्तूनां निवेशोऽन्ते स्थानाभावात् प्रसाधितः ।
तथा चेन्द्रादिरागन्तुः पश्चात् चाप्पतेः परः ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

मार्गचिह्नमरूपत्वाच्चिह्नान्येवार्चिरादयः ।
भर्तृभोगभुवो वा स्युर्लोकत्वान्नातिवाहिकाः ॥

अर्चिरादिशब्दा हि ज्वलनादावचेतनेषु निरूढवृत्तयो लोके न चैषां त्वाद्याधिकानामिव नियमवतो संवहनस्वरूपा स्वतन्त्राक्रियाबुद्धिपूर्वामस्त्यचेतनानाम् । तस्माल्लोकशब्द-वाच्यत्वाद्भर्तृजीवात्मनो भोगभूमय एवेति मन्यामहे ।

अपि चार्चिष इत्यस्मादपादानं प्रतीयते ।
न हेतुर्नागमे हेतौ पञ्चमी दृश्यते क्वचित् ॥

जाड्याद्बद्ध इत्यादिषु गुणवचनेषु जाड्यादिषु हेतुपञ्चमी दृष्टा । न चार्चिरादिशब्दा गुणवाचिनो येन पञ्चम्या तेषां वहनं प्रति हेतुत्वमुच्यते । अपादानत्वं चाचेतनत्वेऽप्यस्तीति नातिवाहिकाः । न चामानवस्य पुरुषस्य विद्युदादिषु वोढृत्व-दर्शनादर्चिरादीनामपि वोढृत्वमुन्नेयं यावद्वचनं हि वाच-निकं न तदन्यत्र सञ्चारयितुमुचितम् । अपि चार्चिरादीनां वोढृत्वे विद्युदादीनामपि वोढृत्वादमानवः पुरुषो वोढा श्रूयेत । यतः श्रूयते ततोऽवगच्छामो विद्युदादिष्वर्चिरादीनां

वोढृत्वमिति। तस्माद्भोगभूमय एवार्चिरादयो नातिवाहिका इति प्राप्ते, प्रत्युच्यते।

सपिण्डकरणानां हि सूक्ष्मदेहवतां गतौ।

न स्वातन्त्र्यं न चाभ्यासो नेतारोऽचेतनास्तु ते।

देहयो हि नियमवती गतिः स्वयं वा प्रेक्षावतोऽप्रेक्षावतो वा प्रेक्षावदनुसृत्य। न तावद्विगलितस्थूलकलेवराः सूक्ष्मदेहवतः सम्पिण्डितकरणग्रामा उत्क्रान्तिमन्तो जीवात्मानो मत्तमूर्च्छितवत् स्वयं प्रेक्षावन्तो यदेवं स्वातन्त्र्येण गच्छेयुस्तदर्च्चिरादयोऽपि मार्गचिह्नानि वा ग्रामोक्तारस्करादिवत् भोगभूमयो वा सुमेरुशैलेन्द्रोद्यानादिवदुभयथाप्यचेतनतया न नयनं प्रत्येषामस्ति स्वातन्त्र्यम्। न चैतेभ्योऽन्यस्य चेतनस्य नेतुः कल्पना सति श्रुतानां चैतन्यसम्भवे। न च परमेश्वर एवास्तु नेतेति युक्तम्। तस्यात्यन्तसाधारणतया लोकपालग्रहादीनामकिञ्चित्करत्वात्। तस्माद् व्यवस्थित एव परमेश्वरस्य सर्वाध्यक्षत्वे यथा यथास्वं लोकपालादीनां स्वातन्त्र्यम्। एवमिहाप्यर्चिरादीनामातिवाहिकत्वमेव दर्शनानुसाराद्भ्युपेतव्यमिति युक्तम्। इममेवार्थमनेन पुरुषातिवाहनलक्षण लिङ्गमुपोद्बलयतीत्युक्तम्। "अनवस्थितत्वादर्चिरादीनाम्" इति। अवस्थितं हि मार्गचिह्नं भवत्यव्यभिचारादनवस्थितं व्यभिचारादिति। अर्चिष इति च इती पञ्चमी नापादाने। गुणत्वस्याश्रिततया। न च वैशेषिकपरिभाषया नियम आस्थेयो लोकविरोधात्। अपि च तेऽर्चिरभिसम्भवन्तीति सम्बन्धमात्रमुक्तमिति। सामान्यवचने शब्दे विशेषाकाङ्क्षिणि स्फुटम्। यद्विशेषपदं तेन तत्सामान्यं नियम्यते॥ यथा ब्राह्मणमानय भोजयितव्य इति तद्विशेषापेक्षायां यदा तत्सन्निधावुपनिपतति पदं कण्ठादि तदा तेनैतन्नियम्यते। "एवमिहापि" इति।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ११ ॥

विद्युल्लोकमागतो मानवः पुरुषो वैद्युतस्तेनैव न तु वरुणादिना स्वयमुह्यते। तच्छ्रुतेस्तस्यैव स्वयं वोढृत्वश्रुतेः। वरुणादयस्तु तत्साहायके वर्त्तमाना वोढारो भवन्तीति च वैषम्यं न वोढृत्व इति सर्वमवदातम्। पाठक्रमादर्थक्रमो बलवानिति। यथार्थक्रमं पठ्यन्ते सूत्राणि ॥

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

स एतान् ब्रह्म गमयतीति विचिकित्स्यते। किं परं ब्रह्म गमयत्याहोस्विदपरं कार्य्यं ब्रह्मेति।

मुख्यत्वादमृतं प्राप्तेः परप्रकरणादपि।
गन्तव्यं जैमिनिर्मेने परमेवार्चिरादिना ॥

ब्रह्म गमयतीत्यत्र हि नपुंसकब्रह्मपदं परस्मिन्नेव ब्रह्मणि निरूढत्वात् अनपेक्षतया मुख्यमिति सति सम्भवे न कार्य्ये ब्रह्मणि गुणकल्पनया व्याख्यातुमुचितम्। अपि चामृतत्वफलत्वाभिमतं कार्य्यब्रह्मप्राप्तौ युज्यते। तस्य कार्य्यत्वेन मरणधर्मवत्त्वात्। किञ्च तत्र तत्र परमेव ब्रह्म प्रकृत्य प्रजापतिसभाप्रतिपत्त्यादय उच्यमाना नापरब्रह्मविषया भवितुमर्हन्ति प्रकरणविरोधात्। न च परस्मिन् सर्वगते गतिर्नोपपद्यते प्राप्तत्वादिति युक्तम्। प्राप्नोति हि प्राप्तिफला गतिर्दृश्यते। यथैकस्मिन् न्यग्रोधपादपे मूलादग्रमप्राप्य मूलं गच्छतः शाखामृगस्यैकेनैव न्यग्रोधपादपेन निरन्तरं संयोगविभागा भवन्ति। न चैते तदवयवविषया न तु न्यग्रोधविषया इति साम्प्रतं तथा सति न शाखामृगो न्यग्रोधेन युज्यते। न्यग्रोधावयवस्य तदवयवयोगात्। एवं द्रव्यक्षणानामपि तदवयवानां न योगः। तदवयवयोगात्तदनेन

क्रमेण तदवयवेषु परमाणुषु व्यवतिष्ठते। ते चातीन्द्रिया इति कस्मिंश्चिन्नामायमनुभवपद्धतिमध्यास्तां संयोगसम्पत्ती। तस्मादकामेनाप्यनुभवानुरोधेन प्राप्त एव प्राप्तिफलत्वावगतिरेषितव्या। तद् ब्रह्म प्राप्तमपि प्राप्तिफलायावगतेर्गोचरो भविष्यति। ब्रह्मलोकेष्विति च बहुवचनमेकस्मिन्नपि प्रयोगसाधुतामात्रेण गमयितव्यम्। लोकशब्दश्चालोकने प्रकाशे वर्त्तयितव्यो न तु सन्निवेशवति देशविशेषे। तस्मात् परब्रह्मप्राप्त्यर्थो गत्युपदेशसामर्थ्यादयमर्थो भवति। यथा विद्याकर्मवशादर्चिरादिना गतस्य सत्यलोकमतिक्रम्य परं जगत्कारणं ब्रह्मलोकमालोकं स्वयं प्रकाशकमिति यावत् प्राप्तस्य तत्रैव लिङ्गं प्रलीयते न तु गतिमन्तरेण तां विना लिङ्गप्रविलय इति। अत एव श्रुतिः। पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति। तदनेनाभिसम्बन्धिना परं ब्रह्म गमयन्त्यमानव इति मतं जैमिनिराचार्य्यः। तत्त्वदर्शी बादरिर्दर्श॥

## कार्य्यं बादरिरस्य गत्युपपत्तेः॥ ७॥

कार्य्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गतिः।
प्रापयेद् ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम्॥

तत्त्वमसिवाक्यार्थसाक्षात्कारात् प्राक्किल जीवात्माऽविद्याकर्मवासनाद्युपाधिवच्छेदादणुस्तोऽनवच्छिन्नोऽशेषवर्गमिशाभिन्नोऽपि लोकेभ्यो भिन्नमिवात्मानमभिमन्यमानः स्वरूपादन्यानप्राप्तानर्चिरादीन् लोकान् गत्याप्नोतीति युज्यते। अद्वैततत्त्वब्रह्मसाक्षात्कारवतस्तु विगलितनिखिलप्रपञ्चावभासविभ्रमस्य न गन्तव्यं न गतिर्न गमयितार इति किं केन सङ्गतम्। तस्मादनिदर्शनं न्यग्रोधसंयोगविभागा

न्यग्रोधवानरतरुहिततत्संयोगविभागानां मिथो भेदात्। न च तत्रापि प्राप्तप्राप्तिः कर्मजेन हि विभागेन निवृत्तायां पूर्वप्राप्तावप्राप्तस्यैवोत्तरप्राप्तेरुत्पत्तेः। एतदपि वस्तुतो विचारासहतया सर्वमनिर्वचनीयविजृम्भितमविद्यायाः समुत्पन्नाद्वैततत्त्वसाक्षात्कारो न विद्वानभिमन्यते। विदुषोऽपि देहपातात् पूर्वं स्थितप्रज्ञस्य तथाभासमात्रेण सांसारिकधर्मानुवृत्तिरभ्युपेयते प्रथमालिङ्गशरीरपातात्। विदुषस्तद्धर्मानुवृत्तिस्तथा चाप्राप्तप्राप्तेर्गत्युपपत्तिस्तद्देशप्राप्तौ च लिङ्गदेहनिवृत्तेर्मुक्तिः श्रुतिप्रामाण्यादिति चेत्, न। परविद्यावत उत्क्रान्तिप्रतिषेधाद् ब्रह्मैव सन् ब्रह्माप्येति न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्त इति। यथा विद्याब्रह्मप्राप्त्योः समानकालता श्रूयते। 'ब्रह्म वेद ब्रह्मैव भवति' 'आनन्दं ब्रह्मणो विद्वान् बिभेति' 'तदात्मानमेव वेदाहं ब्रह्मास्मीति तत्सर्वमभवत्' तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति पौर्वापर्यायश्रवणात् परविद्यावतो मुक्तिं प्रति नापायान्तरापेक्षेति लक्ष्यते अभिसन्धिः श्रुतेः। उपपन्नं चैतत्। न खलु ब्रह्मवेद विश्वमहं ब्रह्मास्मीति परिभावनाभुवा जीवात्मनो ब्रह्मभावमानात्कारणोन्मुक्तिनाशामनवयवेनाविद्यायामस्ति गन्तृगन्तव्यविभागो विदुषस्तदभावे कथमयमर्चिरादिमार्गे प्रवर्त्तेत। न च छायामात्रेणापि सांसारिकधर्मानुवृत्तिस्तत्र प्रवृत्त्यङ्गं यादृच्छिकप्रवृत्तिः यथाविद्वीनस्य दृष्टार्थानि कर्माणि फलन्ति न फलन्ति च। अदृष्टार्थानां तु फले का कथेत्युक्तं प्रथमसूत्रे। न चार्चिरादिमार्गभावनायाः परब्रह्मप्राप्त्यर्थमविदुषः प्रत्युपदेशस्तथा च कर्मान्तरेष्विव नित्यादिषु तत्रापि आवश्य प्रवृत्तिरिति साम्प्रतम्। विकल्पासहत्वात्। किमियं परविद्यानपेक्षा परब्रह्म-

प्राप्तिसाधनं तदपेक्षं वा। न तावदनपेक्षा तमेव विदित्वाति-मृत्युमेति नान्यः पन्था विद्यते ऽयनायेति परब्रह्मविद्या-नादन्यस्याध्वनः साक्षात्प्रतिषेधात् परविद्यापेक्षत्वे तु मार्ग-भावनायाः किमियं विद्याकार्य्यं मार्गभावनासाहायकमाचर-त्यथ विद्योत्पादे। न तावद्विद्याकार्य्यं तया सह तस्याद्वैता-द्वैतगोचरतया मिथो विरोधेन सहासम्भवात्। नापि यज्ञा-दिवद्विद्योत्पादे साक्षाद्ब्रह्मप्राप्त्युपायत्वश्रवणादेतान् ब्रह्म गमयतीति। यज्ञादेस्तु विविदिषासंयोगेन श्रवणाद्विद्योत्पा-दाङ्गत्वम्। तस्मादुपन्यस्तबहुश्रुत्यनुरोधादुपपत्तेश्च ब्रह्मशब्दो-ऽसम्भवन्मुख्यवृत्तिर्ब्रह्मसामीप्यादपरब्रह्मणि लक्षणया नेतव्यः। तथा च लोकेष्विति बहुवचनोपपत्तेः कार्य्यब्रह्मलोकस्य। परस्य त्वनवयवतया तद्द्वारेणाप्यनुपपत्तेर्लोकत्वं चैलाश्वत्था-दिवत् सन्निवेशविशेषवति भोगभूमौ निरूढं न कथञ्चिद्योगेन प्रकाशे व्याख्यातं भवति। तस्मात् साधुदर्शी स भगवान् बाद-रिरसाधुदर्शी जैमिनिरिति सिद्धम्। अप्रामाणिकानां च प्रलापाः सवगतस्य द्रव्यस्य गुणाः सवगता एव चैतन्यादयस्ता-दयश्च गुणिनः परमात्मनो भेदाभेदवन्तो गुणा इत्यादयो दूषणायानुभाष्यमाणा अपि अप्रमाणिकत्वादनवकल्प्यत्वाक्क-मित्युपेक्षिताः। पदयोजना तु प्रतिप्रत्ययाऽऽकृत्वाश्च शब्दाणाम्। प्रतिप्रति अञ्चति गच्छतीति प्रत्यक् प्रतिभावतीति ब्रह्म तदा त्मत्वादृन्तृणां जीवात्मनामिति। "गौणी त्वस्य" इति। यौगिक्यपि हि योगगुणापेक्षया गौण्येव। "विशुद्धोपाधिस-म्बन्धम्" इति। मनोमयत्वादयः कल्पनाः कार्याः कार्य्य-त्वात्। अविद्यया अपि स्वैर्योङ्गतुल्याविद्यया। प्रतिसञ्चरो महाप्रलयः प्रतिप्रत्यभिसन्धिः प्रतिपत्तिर्गतिः। पदेनैकवचनत्वा-दाभसन्धिस्तत्पद्य न। यस्य ब्रह्मणो नामाभिवाम यत्र

इति। "पूर्ववाक्यविच्छेदेन" इति। श्रुतिवाक्ये बलीयसी प्रकरणात्। "सगुणे च ब्रह्मणि" इति। प्रशंसार्थमित्यर्थः। चोदयति। "ननु गतस्यापि पारमार्थिकी गन्तव्यता देशान्तरविशिष्टस्य" इति। न्यग्रोधवानरदृष्टान्त उपपादितः। परिहरति। "न प्रतिषिद्धसर्वविशेषत्वाद् ब्रह्मणः" इति। अयमभिसन्धिः। यथा तथा न्यग्रोधावयवी परिणामवानुपजनापायधर्मभिः कर्मजैः संयोगविभागैः संयुज्यतामयं पुनः परमात्मा निरस्तनिखिलभेदप्रपञ्चः कूटस्थनित्यो न न्यग्रोधवत्संयोगविभागभाग् भवितुमर्हति। काल्पनिकसंयोगविभागस्तु काल्पनिकस्यैव कार्यब्रह्मलोकस्योपपद्यते न परस्य। शङ्कते। "जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेः" इति। नह्युत्पत्त्यादिहेतुभावोऽपरिणामिनः सम्भवति तस्मात् परिणामीति। तथा च भाविकमस्योपपद्यते गन्तव्यत्वमित्यर्थः। निराकरोति। "न विशेषनिराकरणश्रुतीनाम्" इति। विशेषनिराकरणं समस्तशोकादिदुःखप्रशमनतया पुरुषार्थफलवत्। अफलं तूत्पत्त्यादिविधानम्। तस्मात् फलवतः सन्निधावाम्नायमानं तदर्थमेवोच्यत इत्युपपत्तिः। तद्विजिज्ञासस्वेति च श्रुतिः। तस्माच्छ्रुत्युपपत्तिभ्यां निरस्तसमस्तविशेषब्रह्मप्रतिपादनपरोऽयमाम्नायो न तूत्पत्त्यादिप्रतिपादनपरः। तस्मान्न गतिस्तात्त्विकी। अपि चेयं गतिर्न विचारं सहत इत्याह। "गतिकल्पनायां च" इति। अन्योनन्यत्वाभ्यामवयवविकारपक्षौ। अन्यो वात्यन्तम्। अथ कस्मादात्यन्तिकमनन्यत्वं न कल्प्यत इत्यत आह। "अत्यन्ततादात्म्ये" इति। मृदात्मतया हि स्वभावेन घटादयो भावास्तद्विकारा व्याप्ताः। तदभावे न भवन्ति शिंशपेव वृक्षत्वाभाव इति विकारावयव-

पत्तयोश्च तद्वतः सह विकारावयवैः स्थिरत्वाद्चलत्वाद्ब्रह्मणः संसारलक्षणं गमनं विकारावयवयोरनुपपन्नम्। नहि स्थिरात्मकमस्थिरं भवति। अन्योनन्यत्वेऽपि चैकस्य विरो- ःसम्भवतीति भावः। यथान्य एव जीवो ब्रह्मणः। तथा ब्रह्मण्यसंसरत्यपि जीवस्य संसारः कल्प्यत इति। एतर्हि- ार दूषयति। "सोऽणुः" इति। "मध्यमपरिमाणत्वे" इति। ॰मपरिमाणानां घटादीनामनित्यत्वदर्शनात्। "न मुख्य- ॰व" इति। भेदाभेदयोर्विरोधिनोरेकत्रासम्भवाद्बृंहित्यपदे- ॰दादर्थभेदे॰युतमिन्नत्योपचारेणाभिधमुच्यत इत्यमुख्यम- ॰कत्वमित्यर्थः। अपि च जीवानां ब्रह्मावयवत्वपरिणामात्य- ॰भेदपक्षेषु नात्त्विकी संसारितेति मुक्तौ स्वभावहानाज्जीवानां ॰नाशप्रसङ्गः। ब्रह्मविवर्त्तत्वे तु ब्रह्मैवैषां स्वभावः प्रतिवि- ॰ानामिव बिम्बं तच्चाविनाशीति न जीवविनाश इत्याह। ॰र्विशेषु" इति। मतान्तरमुन्यस्यति दूषयितुम्। "यत् ॰श्चिज्जल्पति विनैव ब्रह्मज्ञानं नित्यनैमित्तिकानि" इति। ॰या हि कफनिमित्तो ज्वर उपात्तस्य कफस्य विशोषका- ॰भिः प्रलये कफान्तरोत्पत्तिनिमित्तदध्यादिवर्जने प्रशा- ॰ोऽपि न पुनर्भवति। एवं कर्मनिमित्तो बन्ध उपात्तानां ॰र्मणामुपभोगात् प्रलये प्रशाम्यति। कर्मान्तराणाञ्च बन्ध- ॰तूनामननुष्ठानात्कारणाभावे कार्यानुपपत्तेर्बन्धाभावात् ॰भावसिद्धो मोक्ष आरोग्यमिवापातदुरितनिबर्हणाय च नित्यनैमित्तिककर्मानुष्ठानात् दुरितनिमित्तप्रत्यवायो न भवति। प्रत्यवायानुत्पत्तौ च स्वस्थस्वान्तो न निषिद्धाचा- ॰रादिति। तदेतद्दूषयति। "तदसत् प्रमाणाभावात्" इति। शास्त्रं खल्वस्मिन् प्रमाणं तच्च मोक्षमाणस्यात्मज्ञानमेवोप- ॰दिशति न तूक्तमाचारम्। न चार्थापत्तिः प्रभवति संसार-

ख्यानादितया कर्माशयस्याप्यसंख्येयस्यानियतविपाककालस्य भोगेनोच्छेत्तुमशक्यत्वादित्याह। "न चैतत्तर्कयितुमपि" इति। चोदयति। "स्यादित्येतन्नित्य" इति। परिहरति। "तन्न विरोधाभावात्" इति। यदि हि नित्यनैमित्तिकानि कर्माणि सुकृतमपि दुष्कृतमिव निवर्हयेयुस्ततः काम्यकर्मोपदेशाद्दत्तजलाञ्जलयः प्रसज्येरन्। नह्यस्ति कश्चित्रानुवर्ण्यं चातुराश्रम्ये वा यो न नित्यनैमित्तिकानित्यकर्माणि करोति। तस्मान्नैषां सुकृतविरोधितेति। अभ्युच्चयमात्रमाह। "न च नित्यनैमित्तिकानुष्ठानात्" इति। "न चासति सम्यग्दर्शने" इति। सम्यग्दर्शी हि विरक्तः काम्यनिषिद्धे वर्जयन्नपि प्रमादादुपनिपतितं तेनैव सम्यग्दर्शनेन क्षपयति। ज्ञानपरिपाके च न करोत्येवासम्, निपुणोऽपि प्रमादात् करोति। कृतं च न क्षयितुं क्षमत इति विशेषः। "न चानभ्युपगम्यमाने ज्ञानगम्यब्रह्मात्मत्वे" इति। कर्तृभोक्तृत्वं समाविर्भक्रियाभोगं तं चेदात्मनः स्वभावावधारितं न त्वारोपितं ततो न शक्यापनेतुम्। नहि स्वभावाद्भावोऽवरोपयितुं शक्यो भावस्य विनाशप्रसङ्गात्। न च भोगोऽपि सत्स्वभावः शक्योऽसक्तुं. सो खलु नीलमनीलं शक्यं शक्रेणापि कर्तुं, तदिदमुक्तं "स्वभावस्यापरिहार्यत्वात्" इति। समारोपितस्य त्वनिर्वचनीयस्य तत्स्वभावस्य शक्यस्तत्त्वज्ञानेनावरोपः कर्तुं सर्पस्येव रज्जुतत्त्वज्ञानेनेति भावः। भावमिममविद्वान् परिचोदयति। "स्यादेतत् कर्तृत्वभोक्तृत्वकार्य्यम्" इति। अप्रकाशितभावो यथोक्तमेव समाधत्ते। "तच्च न" इति। कर्तृभोक्तृत्वयोर्निमित्तसम्बन्धस्य च शक्तिद्वारेण नित्यत्वान्नविष्यति कदाचिदेषां समुदाचारो यतः सुखदुःखे भोक्ष्येते इति सम्भावनातः कुतः कैवल्यमित्यर्थः। भूयो निरस्तमपि मतिदृढिम्ने पुन-

रुपन्यस्य दूषयति। "परस्मादनन्यत्वेऽपि" इति। शेषमतिरोहितार्थम्॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥

अब्रह्मक्रतवो यान्ति यथा पञ्चाग्निविद्यया।
ब्रह्मलोकं प्रयास्यन्ति प्रतीकोपासकास्तथा॥

सन्ति हि मनो ब्रह्मेत्युपासीतेत्याद्याः प्रतीकविषया विद्यास्तद्वन्तोऽप्यर्चिरादिमार्गेण कार्यब्रह्मोपासका इव गन्तुमर्हन्त्यनियमः सर्वासामित्यविशेषेण विद्यान्तरेष्वपि गतेरवधारणात्। न चैषां परब्रह्मविदामिव गत्यसम्भव इति। न च ब्रह्मक्रतव एव ब्रह्मलोकभाजो नातत्क्रतव इत्येकान्तः। अनतत्क्रतूनामपि पञ्चाग्निविदां तत्प्राप्तेः। न चैते न ब्रह्मक्रतवो मनो ब्रह्मेत्युपासीतेत्यादौ सर्वत्र ब्रह्मानुगमेन तत्क्रतुत्वस्यापि सम्भवात्। फलविशेषस्य ब्रह्मलोकप्राप्तावप्युपपत्तेः, तस्य सातिशयतयोत्कर्षनिकर्षसम्भवादिति प्राप्ते, प्रत्युच्यते॥

उत्तरोत्तरभूयस्त्वादब्रह्मक्रतुभावतः।
प्रतीकोपासकान् ब्रह्मलोकं नामानवो नयेत्॥

भवतु पञ्चाग्निविद्यायामब्रह्मक्रतूनामपि ब्रह्मलोकनयनं वचनात्। किमिव हि वचनं न कुर्यात् नास्ति वचनस्यातिभारः इह तु तदभावात्। तं यथायथोपासते तदेव भवतीति श्रुतेः। औत्सर्गिक्यां नासति विशेषवचनेऽपवादो युज्यते। न च प्रतीकोपासको ब्रह्मोपास्ते सत्यपि ब्रह्मत्वानुगमे किन्तु नामादिविशेषणब्रह्मरूपतया तथा चायं नामादितन्त्रो न ब्रह्मतन्त्र आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः प्रतीक इति

हि दृष्टाः । ब्रह्माश्रयश्च प्रत्ययो नामादिषु प्रक्षिप्त इति नाम-तन्त्रः । तस्माच्च तदुपासको ब्रह्मक्रतुः किन्तु नामादिक्रतुः । न च ब्रह्मक्रतुत्वे नामाद्युपासकानामविशेषादुत्तरोत्तरोत्कर्षः सम्भवी । न च ब्रह्मक्रतुस्तदवयवक्रतुः । येन तदवयवापेक्षया-त्कर्षो वर्ण्येत । तस्मात्प्रतीकालम्बनान्विदुषो वर्जयित्वा सर्वा-नन्यान्विकारालम्बनान्नयत्यमानवो ब्रह्मलोकं न त्वेवमुभयथा भाव उभयथात्वे कांश्चित्प्रतीकालम्बनांश्च नयति विकाराल-म्बनान्विदुषस्तु नयतीत्यभ्युपगमे कश्चिद्दोषोऽस्त्यनियमः सर्वेषामित्यस्य न्यायस्येति सर्वमवदातम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादभाष्य-

विभागे भामत्यां चतुर्थस्याध्यायस्य

तृतीयः पादः ॥

---

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

प्रागभूतस्य निष्पत्तौ कर्तृत्वं न सतो यतः ।
फलत्वेन प्रसिद्धेश्च मुक्तेरूपान्तरोद्भवः ॥

अभूतस्य घटादेर्भवेन्निष्पत्तिर्न पुनरत्यन्तसतोऽसतो वा न जातु गगनतत्कुसुमे निष्पद्येते । स्वरूपावस्थानं चेदा-त्मनो मुक्तिर्न सा निष्पद्येत । तस्य गगनवदत्यन्तसतः प्राग-सत्त्वाभावाच्च चास्य बन्धाभावो निष्पद्येत तस्य तुच्छस्वभावस्य कार्यत्वेनातुच्छत्वप्रसङ्गात् । फलत्वप्रसिद्धेश्च मोक्षस्याका-र्यस्य फलत्वानवकल्पनादागन्तुना रूपेण केनचिदुत्पत्तौ स्वेनेति प्राप्तमनूद्यत इति प्राप्तेऽभिधीयते ।

सम्भवत्यर्थवत्त्वे हि नानर्थक्यमुपेयते ।
बन्धस्य सदसत्त्वाभ्यां रूपमेकं विशिष्यते ॥

अनधिगतावबोधनं हि प्रमाणं शास्त्रमगत्या कथञ्चिद-नुवादतया वर्त्तते। सकलसांसारिकधर्मापेतं तु प्रसन्नमा-त्मरूपमप्रसन्नात्तस्मादेव रूपाद्व्यावृत्तमनधिगतमवबोधयता-नुवादो युज्यते। न चास्य निष्पत्त्यसम्भवः सत एव घटादेः सांव्यवहारिकेण प्रमाणेन बन्धविगमस्यापि निष्पत्तेर्लोकसिद्ध-त्वात्। विचारासहतया त्वसिद्धिरुभयत्रापि तुल्या न प्रम-दुत्पत्तुमर्हतीति असकृदावेदितम्। अन्धो भवतीति स्वप्ना-वस्था दर्शिता। बाह्येन्द्रियव्यापाराभावाद्रोदितीव जाग्रद-वस्था दुःखशोकाद्यात्मकत्वाद्विनाशमिवापीत इति सुषुप्तिः। एवकारश्चेवार्थं नावधारणे॥

## आत्मा प्रकरणात्॥ ३॥

ननु ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति पौर्वापर्यश्रवणात् स्वरूपनिष्पत्तेरन्या ज्योतिरुपसम्पत्ति-स्तया च भौतिकत्वेऽपि न मोक्षव्याघातः। भवेदेतदेवं यदि ज्योतिरुपसम्पद्य तत् परित्यजेदिति श्रूयेत। तदश्रवणेऽपि तत्प्रतिपादनवैयर्थ्यं तदपरित्यागे च ज्योतिषैव स्वेन रूपेणेति गम्यते। तस्य च भूतत्वे विकारत्वान्मरणधर्मकत्वप्रसिद्धेरमु-क्तित्वमिति प्राप्ते प्रत्युच्यते।

ज्योतिष्पदस्य मुख्यत्वं भौतिके यद्यपि स्थितम्।
तथापि प्रक्रमाद्वाक्यादात्मन्येवात्र युज्यते॥

परं ज्योतिरिति हि परपदसमभिव्याहारात् परत्वस्य चानपेक्षस्य ब्रह्मण्येव प्रवृत्तेर्ज्योतिषि चापरं किञ्चिदपेक्ष्य परत्वात्परं ज्योतिरिति वाक्यादात्मैवात्र गम्यते प्रकरणाच्चो-क्तम्। यत् सम्पद्य निष्पद्यत इति तत्सूक्तं भ्रमादाय स्वपितीति-वत्। तस्माज्ज्योतिरुपसम्पन्नो मुक्त इति सूत्रम्॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

यद्यपि जीवात्मा ब्रह्मणो न भिन्न इति तत्र तत्रोपपादितं तथापि स तत्र पर्येतीत्याधाराधेयभावव्यपदेशस्य सम्पत्तृसम्पत्तव्यभावव्यपदेशस्य च समाधानार्थमाह ।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

उपन्यास उद्देशो ज्ञातस्य यथा य आत्माऽपहतपाप्मेत्यादिः । तथाऽज्ञातज्ञापनं विधिः । यथा स तत्र पर्येति जक्षत् रममाण इति तस्य सर्वेषु लोकेषु कामचारो भवतीत्य तदज्ञातज्ञापनं विधिः । सर्वज्ञः सर्वेश्वर इति व्यपदेशः । नायमुद्देशो विधेयान्तराभावात् । नापि विधिरप्रतिपाद्यत्वात् । सिद्धवदव्यपदेशात्तद्विवचनसामर्थ्यादयमर्थः प्रतीयते त एते उपन्यासादयः । एतेभ्यो हेतुभ्यः ।

भावाभावात्मकै रूपैर्भाविकैः परमेश्वरः ।
मुक्तः सम्पद्यते स्वैरित्याह स्म किल जैमिनिः ॥

न च चित्स्वभावस्यात्मनोऽभावात्मानोऽपहतपाप्मत्वादयो भावात्मानश्च सर्वज्ञत्वादयो धर्मा अद्वैतं घ्नन्ति । नो खलु धर्मिणो धर्मा भिद्यन्ते । मा भूत्स्वाश्ववद्धर्मिधर्मभावाभाव इति जैमिनिराचार्य उवाच ॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

अनेकाकारतैकस्य नैकत्वादेकता भवेत् ।
परस्परविरोधेन न भेदाभेदसम्भवः ।

न ह्येकस्यात्मनः पारमार्थिकानेकधर्मसम्भवः । ते चेदात्मनो भिद्यन्ते द्वैतापत्तेरद्वैतश्रुतयो व्यावर्तेरन् । अथ न भिद्यन्ते तत एकस्मादात्मनोऽभेदात्तेऽपि न भिद्येरन् ।

आत्मरूपवत्। आत्मरूपं वा भिद्येत। भिन्नेभ्योऽनन्यत्वान्नीलपीतरूपवत्। न च धर्मिण आत्मनो न भिद्यन्ते भिद्यन्तु भिद्यन्त इति साम्प्रतम्। धर्म्यभेदेन तदनन्यत्वेन तेषामप्यभेदप्रसङ्गात्। भेदे वा धर्मिणोऽपि भेदप्रसङ्गादित्युक्तम्। भेदाभेदौ च परस्परविरोधादेकत्राभावव्न सम्भवत इत्युपपादितं प्रथमे सूत्रे। अभावरूपाणामद्वैताविरुद्धत्वेऽपि नस्य पाप्मादेः काल्पनिकतया तदधीननिरूपणतया तेषामपि काल्पनिकत्वमिति न तात्त्विकी तद्धर्मता सिध्यते। एतेन सत्यकामसर्वज्ञसर्वेश्वरत्वादयोऽप्यौपाधिका व्याख्याताः। तस्माद्विरस्ताशेषप्रपञ्चेनाव्यपदेश्येन चैतन्यमात्रात्मनाभिनिष्पद्यमानस्य मुक्तात्मनोऽर्थशून्यैरापहतपाप्मसत्यकामादिशब्दैरुपदेश इत्यौडुलोमिर्मेने। तदिदमुक्तं "शब्दविकल्पजा एवेते" अपहतपाप्मत्वादयो न तु सांव्यवहारिका अपीति॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

तदेतदिति गौण्डीरमौडुलोमिनं सूच्यते।
बादरायण आचार्यो मृष्यत्यपि हि तद्द्वयम्॥

एवमप्यौडुलोमिमतमनुजानाति। गौण्डीरं तु न मन्यत इत्याह। "व्यवहारापेक्षया" इति। एतदुक्तं भवति। सत्यं तात्त्विकानन्दचैतन्यमात्र एवात्मापहतपाप्मसत्यकामत्वादयस्त्वौपाधिकतयाऽतात्त्विका अपि व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तामसन्तो येन तच्छब्दा राहोः शिर इतिवदप्रमाणा इत्यर्थः॥

## सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

यत्नानपेक्षः सङ्कल्पो लोके वस्तुप्रसाधनः ।
न दृष्टः सोऽत्र यत्नस्य लाघवादवधारितः ॥

लोके हि कश्चिदर्थं चिकीर्षुः प्रयतते प्रयतमानः समीहते समीहानस्तमर्थमाप्नोतीति क्रमो दृष्टः । न त्विच्छानन्तरमेवाप्येष्यमाणमुपतिष्ठते । तेन श्रुत्यापि लोकवृत्तमनुरुध्यमानया विदुषस्तादृश एव क्रमोऽनुमन्तव्यः । अवधारणं तु सङ्कल्पादेवेति लौकिकं यत्नगौरवमपेक्ष्य विद्याप्रभवतो विदुषो यत्नलाघवात् । यत्नस्तु तदसत्कल्पमिति । स्यादेतत् । यथा मनोरथमात्रोपस्थापिता स्त्री स्त्रैणानां चरमधातुविसर्गहेतुः । एवं पित्रादयोऽप्यस्य सङ्कल्पोपस्थापिताः कल्पिष्यन्ते स्वकार्यायेत्यत आह । "न च सङ्कल्पमात्रसमुत्थाना" इति । सन्ति हि खलु कानिचिद्वस्तुरूपसाध्यानि कार्य्याणि यथा स्त्रीवस्तुसाध्यानि दन्तक्षतमणिमालादीनि । कानि चित्तु ज्ञानसाध्यानि यथोक्तचरमधातुविसर्गरोमहर्षादीनि । तत्र मनोरथमुपस्थापनीतं पित्रादि भवन्तु तज्ज्ञानमात्रसाध्यानि कार्य्याणि न तु तत्साध्यानि भवितुमर्हन्ति । न हि स्त्रैणस्य रोमहर्षादिवद्भवन्ति स्त्रीवस्तुसाध्या मणिमालादयस्तदिदमुक्तं पुष्कलभोगमिति प्रासेऽभिधीयते ।

पित्रादीनां समुत्थानं सङ्कल्पादेव तच्छ्रुतेः ।
न चानुमानबाधोऽत्र श्रुत्या तस्यैव बाधनात् ॥

प्रमाणान्तरानपेक्षा हि श्रुतिः स्वार्थं गोचरयन्ती न प्रमाणान्तरेण शक्या बाधितुम् । अनुमानमेव तु स्वोत्पादाय पक्षधर्मत्वादिवत्प्रमाणान्तराबाधितविषयत्वं स्वसामग्रीमध्यपातेनापेक्षमाणं सामग्रीवैकल्येन तद्विरुद्धया श्रुत्या बाध्यते । अत एव नरशिरःकपालादिशौचानुमानमागमबाधितविषयतया नोपपद्यते । तस्माद्विद्याप्रभावाद्विदुषो सङ्कल्पमात्रादेव

पित्राद्युपस्थानमिति साम्प्रतम्। तथाहुरागमिनः। को हि योगप्रभावादृतेऽगस्त्य इव समुद्रं पिबति स इव दण्डकारण्यं सृजति। तस्मात्सर्वमवदातम्॥

## अभावं बादरिराह ह्येवम्॥ १०॥

अन्ययोगव्यवच्छित्त्या मनसेति विशेषणात्।
देहेन्द्रियवियोगः स्याद्विदुषो बादरेर्मतम्॥

अनेकधाभावश्रुतिप्रभावभुवो मनोभेदाद्वा स्तुतिमात्रं वा कथञ्चिद्भूमविद्यायां निर्गुणायां तदसम्भवात् असताऽपि हि गुणेन स्तुतिर्भवत्येवेति॥

## भावं जैमिनिर्विकल्पामननात्॥ ११॥

शरीरेन्द्रियभेदे हि नानाभावः समञ्जसः।
न चार्थसम्भवे युक्तं स्तुतिमात्रमनर्थकम्॥

न हि मनोमात्रभेदे स्फुटतरोऽनेकधाभावो यथा शरीरेन्द्रियभेदे। अत एव सौभरेरभिर्निर्मितविविधदेहगापर्य्यायेण मान्धातृकन्याभिः पञ्चाशता विहारः पौराणिकैः स्मर्य्यते। न चार्थसम्भवे स्तुतिमात्रमनर्थकमवकल्पते। सम्भवति चास्यार्थवत्त्वम्। यद्यपि निर्गुणायामिदं भूमविद्यायां पठ्यते तथापि तस्याः पुरस्तादनेन सगुणावस्थागतैश्वर्य्यं न निर्गुणैव विद्या स्तूयते। न चान्ययोगव्यवच्छेदेनैव विशेषणम्। अयोगव्यवच्छेदेनापि विशेषणात्। यथा चैत्रो धनुर्धरः। तस्मान्मनःशरीरेन्द्रिययोग ऐश्वर्य्यशालिनां नियमेनेति मेने जैमिनिः॥

## द्वादशाहवदुभयविधं बादरायणोऽतः॥ १२॥

मनसेति केवलमनोविषया च स एकधा भवति त्रिधा भवतीति शरीरेन्द्रियभेदविषया च श्रुतिमुपलभ्यानियमभेदो